श्रीसरस्वतीप्रसादचतुर्वेदानां

चतुर्वेदविद्याधीतिबोधाचरणप्रचारणपराणामि [illegible]कमल

समर्प्यते सप्रणिपातं

वेदचयनम्

यस्ते गन्धः पृथिवि संबभूव यं बिभ्रत्योषधयो यमापः ।
यं गन्धर्वा अप्सरसश्च भेजिरे तेन मा सुरभिं कृणु
मा नो द्विक्षत कश्चन ।

यस्ते गन्धः पुष्करमाविवेश यं संजभ्रुः सूर्याया विवाहे ।
अमर्त्याः पृथिवि गन्धमग्रे तेन मा सुरभिं कृणु
मा नो द्विक्षत कश्चन ।

[ — अथर्व०, भूमिसूक्तम, १२।२२-२३ ]

# प्ररोचना

'वेदचयन' का प्रयोजन मात्र पाठ्यपुस्तक से कुछ अधिक है, ठीक उसी तरह जिस तरह कि वेद का प्रयोजन मात्र मूल स्रोत से कुछ अधिक है। वेद की प्रारम्भिक शिक्षा इतिहास की दृष्टि से उतना महत्त्व नहीं रखती, जितना भारतीय वाङ्मयमात्र को समझने के लिए प्रमाण के रूप में। तीन बातें इस वाङ्मय में मुख्य हैं, लिखित परम्परा से अधिक वाचिक परम्परा पर बल, मूल ज्ञान-सम्पद् को सतत उपबृंहित करने की अनिवार्यता में विश्वास तथा स्व के उत्सर्ग द्वारा स्वाधीनता की परिकल्पना। ये तीनों बातें वैदिक साहित्य की आधारपीठिका बनाती हैं। इस साहित्य के 'श्रुति' नाम में वाचिक परम्परा का, 'वेद' नाम में ज्ञानसंपद् का तथा 'अपौरुषेय' नाम में [illegible]धीनता का अर्थ निहित है, 'श्रुति' है, इसलिए श्रवण की इच्छा होनी च[illegible]ए, शुश्रूषा होनी चाहिए, गुरु के प्रति प्रणिपात होना चाहिए, दाय की आभार-प्रणति होनी चाहिए और होनी चाहिए उस समस्त प्राण व्यापार की झंकृति जो गुरु के उपदेश में सुनने को मिल चुकी है। इसलिए प्रत्येक अक्षर, प्रत्येक स्वर को सुरक्षित करने के लिए संहितापाठ, पदपाठ, क्रमपाठ, जटापाठ और घनपाठ जैसे उपायों का आविष्कार किया गया। संहितापाठ में इकाई अर्धर्च है, पद में अकेला पद, क्रम में एक पद उत्तरवर्ती पद के साथ संहित है और जटा में क्रम की अनुलोम और विलोम से तीन बार आवृत्ति, घन में पदों की आवृत्ति अनुलोम और विलोम क्रम से अनेक बार होती है। उन उपायों के द्वारा श्रुति की रक्षा की गयी है। बिना किसी अद्यतनलभ्य साधन के उच्चारण को यथावत् शुद्ध रखने का यह प्रयत्न समस्त विश्व के ज्ञान के इतिहास में अद्वितीय है। वेद का अर्थ है साक्षात् प्राप्ति, उपलब्धि, ज्ञान। परम्परा में ऋषि मन्त्रद्रष्टा कहे गये हैं, उसका अभिप्राय यही है कि साक्षात् अपरोक्षानुभूति के द्वारा उन ऋषियों को यह सम्पदा प्राप्त हुई। यह इसीलिए अध्येता को केवल 'स्थाणुरयं भारहारः' बनाने तक नहीं गतार्थ होती, यह सम्पदा माँगती है उसकी अपरोक्षानुभूति

का योग, उसका मनन, उसका सत्यान्वेषण, उसका उपबृंहण। वेद सबसे विलग ज्ञान राशि नहीं, वह स्मृति-पुराण-काव्य के द्वारा सतत उपबृंहित होने वाला प्रवाह है। वह ज्ञान का भटका हुआ क्षण नहीं, ज्ञान की संतानवाही शक्ति है। उसकी सबसे बड़ी घोषणा है कि 'सत्येनोत्तभितं जगत्' और 'सत्यं वै देवाः'। सत्य पर इतना बल ही भारतीय वाङ्मय को उदार बनाये हुए है, देशकाल की सीमाओं से मुक्त किये हुए है। अपौरुषेय का अर्थ है पुरुष द्वारा जो न रचित हो। लोगों ने इसका अर्थ अनादि, स्वयंभूत, अकृत आदि अनेक प्रकारों से किया है। ऐसा लगता है कि यह संज्ञा दो वस्तुएँ द्योतित करती है, एक तो यह कि ज्ञान प्राप्त करनेवाला ज्ञानाकार हो जाता है, 'जानत तुम्हहिं तुम्हहिं होइ जाई' इसलिए ज्ञाता ज्ञातृत्वाभिमानी पुरुष न होकर ज्ञानाकार अवस्था था, दूसरे, इसे प्राप्त करने के लिए जिस दृष्टि या यज्ञ की आवश्यकता है, वह यज्ञकर्ता को आहुतिमय बना देता है, उसे उसके स्व से मुक्त कर देता और वह पुरुष न होकर पुरुषातीत हो जाता है। इस प्रकार बुद्धि और भावना के एकीकरण का यह व्यापार ही अपौरुषेयता है।

इन तीन संज्ञाओं से अभिहित साहित्य वेद है। उससे हम प्रेरणा लेते हैं, प्रत्येक ज्ञान का स्रोत उसमें ढूँढ़ने की कोशिश करते हैं, प्रत्येक आचार का, प्रत्येक विश्वास का प्रामाण्य उसमें ढूँढ़ते हैं, उससे अपने इतिहास को गौरवान्वित मानते हैं, ये सारी बातें तो वेद के अध्ययन के अत्यन्त तुच्छ प्रयोजन हैं, असली प्रयोजन तो इसमें श्वास लेना है। वह परम पुरुष का निःश्वसित है, यह धारणा अपने में स्थिर करना ही इसका मूल लक्ष्य है।

प्रस्तुत चयन में इन्द्र, विष्णु, विश्वेदेव, हिरण्यगर्भ, वाक् पुरुष, शिवसङ्कल्प, इन्द्र एवं पृथिवी आदि १० सूक्त हैं। पहले छ ऋग्वेद से, पुरुष एवं शिवसङ्कल्प यजुर्वेद से, अग्निसूक्त तथा इन्द्रसूक्त ऋग्वेद से एवं पृथिवीसूक्त अथर्ववेद से संगृहीत हैं। इन्द्र एवं विष्णु में ओज तथा गति को साकार रूप प्रदान किया गया है, विश्वेदेव एवं हिरण्यगर्भ में समग्र दृष्टि है, वाक् में वाणी की संयोजन-शक्ति का विवरण है, पुरुष में यज्ञ के अर्थ का विस्तार और इस विश्व को यज्ञ में तालबद्ध देखने का प्रयत्न है, शिवसङ्कल्प में मङ्गल-भावना का उदात्तीकरण है। इस प्रकार क्रमशः ओजस्वी नृम्ण ( नरत्व ) से उरुगाय, मधु-उत्स एवं

त्रिविक्रम देवत्व तक, देवत्व से विश्वदेवत्व, विश्वदेवत्व से देवदेवत्व, देवदेवत्व से शक्ति, शक्ति से शक्ति को धारण करने वाले ऋत और ऋत से मङ्गल तक उत्तरोत्तर उत्कर्ष कराने में यह चयन कृतकार्य है। इसकी व्याख्या में सत्य के साहस के साथ-साथ परम्परा के प्रति प्रणिपात है, विशदता के साथ-साथ अन्विति है और बौद्धिक प्रखरता के साथ-साथ वाग्वैदग्ध्य है, इसलिए आशा है कि विद्वज्जन इस चयन का समादर करेंगे।

—विद्यानिवास मिश्र



# अनुवाक्

अपनी भाषा, ऋत की विचिकित्सा में साँस लेने वाली भारतीय परम्परा के दाय को सँभाले, यही भावना वेदचयन के परिसर में उभरी है। इस आदित्यवर्ण अयन' पर उँगली पकड़ कर चलाने वाले हमारे गुरु पण्डित क्षेत्रेशचन्द्र चट्टोपाध्याय की ऋतप्रसू निष्ठा की उदीषा प्रकेतों के द्वार खोलती रही है। डॉ० गोविन्दचन्द्र पाण्डेय ने यदि मुझे चिति की अनुसन्धित्सा में प्रयोजित न किया होता, तो शायद यह चयन भी न हो सकता। इसलिए इनके प्रति मेरे प्रणिपात हैं।

पण्डित विद्यानिवास मिश्र ने प्रस्तावना लिखी है, इसके लिए मै स्वयं उनसे धन्यवाद चाहूँगा क्योंकि उनकी 'ललित निबन्ध अन लिमिटेड प्राइवेट कम्पनी' टूट चुकी है ( यह सूचना, उन्हीं के निबन्ध-संग्रह—'आँगन का पछी और बनजारा मन' की 'अपनी सफाई' से मिली है )। 'प्ररोचना अनलिमिटेड प्राइवेट कम्पनी' की संयोजना कर उनके बनजारे मन को रोकने का सारा श्रेय मुझे है ( क्षणभर के लिए ही सही ), अतः मैं ही धन्यवाद का अधिकारी हूँ।

परममान्य डॉ० देवर्षि सनाढ्य के अनेक उत्साह वचनों से मैं अपने आप मुक्त हो रहा हूँ ( वैसे वे हृदयालु हैं, मुक्त करेंगे नहीं )। बन्धुवर पण्डित हेमचन्द्र जोशी तथा पण्डित राजकिशोरमणि त्रिपाठी की प्रेरणाओं का तो मैं पार्षद ही हूँ।

वेदविद्या के उन सभी मनीषियों का मैं कृतज्ञ हूँ, जिनका यहाँ अनुवदन किया गया है। मुद्रण एवं विवरण की भूलों के लिए व्याख्याकार स्वयं उत्तरदायी है, यही उसकी मौलिकता मानी जानी चाहिए।

माघी अमावस्या,<br>वि० सं० २०१८

विश्वम्भरनाथ त्रिपाठी

# विषय-अनुक्रम

# अग्निसूक्तम्

म० १ सू० १

प्रथममण्डले प्रथमं ( प्रथमानुवाके प्रथमं ) सूक्तम्

( प्रथमाष्टके प्रथमाध्याये प्रथमद्वितीयवर्गौ )

मधुच्छन्दा ऋषिः । अग्निर्देवता । गायत्री छन्दः ।

ॐ अग्निमीळे पुरोहितम्
यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ॥ १ ॥

पदपाठः

अग्निम् । ईळे । पुरःऽहितम् । यज्ञस्य । देवम् । ऋत्विजम् । होतारम् । रत्नऽधातमम् ॥ १ ॥

सायणभाष्यम् १

'अग्निमीळे इति सूक्तं प्रातरनुवाक आग्नेये क्रतौ विनियुक्तम् । स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशे खण्डे सूत्रितः—'अग्ना नो अग्न इति षळग्निमीळेऽग्निं दूतम्' इति । तत्र हीनपादग्रहणात् सूक्तनिश्चयः । 'सूक्तं सूक्तादौ हीने पादे' ( आश्व० श्रौ० १।१ ) इति परिभाषितत्वात् । तस्मिन् सूक्ते प्रथमाया ऋचो द्वितीयस्या पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः । स च द्वितीयाध्यायस्य प्रथमखण्डे सूत्रितः—'साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये' इति । तत्र कृत्स्नपादग्रहणात् ऋगित्यवगम्यते । 'ऋचं पादग्रहणे' ( आश्व० श्रौ० १।१ ) इति परिभाषितत्वात् । तथा 'संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' ( आश्व० श्रौ० १।१ ) इति परिभाषितत्वात् स्विष्टकृत्सम्बन्धनिश्चयः । तत्रापि द्वितीयमन्त्रत्वेनोदाहृतत्वात् याज्यात्वम् । यद्यपि साह्वानित्यनया पुरोनुवाक्ययैव देवताया अनुस्मरणरूपसंस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसितः—

पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता ।
विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात् ॥

पुरोनुवाक्यासमाख्यानाद् वचनाच्च समुच्चयः । देवताप्रकाशनकार्यस्यैकत्वात् । युग्मयोर्यथा विकल्पस्तथैवैकयुग्मगतयोरिति चेत् , मैवम् पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः किंच 'पुरोनुवाक्यामनूच्य याज्यया जुहोति' इति प्रत्यक्षवचनेन देवतोपलक्षणहविष्प्रदानकार्ये मेदोक्तिपुरःसरसाहित्य विधीयते । तस्मात् समुच्चय इति ॥

एतच्चाग्निमित्यादिसूक्तं नवर्चम् 'अग्नि नव मधुच्छन्दा वैश्वामित्रः' इत्यनुक्रमणिकायामुक्तत्वात् । विश्वामित्रपुत्रो मधुच्छन्दो नामकस्तस्य सूक्तस्य द्रष्टृत्वात् तदीय ऋषिः । 'ऋष गतौ' इति धातुः । 'सर्वधातुभ्य इन्' ( उ० सू० ४।५५७ ) 'इगुपधात् कित्' ( उ० सू० ४।५५९ ) । वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान् स्वयंभूर्वेदपुरुष प्राप्नोत् । तथा च श्रूयते—'अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत् तदृषयोऽभवन्' ( तै० आ० २।९ ) इति । तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनात् ऋषित्वमित्यभिप्रेत्य स्मर्यते—

युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ इति ॥

ऋष्यादिज्ञानाभावे प्रत्यवायः स्मर्यते—

अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥
ऋषिच्छन्दो दैवतानि ब्राह्मणार्थं स्वराद्यपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥ इति ॥

वेदनविधिश्च स्मर्यते—

स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च ।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥ इति ॥

अग्निमित्यादिसूक्तस्य छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम् । 'आदौ गायत्रं प्राग्घिरण्यस्तूपात्' ( अनु० १२।१४ ) इति । हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन

गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते—'छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणः' ( ऐ० आ० २।५ ) इति। अथवा चीयमानाग्निसंतापस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति—'प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वातिष्ठत् तं देवा बिभ्यतो नोपायन्ते छन्दोभिरात्मानं छादयित्वोपायन्तच्छन्दसा छन्दस्त्वम्' ( तै० सं० ५।३।६।१ ) इति। यद्वा अपमृत्युं वारयितुमाच्छादयतीति छन्दः। तदपि छान्दोग्योपनिषद्याम्नातं— 'देवा वै मृत्योर्बिभ्यतस्त्रयी विद्यां प्राविशंस्ते छन्दोभिरात्मानमच्छादयन् यदेभिरच्छादयंस्तच्छन्दसा छन्दस्त्वम्' ( छा० उ० १।४।२ ) इति। तथा द्योतनार्थं दीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते—'दिवा वै नोऽभूदिति तद्देवानां देवत्वम्' इति। अतो दीव्यतीति देवः। मन्त्रेण द्योतते इत्यर्थः। अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः। तथा चानुक्रमणिकायामुक्तम्— 'मण्डलादिष्वाग्नेयमैन्द्रात्' ( अनु० १२।१२ ) इति। तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह—

अग्निमीळ इति। अग्निनामकं देवम् ईडे स्तौमि। 'ईड स्तुतौ' इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः। तथा च पठ्यते—

'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः।
अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्॥' इति॥

मन्त्रस्य होत्राप्रयोज्यत्वादहं होता स्तौमीति लभ्यते। कीदृशमग्निम्। यज्ञस्य पुरोहितम्। यथा राज्ञः पुरोहितस्तदभीष्टं संपादयति; तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति। यद्वा। यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्। देवं दानादिगुणयुक्तम्। पुनः कीदृशम्। होतारम् ऋत्विजम्। देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथा च श्रूयते 'अग्निर्वै देवानां होता' ( ऐ० ब्रा० ३।१४ ) इति। पुनरपि कीदृशम्। रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा।

अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति ( नि० ७।१४—'अथातोऽनुक्रमिष्यामः। अग्निः पृथिवी स्थानः, तं प्रथमं व्याख्यास्यामः। अग्निः कस्मात्? अग्रणीर्भवति। अग्रं यज्ञेषु प्रणीयते। अङ्गं नयति सन्नममानः।

अक्नोपनो भवतीति स्थौलाष्ठीविः, न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः—इताद्, अक्ताद्, दग्धाद् वा नीतात्, स खल्वेतेरकारमादत्ते, गकारमनक्तेर्वा दहतेर्वा, नीः परः। तस्यैषा भवति—'अग्निमीळे' इति। अस्यायमर्थः—सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यमाकाङ्क्षितमतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते। कस्मात् प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्य 'अग्रणी' रित्यादिकमुत्तरम्। देवसेनामग्रे स्वयं नयतीत्यग्रणीः। एतदेकमग्निशब्दस्य प्रवृत्तनिमित्तम्। तथा च ब्राह्मणान्तरम्—'अग्निर्वै देवानां सेनानीः' इति। एतदेवाभिप्रेत्य बह्वृचामन्त्रब्राह्मणे आमनन्ति—'अग्निर्मुखं प्रथमो देवतानाम्' (ऐ० ब्रा० १।४) इति मन्त्रः। 'अग्निर्वैदेवानामवमः' (ऐ० ब्रा० १।१) इति ब्राह्मणम्। तथा तैत्तिरीयाश्चामनन्ति—'अग्निरग्रे प्रथमो देवतानाम्' (तै० ब्रा० २।४।३।३)। 'अग्निरवमो देवतानाम्' (तै० सं० ५।५।१।४) इति च। वाजसनेयिनस्त्वेवमामनन्ति—'स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नाम' इति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात् प्रणीयत इति द्वितीयं प्रवृत्तनिमित्तम्। सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन्नङ्गं स्वकीयं शरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तनिमित्तम्। स्थूलाष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दस्य निर्वक्ति—तत्र न क्नोपयतीत्युक्ते न स्नेहयति, किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते। इतः 'इण् गतौ' इति धातुः। अक्तः 'अञ्जू व्यक्ति-म्रक्षण-कान्ति-गतिषु' इति धातुः। दग्धो 'दह भस्मीकरणे' इति धातुः। नीतो 'णीञ् प्रापणे' इति धातुः। अग्निशब्दो ककार-गकार-निशब्दानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते, अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते, यद्वा दहतिधातुजन्याद् दग्धशब्दाद् गकारमादत्ते। नीरिति नयतिधातुः स च ह्रस्वो भूत्वा परो भवति। ततो धातुत्रयं मिलित्वाग्निशब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति—काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः। तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनायैषा 'अग्निमीळे' इत्यृग् भवतीति। तामेतामृचं यास्क एवं व्याख्यातवान्—'अग्निमीळेऽग्निं याचामि। ईळिरध्येषणाकर्मा पूजाकर्मा

वा । पुरोहितो व्याख्यातः । यज्ञस्य देवो दानाद् वा दीपनाद् वा द्योतनाद् वा द्युस्थानो भवतीति वा । यो देवः सा देवता । होतारं ह्वातारम् । जुहोतेर्होतेत्यौर्णवाभः । रत्नधातमम् रमणीयानां धनानां दातृतमम्' ( नि० ७।१५ ) इति । अस्यायमर्थः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम् । 'धातूनामनेकार्थत्वम्' इति न्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात् तदर्थतया व्याख्याताः । पुरोहितशब्दो द्वितीयेऽध्याये ( नि० २।१२ )—'यद् देवापिः शन्तनवे पुरोहितः' ( ऋ० सं० १।९८।७ ) इत्येताम् ऋचमुदाहृत्य 'पुर एनं दधति' ( नि० २।१२ ) इति व्याख्यातः । तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन 'पुर एनं दधते' ( तै० सं० २।१।२।९ ) इत्यामनन्ति । देवशब्दो दान दीपन-द्योतनानामन्यतममर्थमाचष्टे । यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति । दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति धातुभेदः । यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद् द्युस्थानो भवति । देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति । और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते । अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम् । रत्नशब्दो द्वितीयाध्याये मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः ( निघ० २।१० ) रमणीयत्वाद् रत्नत्वम् । दधातिधातुरत्र दानार्थवाचीति । तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम् ।

अथ व्याकरणप्रक्रियोच्यते । अगिधातोर्गत्यर्थात् ( धा० १।१४३ ) 'अङ्गेर्नलोपश्च' ( उ० ४।५० ) इत्यौणादि-सूत्रेण नि-प्रत्ययः, इदित्त्वान्नुमागमेन प्राप्तस्य नकारस्य लोपश्च भवति । अङ्गति स्वर्गं गच्छति हविर्नेतुमित्यग्निः । तत्र 'धातोः' ( ६।१।१६२ ) इत्यकार उदात्तः । 'आद्युदात्तश्च' ( ३।१।३ ) इति प्रत्ययगत इकारोऽप्युदात्त । 'अनुदात्तं पदमेकवर्जम्' (६।१।१५८) इति द्वयोरन्यतरमुदात्तमवशेष्येतरस्यानुदात्तत्वं प्राप्तम् । तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते । 'सति शिष्टस्वरो बलीयान्' इति हि न्यायः । ततोऽन्तोदात्तमग्निप्रातिपदिकम् । 'अनुदात्तौ सुप्पितौ' ( ३।१।४ ) इत्यमित्येतद्द्वितीयैकवचनमनुदात्तम् । तस्य 'अमि पूर्वः' ( ६।१।१०७ ) इति यत् पूर्वरूपं तदुदात्तम् ; 'एकादेश उदात्तेनोदात्तः' ( ८।२।५ ) इति सूत्रितत्वात् ।

अग्निशब्दो धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या। मतद्वयं यास्केन प्रदर्शितम्। 'नामान्याख्यातजानि शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणाना चैके'। ( नि० १।१२ ) इति। गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात् 'फिषोऽन्त उदात्तः' ( फि० सू० १।१ ) इत्यन्तोदात्तत्वम्। पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययादशेषप्रक्रिया यथोचितं कल्पनीया। एतदेवाभिप्रेत्य यास्क आह—'अथ निर्वचनम्। तद् येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याता तथा तानि निर्ब्रूयात्। अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद् वृत्तिसामान्येन। अविद्यमानेऽप्यक्षरवर्णसामान्यान् निर्ब्रूयात्, नत्वेव न निर्ब्रूयात्।' ( नि० २।१ ) इति। अस्यायमर्थः—तत् तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम्। स्वर उदात्तादिः। संस्कारो नि-प्रत्ययादिः। किञ्च तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम्। शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः। तत्र भवो गुणो गतिरूपोऽर्थः। तेनान्वितौ। तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितम्। अथ पूर्वोक्तवैलक्षण्येन कश्चित् स्वेन विवक्षितोऽर्थो नान्वितस्तस्मिञ्छब्देऽनुगतो न भवेत्। तस्यैव व्याख्यानम्—'अप्रादेशिके विकारे' इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमान् अर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्। ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा स निर्बन्धः। तदानीं स पुमान् केनचिद् वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत तस्मिञ्छब्दे योजयेत्। वृत्ति क्रिया, तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविरक्षरसामान्यान् निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादावकारोऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसामान्यान्निर्ब्रूते। दग्धशब्दाग्निशब्दयोर्गकाररूपवर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यम्।

'ईळे' इत्येतत् पदं कृत्स्नमप्यनुदात्तम्, तिङ्ङतिङः' ( ८।१।२८ ) इत्यतिङन्तादग्निशब्दात् परस्य 'इळे' इत्यस्य तिङन्तस्य निघातविधानात्। पदद्वयसंहिताकाले स्वीकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः' (८।४।६६)

इति स्वरितत्वम्। तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य 'स्वरितात् संहितायामनुदात्तानाम्' (१।२।३९) इत्यैकश्रुत्य प्रचयनामकं भवति। पुरः शब्दोऽन्तोदात्तः 'अयं पुरो भुवः' (तै० सं० ४।३।२।१) इत्यत्र तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' (५।३।३९) इति पूर्वशब्दादसप्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वरः। धाञो निष्ठाया 'दधातेर्हिः' (७।४।४२) इत्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ०' (६।२।२) इत्यादिनाव्ययपूर्वपदप्रकृतिस्वरत्वम्। यद्वा 'पुरोऽव्ययम्' (१।४।६७) इति गतिसंज्ञाया 'गतिरनन्तरः' (६।२।४९) इति पूर्वपदप्रकृतिस्वरत्वम्। तत ओकार उदात्तः। अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववद् द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयस्वरप्राप्तौ 'उदात्तस्वरितपरस्य सन्नतरः' (१।२।४०) इत्यतिनीचोऽनुदात्तः।

'यजयाच०' (पा० सू० ३।३।९०) इत्यादिना यजतेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति पश्चात् स्वरितत्वम्। देवशब्दः पचाद्यजन्तः। स च फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः। ऋत्विक्शब्द ऋतौ यजतीति विग्रहे सति 'ऋत्विग्दधृक्०' (३।२।५९) इति निपातितः। 'गतिकारकोपपदात् कृत्' (पा० सू० ६।२।१३९) इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृशब्दस्तृन्प्रत्ययान्तः, नित्स्वरेणाद्युदात्तः। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो 'नब्विषयस्यानिसन्तस्य' (फि० सू० २।३) इत्याद्युदात्तः। तथा चाम्नायते 'रत्नं धाता' (ऋ० सं० ४।३५।८) इति। रत्नानि दधातीति विग्रहः। समासत्वादन्तोदात्तो रत्नधाशब्दः। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप् प्रत्ययस्य पित्स्वरेणानुदात्तत्वे सति स्वरितप्रचितौ संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वम्।

वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः।
विज्ञातं वेदगाम्भीर्यमथ संक्षिप्य वर्ण्यते॥ १॥

## हिन्दीभाषान्तर

पुरोहित, यज्ञ के दैवी ऋत्विज् (देवों को), बुलाने वाले तथा रत्नों के श्रेष्ठ दाता अग्नि की स्तुति करता हूँ।

## टिप्पणियाँ

१. अग्निम्—अगि ( जाना ) + नि, 'अङ्गेर्नलोपश्च' ( उ० ४।२०, ४।५२ ) अङ्गति ज्वालारूपेणोर्ध्वं गच्छतीति अग्निः, अथवा अङ्ग्यतेऽसाविति। मा० धा० वृ० १.९१, वे० म० ४.५०, पे० सू० ४.५२। अग्नि शब्द का निर्वचन अनेक प्रकार से किया गया है, जिसका विवरण यास्क के निरुक्त में मिलता है। अग्र + नी + क्विप् ( पा० ३।२।६१ ), अङ्ग + नी + क्विप्। स्थौलाष्ठीवि के अनुसार नञ् + क्नूयी ( शब्द करना, गीला करना ) + क्विन्। शाकपूणि के मत मे अग्नि शब्द में तीन धातुओ का समावेश है—इण गतौ, अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु या दह भस्मीकरणे—इण् से बनने वाले अयन, अञ्ज् तथा दह से क्रमशः अकार, गकार का ग्रहण किया जाता है। इसके साथ णीञ् ( ले जाना ) धातु का नी भी जुड़ा है, जिसे ह्रस्व कर दिया जाता है। पाश्चात्य विद्वान् अग्नि शब्द की संरचना अज् धातु से करते हैं, क्योंकि लैटिन और ग्रीक भाषाओं मे समान अर्थ वाली धातु अगो विद्यमान है। यूरोपियन भाषाओं में समानार्थक शब्द हैं—लैटिन—इग्निस, स्लावी—ओग्नि, लिथुआनी—उग्निसरज़वेन्ता, लेट्टिश—उग्गुनुस मात, रूसी—अगोन, बुल्गारी—अग्नीवो ( चकमक पत्थर )।

२. ईळे—लौकिक संस्कृत में ईडे। ऋग्वेद में दो स्वरो के मध्य में स्थित डकार को ळकार पढ़ने का नियम है—'अज्मध्यस्थ डकारस्य ळकारं बह्वृचा जगुः'। भारतीय तथा पाश्चात्य विद्वानो में इस धातु के अर्थ में बहुत मतभेद है—यास्क, याचना करना अर्थ करते हैं—ईळिरध्येषणाकर्मा पूजाकर्मा वा। यास्क के टीकाकार दुर्ग के अनुसार प्रस्तुत संदर्भ में यहाँ याचना करना अर्थ है। धातुपाठ में ईड का अर्थ स्तुति करना है। महाभाष्य में—'ईडिः स्तुति चोदना याच्ञासु दृष्टः प्रेरणे चापि वर्तते'—स्तुति, याचना, उकसाना और प्रेरणा। गेल्डनर के मत से ईड का अर्थ आह्वान करना, बुलाना, विनती करना। ब्लूमफील्ड के अनुसार यह धातु इष् ( इच्छा करना ) का विकसित रूप है और यह वृ ( वरण करना ) का पर्याय है, अतएव अर्थ होगा वरण करना।

३. पुरोहितम्—पुरः—भारतीय विद्वान् पूर्व + अस्। पाश्चात्य विद्वाना के अनुसार पूर्व, पुरः, पुरा आदि प अथवा पृ धातु से बनते हैं। हितः (धा + क्त)।

हित का प्रारम्भिक रूप धित था, जो आज भी युवधित, मित्रधित जैसे शब्दा में दृष्टिगत होता है। ध के स्थान पर ह और ह के स्थान पर भ का परिवर्तन होता है। न्यग्रोध, वीरुध, एधि, जुहुधि, शाधि आदि मे ह के स्थान पर ध दिखायी पड़ता है। तुलनीय—न ह वा अपुरोहित य राज्ञो देवा अन्नमदन्ति तस्माद् राजा यक्ष्यमाणो ब्राह्मणं 'पुरो दधीत' ( पुरः + धा )।

४. यज्ञस्य—यज + नङ्, का सम्बन्ध 'ऋत्विजम्' से है न कि 'पुरोहितम्' से, क्योंकि सम्बन्धकारक जिस शब्द से सम्बद्ध रहता है प्रायः उसके पहले आता है, तथा दोनो शब्द एक ही पाद में स्थित नी हैं। यज्ञ के समान शब्द—अवेस्ता—यस्न, ग्रीक—हाग्नोस, गायिक—यस्नह्मा।

५. देवम्—यह ऋत्विज का विशेषण है, पुरोहित का नही। भारतीय व्याख्याता इसकी व्युत्पत्ति दिव् द्योतित होना + अच्—दीव्यतीति करते हैं। पाश्चात्य विद्वानो के अनुसार दिव = स्वर्ग से इसका सम्बन्ध है। मूल रूप में इस शब्द का अर्थ स्वर्ग या स्वर्ग का पुत्र था, बाद मे यह देवता अर्थ में स्वीकृत हुआ। इस दृष्टि में देव शब्द का निर्माण इस प्रकार होगा—दिव् + अण् [ 'तस्येदम्' ( ४।३।१२० ) या 'तस्यापत्यम्' ( ४।१।९२ ), 'देवब्रह्मणोरनुदात्तः' ( १।२।३८ ) निर्देश से गुण ]। यास्क—"देवो दानाद् वा, दीपनाद् वा, द्योतनाद् वा, द्युस्थानो भवतीति वा" ( निरु० ७.१५ )।

६. ऋत्विजम्—ऋतु + यज् + क्विन्, ऋतौ यजति। ऋ० सं० १०।२।१, यजिष्ठो देवाँ ऋतुशो यजाति, ऐ० ब्रा० ऋत्विज ऋतुयाजान् यजन्ति आदि।

७. होतारम्—हू + तृन्। ध्यातव्य है कि मन्त्र के प्रथम पाद में अग्नि को पुरोहित कहा गया है। दूसरे चरण में ऋत्विज। तीसरे पाद में अग्नि को होता कहकर ऋषि उसके याज्ञिक पौरोहित्य का प्रतिपादन करता है। और्णवाभ के अनुसार यह शब्द 'हु = यज्ञ करना' धातु से बनता है—जुहोतेर्होतेत्यौर्णवाभ. ( निरु० ७।४ )। यास्क और उनके अनुकारी ह्वे या हू से इसकी व्युत्पत्ति बताते हैं। ऐ० ब्रा० होता शब्द की निष्पत्ति 'आवह' से मानता है—यदन्यो जुहोति, अथ योऽनु चाह यजति च, कस्मात् तं होतेत्याचक्षते इति ? यद् वाव स तत्र यथाभाजनं देवता अमुमावहामुमावहेत्यावाहयति तदेव होतुर्होतुत्वम् ( १।२ ) मैकदोनेल और कीथ और्णवाभ की व्युत्पत्ति को

ठीक मानते हैं। बाद में मैकदोनेल ने अपने 'वेदिक रीडर' में 'हू' धातु से इसको व्युत्पन्न माना है।

८. रत्नधातमम्—रत्नानिदधातीति रत्नधाः, अतिशायी रत्नधा इति रत्नधातमः। रत्नदाताओ में श्रेष्ठ या रत्न धारण करनेवाले में उत्तम। रत्न + धा + तमप।

**अ॒ग्निः पूर्वे॑भि॒र्ऋषि॑भि॒रीड्यो॒ नूत॑नैरु॒त ।**

**स दे॒वाँ एह व॑क्षति ॥ २ ॥**

पदपाठः

**अ॒ग्निः । पूर्वे॑भिः । ऋषि॑ऽभिः । ईड्यः॑ । नूत॑नैः । उ॒त । सः । दे॒वान् । आ । इ॒ह । व॒क्ष॒ति ॥ २ ॥**

**सायणभाष्यम् २**

अयम् अग्निः पूर्वेभिः पुरातनैः भृग्वङ्गिरप्रभृतिभिः ऋषिभिः ईड्यः स्तुत्यो नूतनैः उत इदानीन्तनैरस्माभिरपि स्तुत्यः। स अग्नि स्तुतः सन् इह यज्ञे देवान् हविर्भुज आवक्षति। 'वह प्रापणे' (धा० १–९८५) इति धातुः। आहवत्वित्यर्थः। पूर्वेभिरित्यत्र 'बहुलं छन्दसि' (७।१।१०) इति भिस ऐसादेशाभावः। 'पुर्व पर्व मर्व पूरणे' (धा० १–५६८–७०) इति धातुः। पूर्वतिधातो रन् प्रत्यय औणादिकः। इन्-प्रत्ययान्तः ऋषिशब्दः। 'ऋष्यन्धक०' (४।१।११४) इति निपातनाल्लघूपधागुणाभावः। कित्प्रत्ययो वात्र ज्ञेयः (३०४–५५९)। तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यशब्दस्य ण्यत्प्रत्ययान्तत्वात् 'तित्स्वरितम्' (६।१।१८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवन्द०' (६।१।२१४)इत्यादिनाद्युदात्तत्वम्। 'नवस्य नू आदेशो त्नप्तनप्खाश्च'(५।४।३०।६) इति वार्तिकेन नवशब्दस्य नू इत्यादेशः तनन् प्रत्ययश्च महावार्तिके विहितः। ततो नित्स्वरेणाद्युदात्तः। अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु पूर्ववदुन्नेयाः। उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। 'उच्चावचेष्वर्थेषु निपतन्ति' (नि० १–४) इति निपातत्वम्। तर्हि 'निपाता आद्युदात्ताः' (फि० ४–१२) इत्युकारस्योदात्तः प्राप्त इति चेन् न, प्रातःशब्दवदन्तोदात्तत्वम्। यथा प्रातःशब्दोऽन्तोदात्तत्वेन स्वरादिषु

( १।१।३७ ) पठित एवमुतशब्दस्यापि पाठो द्रष्टव्यः । स्वरादेराकृतिगणत्वात् । यद्वा 'एकादीनामन्तः' ( फि० ४-१४ ) इत्यन्तोदात्तः । स इत्यत्र फिट्स्वरः । देवशब्दः पूर्ववत् । देवानित्यस्य नकारस्य संहितायां 'दीर्घादटि०' ( ८।३।९ ) इति रुत्वम् । 'अत्रानुनासिक०' ( ८।३।२ ) इत्युनुवृत्तौ 'आटोऽटि नित्यम्' ( ८।३।३ ) इत्याकारः सानुनासिकः । 'भो भगो०' ( ८।३।१७ ) इति रोर्यकार । स च 'लोपः शाकल्यस्य' ( ८।३।१९ ) इति लुप्यते । तस्यासिद्धत्वात् न पुनः सन्धिकार्यम् । आङो निपातत्वादाद्युदात्तत्वम् । इदमो ह-प्रत्यये सति निष्पन्नत्वात् इहशब्दे प्रत्ययस्वरः । वहतिधातोर्लोडर्थे छान्दसो लृट् । तस्य स्य-प्रत्ययगतस्य यकारस्य लोपोऽपि छान्दसः, यद्वा लेटि 'सिब्बहुलम्०' ( ३।१।३४ ) इति सिप्-प्रत्ययः । 'लेटोऽडाटौ' ( ३-४-९४ ) इत्यडागमश्च । ततो वक्षतीति सम्पद्यते । तस्य तिङन्तत्वान्निघातः । संहितास्वराः पूर्ववत् ॥

## हिन्दीभाषान्तर

अग्नि, प्राचीन और नवीन ऋषियों द्वारा स्तुति के योग्य है, वह यहाँ देवो को ले आये ।

## टिप्पणियाँ

१. पूर्वेभिः—पूर्वकालिक, प्राचीन । पूर्व + अन् + भिस् ( सायण ) । सायण के अनुसार 'पूर्व पर्व अर्व पूरणे' धातु है ( पूना संस्करण ) । 'माधवीय धातुवृत्ति' में 'पुर्व पर्व फर्व मर्व पूरणे' ( १७३ ) पाठ है । ध्यातव्य है कि काशकृत्स्न धातु पाठ मे 'पूर्व पर्व मर्व पूरणे' ( १-२६५ ) पाठ है । 'पुर्व' पाठ युक्तिसंगत और उचित है । भानुजिदीक्षित के अनुसार पूर्व शब्द— पूर्व + अच् ( नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः, ३-१-१३४ )—पूर्वति । दुर्ग के धातुपाठ की मनोरमा मे कहा गया है कि 'पुर्व' धातु है, मैत्रेय के अनुसार यह 'पुर्व' ही है—ह्रस्वमध्यपवर्गीयबकारोऽयम् । ······दन्तौष्ठ्योयमिति मैत्रेयः । 'बहुलं छन्दसि' ( ७।१।१० ) नियम से भिस् के स्थान पर ऐस् नहीं हुआ । अनेक स्थानो पर प्राचीन और नवीन दोनो प्रकार के ऋषियो का उल्लेख मिलता है, दे० ऋ० सं० ७।२२।९, ६।२१।५, ३।३२।१३ ।

२. ऋषिभिः—ऋषियो द्वारा । ऋष = प्रवहित होना; अनुभव, अनुभूति की दशा में पहुँचना; अतएव ऋषि । 'ऋषयो मन्त्रद्रष्टारः' ।

यत् पुरास्मात् सर्वस्मादिदमिच्छन्तः श्रमेण तपसारिषंस्तस्माद् ऋषयः। श० ब्रा० ६।१।१।१।

३. ईड्यः—स्तुति, प्रशंसा के योग्य। ईड् + ण्यत्।

४. नूतनैः—नवीन, नये। नव + तनन्।

५. देवाँ एह—देवान् + आ + इह। देवन् स् आ इह<देवाः ए आ इह<देवाँः आ इह<देवाँ एह।

६. वक्षति—ले आये। वह + लोट् के अर्थ में लट्।

**अ॒ग्निना॑ र॒यिम॑श्नव॒त् पोष॑मे॒व दि॒वेदि॑वे।**
**य॒शसं॑ वी॒रव॑त्तमम् ॥ ३ ॥**

पदपाठः

**अ॒ग्निना॑। र॒यिम्। अ॒श्न॒व॒त्। पोष॑म्। ए॒व। दि॒वेऽदि॑वे। य॒शस॑म्। वी॒रव॑त्ऽतमम् ॥ ३ ॥**

सायणभाष्यम् ३

योऽयं होत्रा स्तुत्योऽग्निस्तेन अग्निना निमित्तभूतेन यजमानो रयिं धनम् अश्नवत् प्राप्नोति। कीदृशं रयिम्? दिवेदिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। यशसं दानादिना यशोयुक्तम्। वीरवत्तमम्, अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः सम्पद्यन्ते। रयिशब्दो मघमित्यादिधननामसु पठितः (नि० २-१०)। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। 'इतश्च लोपः' इतीकारलोपः। 'लेटोऽडाटौ'(३-४-९४) इत्यडागमः। ततोऽश्नवदिति भवति। तस्य निघातः। घञन्तत्वात् पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' (फि० ४।१४) इत्यन्तोदात्तत्वम्। वकारान्ताद्दिवशब्दात् परस्याः सप्तम्याः 'सुपां सुलुक्' (७-१-३९) इत्यादिना शेभावे सति 'सावेकाचः' (६-१-१६८) इत्यादिना, 'ऊडिदम्पदादि' (६-१-१७१) इत्यादिना वा तस्योदात्तत्वम्। 'नित्यवीप्सयोः' (८-१-४) इति द्विर्भावे सत्युत्तरभागस्य 'अनुदात्तं च' (८-१-३) इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे सति 'अर्शआदिभ्योऽच्' (५-२-१२७) इत्यच्प्रत्ययः। चित्स्वरं

व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोः पित्त्वादनुदात्तत्वम्। 'ह्रस्वनुड्भ्याम्' (६-१-१७६) इति तु न, सावर्णान्तत्वात् 'न गोश्वन्' (६-१-१८२) इति प्रतिषेधात्॥

## हिन्दीभाषान्तर

धन, सम्पत्ति और यशस्वी, श्रेष्ठ वीर अग्नि द्वारा प्रतिदिन प्राप्त करे।

## टिप्पणियाँ

१. रयिम्—धन, वित्त। भाषा-विज्ञानियों के अनुसार यह शब्द रि से बना है, और इसका सम्बन्ध रा से है। रा का अर्थ देना है अतएव अधिकार, सम्पत्ति।

२. अश्नवत्—प्राप्त करे, पाये। भारतीय व्याख्याता इसे वर्तमानकाल का रूप मानते हैं। अश्=व्याप्त करना, वेद में यह प्रायः आत्मनेपदी है। अश्+नु+अ+त<अश् नो अ त्<अश्नवंत्, संस्कृत में अश्नुवीत।

३. दिवेदिवे—प्रतिदिन। इसी आशय में 'द्यविद्यवि' का भी प्रयोग हुआ है।

४. यशसम्—यशस्वी, कीर्ति से युक्त। कुछ भारतीय व्याख्याता इसे सज्ञा मानते हैं, पर अन्य इसे विशेषण के रूप में स्वीकारते हैं। वह 'रयिम्' और 'पोषम्' दोनो की विशेषता बताता है।

५. वीरवत्तमम्—वीरों से युक्त जनों में श्रेष्ठ। वी धातु का अर्थ है प्रजनन, अतएव शक्तिसम्पन्न जन। भाषा-विज्ञानी इसका सम्बन्ध भारोपीय भाषा के मूल-शब्द विरोस् से जोड़ते हैं। विरोस् प्राकृत भारोपीय भाषा के प्रयोक्ता थे।

इस मन्त्र में अप्रस्तुत प्रशंसा अलंकार है।

**अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑।**
**स इद्दे॒वेषु॑ गच्छति॥ ४॥**

## पदपाठः

**अग्ने॑। यम्। य॒ज्ञम्। अ॒ध्व॒रम्। वि॒श्वतः॑। प॒रि॒ऽभूः। असि॑। सः। इत्। दे॒वेषु॑। ग॒च्छ॒ति॒॥ ४॥**

## सायणभाष्यम् ४

हे अग्ने, त्वं य यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवान् असि, स इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति। प्राच्यादिचतुर्दिगन्तेष्वा-हवनीय मार्जालीय-गार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति। परिशब्देन होत्रियादि-धिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्? अध्वरम्। हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति। अग्निशब्दस्य पाष्ठिकम् (६।१।१९८) आमन्त्रितात्द्युदात्तत्वम्। न विद्यते ध्वरोऽस्येति बहुव्रीहौ 'नञ्सु-भ्याम्' (६।२।१७२) इत्यन्तोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य 'लिति' (६।१।१९३) इत्युदात्तत्वम्। परिभूरित्यत्राव्ययपूर्व-पदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम्। असीति तिङन्तस्य 'यद्वृत्तान्नित्यम्' (८।१।६६) इति निघाताभावः॥

## हिन्दीभाषान्तर

अग्नि! जिस पूजा और याग को चारो ओर से व्याप्त कर स्थित हो, वह निश्चय ही देवो के समीप पहुँचता है।

## टिप्पणियाँ

१. यज्ञम्, अध्वरम्—यज्ञ शब्द का अर्थ अध्वर शब्द की अपेक्षा अधिक व्यापक है। सम्भवतः यज्ञ में प्रार्थना पर अधिक बल दिया जाता था और अध्वर में अनुष्ठान पर। अध्वर का सम्पादन मुख्यतः अध्वर्यु करता था—ओल्डेनबर्ग। यज्ञ और अध्वर का अनेक स्थानो पर साथ-साथ प्रयोग मिलता है। दे०—१।१२८।४, १।४४।३.४।९।७, ८।१०।४, ऋ० सं०। अध्वर के लिए दे०—खोदा, अध्वर एण्ड अध्वर्यु, वि० इं० ज०, ३-२-१९६५।

२. विश्वतः परिभूरसि—विश्वतः, विश्व + तसिल् चारो ओर। परितो भव-तीति, परि + भू + क्विप्। तु०—त्वं हि विश्वतोमुख विश्वतः परिभूरसि। १।९७।६ ऋ० स०। सेदु राजा क्षयति चर्षणीनामरान्न नेमिः परिता बभूव, १।३२।१५ ऋ० सं०। सौमिक यागो में आहवनीय, मार्जालीय, गार्हपत्य, दक्षिण तथा धिष्ण्य (होता, मैत्रावरुण, अच्छावाक्, नेष्टृ, पोतृ और ब्राह्मणाच्छंसी नामक ऋत्विजों से सम्बद्ध अग्नि) अग्नि स्थापित किये जाते हैं। आनुष्ठानिक

रूप में अग्नि सम्पूर्ण यज्ञ को व्याप्त कर स्थित रहता है। देवता के रूप में भी वह सर्वत्र व्यापक एवं विभु है—

> त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः।
> यत् सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिता बभूव ॥
>
> —ऋ० सं० १।१४१।९
>
> जात आपृणो भुवनानि रोदसी अग्नेता विश्वा परिभूरसित्मना।
>
> —ऋ० स० ३।३।१०
>
> अग्ने नेमिररॉं इव देवास्त्वं परिभूरसि, आ राधश्चित्रमृञ्जसे।
>
> —ऋ० स० ५।१३।६
>
> देवो देवान् परिभूर्ऋतेन वहानो हव्यं प्रथमश्चिकित्वान्।
>
> —ऋ० सं० १।१२।२

स्कन्दस्वामी के अनुसार परिभू का अर्थ परिग्रही ( पकड़ने वाला, स्वीकारने वाला )—परि पूर्वो भवतिः सर्वत्र परिग्रहे परिग्रही भवसि।·· देवास्तमेव परिगृह्णन्ति नान्यमित्यर्थः।

३. इत्—अवधारण अर्थ में अव्यय। स्कन्दस्वामी—इच्छब्द एवार्थे। जिस प्रकार कत् और कश्चित् क से निर्मित है उसी तरह इत् इ से। यह अपने पूर्ववर्ती शब्द से सम्बद्ध रहता है। परवर्ती संस्कृत में इत् उपलब्ध नहीं होता। सम्भवतः चेत् तथा स्वित् में यह विद्यमान है। तु०, इदा, इत्था आदि।

४. देवेषु गच्छति—देवान् गच्छति तथा देवेषु तिष्ठति—देवो के समीप जाता है और वहां स्थित रहता है। ऐसा नहीं है कि वह देवो की ओर केवल जाता है—तु०—नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति—ऋ० सं० १-१२५-५। यद् वै सत्येन ह्रयते तत् तु देवान् गच्छति, श० ब्रा० २।३।१।३२।

**अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः।**
**दे॒वो दे॒वेभि॒राग॑मत् ॥ ५ ॥**

## पदपाठः

अग्निः । होता॑ । कविऽक्र॑तुः । सत्यः । चित्रश्र॑वःऽतमः । देवः । देवेभिः । आ । गमत् ॥ ५ ॥

## सायणभाष्यम् ५

अयम् अग्निः देवः अन्यैः देवैर्हविर्भोजिभिः सह आगमत् अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः ? होता होमनिष्पादकः । कविक्रतुः कविशब्दोऽत्र क्रान्तवचनः, न तु मेधाविनाम् । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा । सत्यः अनृतरहितः फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः श्रूयते इति श्रवः कीर्तिः, अतिशयेन विविधकीर्तियुक्तः । कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरत्वम् । सत्सु साधु सत्यम् । 'सत्यादशपथे' ( ५-४-६६ ) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः । लोडन्तस्य गच्छत्विति शब्दस्य छत्वाभावः । उकारलोपश्छान्दसः ततो रूपं गमदिति भवति । स्पष्टमन्यत् ॥

## हिन्दीभाषान्तर

( देवताओं का ) आवाहन करने वाला, कवि की प्रज्ञा से युक्त, सत्य तथा पूज्य यशस्वियों में श्रेष्ठ अग्निदेव देवताओं के साथ ( यहाँ ) आये ।

## टिप्पणियाँ

१. कविक्रतुः—कविः क्रतुः यस्य सः ( बहु० ) । सायण के अनुसार कवि शब्द 'कु शब्दे' धातु से बनता है—कौतीति कविः—कु + इ ( अच इः, उ० ४ । १३४ ) । दशपादी उणादिवृत्ति में—कु शब्दे या कुङ् अव्यक्ते शब्दे धातु में इन् प्रत्यय लगाकर कवि शब्द की व्युत्पत्ति दी गयी है—( इन् १।४६ उ० )—कौति, कवते, कूयते वा कविः काव्यकृत् विद्वान् शब्दकारः । काशकृत्स्न धातुपाठ के व्याख्याता चन्नवीरकवि कुङ् शब्दे—कवते इति—, कु शब्दे—कौतीति—, कुङ् शब्दे—कुवते इति—इन सभी धातुओं से कवि शब्द की निष्पत्ति स्वीकारते हैं । यास्क कुङ्—कवते—तथा क्रमु धातु से कवि शब्द की संरचना मानते हैं—कविः क्रान्तदर्शनो भवति कवतेर्वा (निरु० १२।१३) । निघण्टु के टीकाकार देवराज यज्वा क्रम या कुङ धातु में इन

प्रत्यय लगाकर कवि शब्द की सिद्धि मानते हैं (इन् सर्वधातुभ्यः उ० ४।११४)। कवि शब्द निघण्टु ( ३।१५ ) में मेधावी शब्द के पर्यायो मे पठित है। यास्क कवि का अर्थ मेधावी तथा क्रान्तद्रष्टा करते हैं—मेधावी कविः क्रान्तदर्शनो भवति ( निरुक्त० १२।१३ )। कवि का अर्थ है बुद्धिमान, मेधावी, प्रज्ञावान् क्योंकि वह भूत, वर्तमान और भविष्य के पदार्थों को अपनी विलक्षण मति से एक साथ देखता है—'अतीतानागतविप्रकृष्टविषयं युगपद् दर्शनं यस्य स क्रान्तदर्शनः'—उव्वट; 'अतीतानागतदूरेवर्त्तिपदार्थाना यस्य युगपज्ज्ञानं स कविः'—महीधर; वा० स० २।४। सायण को यहाँ क्रान्तदर्शन अर्थ ही अभीष्ट है। सम्भवतः उनकी दृष्टि में मेधाविता और क्रान्तदर्शनता विभिन्न विषयक हैं। तु० सायण, ऋ० सं० १।११७।२३; ५।११।३। स्कन्दस्वामी भी क्रान्तद्रष्टा अथवा क्रान्तकर्मा अर्थ करते हैं—क्रान्तं गतं सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः। वेंकटमाधव क्रान्तप्रज्ञ अर्थ स्वीकारते हैं। कविक्रतु के लिए दे०—स हि यो मानुषा युग सीदद्धोता कविक्रतुः—ऋ० सं० ६।१६।२३ क्रतवः—सायण के अनुसार इस शब्द का अर्थ महायज्ञ है। इस अर्थ के अतिरिक्त उव्वट, महीधर संकल्प अर्थ भी स्वीकारते हैं। रॉथ इसका अर्थ शक्ति तथा मैकदोनेल सामर्थ्य करते हैं। पेत्रोगार्द कोश का अनुसरण करते हुए मोनियर विलियम्स अन्तर्दृष्टि, शक्ति या विचारणा अर्थ उपयुक्त समझते हैं। वस्तुतः क्रतु शब्द का अर्थ करना सरल नही है। व्यक्ति, पदार्थ या धारणा में स्थित वे अनुभव-विधाएँ जिनसे तत्तद्वस्तुओ मे प्रभविष्णुता या शक्तिशालिता आती है, क्रतु को बोधगम्य बनाने में समर्थ हैं। शारीरिक तथा बौद्धिक सामर्थ्य का भी यह शब्द द्योतक है। सायण ने एक अन्य स्थल पर इसका अर्थ प्रज्ञा किया है—ऋ० १।२५।१२—'सुक्रतुः शोभनप्रज्ञः' सा०। यज्ञ अर्थ में क्रतु शब्द प्रायः ऋग्वेद में नहीं व्यवहृत हुआ है। श० : 'स यदेव मनसाकामयत इदं मे स्यादिदं कुर्वीयेति स एव क्रतुः' ४।१।४।१, कदाचित् क्रतु के मौलिक अर्थ की अभिव्यक्ति करता है। ग्रीक शब्द 'क्रेतोस' (शक्ति, बल) से यह तुलित हो सकता है। अवेस्ता में प्रयुक्त 'ख्रतु' (कर् बुद्धि ) भी इसी का समानधर्मा है। यहाँ बुद्धि, प्रज्ञा अर्थ अधिक युक्तिसंगत है। इसकी व्युत्पत्ति है : करोति क्रियते वा क्रतुः कृञ् + कतु ( उ० १।८० )। [ क्रतु के लिए देखिए। खोंदा, 'इपिथेट्स इन दि ऋग्वेद', पृ० ३७ आदि, पाद टिप्पणी, ११ ]।

२. सत्यः—सच्चा, सत्य। सायण अन्यत्र—ऋ० सं० १।१४५।५—इस शब्द की कई व्युत्पत्तियाँ प्रस्तुत करते हैं—सत् क्रियमाणं कर्म तत्र साधुः। सत् सुभवो भव। सत् फलं तदर्हतीति वा। सत् में यत् प्रत्यय लगाकर सत्य शब्द की सिद्धि नही स्वीकारी जा सकती; क्योकि यहाँ यह अन्तोदात्त है। यत् प्रत्यय होने पर 'यतोऽनावः' से आदि अक्षर मे उदात्त होता है। इसीलिए हरदत्त पदमंजरी में कहते हैं कि सत्य शब्द य-प्रत्ययान्त है—सत्+य—अतएव पाणिनि ने 'सत्यादशपथे' (५।४।६६) मे सत्य को अन्तोदात्त पढ़ा है—सत्सु साधु सत्यम्, प्राग्धितीये यति प्राप्तेऽस्मादेव निपातनाद् यः। अन्तोदात्तो हि सत्यशब्दः—सत्येनोत्तभिता भूमिः (ऋ० सं० १०।८५।१), ऋतञ्च सत्यञ्च (ऋ० सं० १०।१९०।१), इति।

स हि सत्यो यं पूर्वेचिद् देवासश्चिद् यमीधिरे। ऋ० सं० ५,२५।२।

सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः।

येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत् सत्यस्य परं निधानम्॥

मु० उ० ३।१।६।

३. चित्रश्रवस्तमः—चिनोति, चीयते वेति चित्रम् (अमिचिनिदिशसिभ्यः क्त्रः उ० ४।१७२) श्रूयते इति श्रवः, चित्रं श्रवो यस्य सः चित्रश्रवाः, अतिशायी चित्रश्रवाः इति चित्रश्रवस्तमः। विविध अतिशायिनी कीर्ति से युक्त। श्रवस् शब्द अब केवल व्यक्तिवाचक संज्ञाओ में ही उपलब्ध है—उच्चैःश्रवा, भूरिश्रवाः, वाजश्रवाः। स्कन्दस्वामी 'चायृ पूजानिशामनयो' से चित्र शब्द बनाकर पूजनीय अर्थ करते हैं। आगे चलकर वैकल्पिक रूप में इसका अर्थ विचित्र भी करते हैं। श्रवस् का अर्थ इनके अनुसार, अन्न, धन या कीर्त्ति है।

४. गमत्—गम्+लेट्+तिप्, ए० व०। सायण द्वारा सही व्युत्पत्ति अन्यत्र दी गयी है—गमेर्लेटस्तिप्। इतश्च लोपः परस्मैपदेषु (३।४।९७) इतीकारलोपः। बहुलं छन्दसि (२।४।७३) इति शपो लुक्। लेटोऽडाटौ (३।४।९४) इत्यडागमः। आगमा अनुदात्ताः (महाभाष्य ३।१।३।७) इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते।

**यदुङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि।**
**तवेत्तत्सुत्यमङ्गिरः॥ ६॥**

## पदपाठः

यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि । तव । इत् । तत् । सत्यम् । अङ्गिरः ॥ ६ ॥

## सायणभाष्यम् ६

अङ्गेत्यभिमुखीकरणार्थो निपात. । अङ्गाग्ने हे अग्ने, त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थम्, यद् भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद् भद्रं तवेत् तवैव सुखहेतुरिति शेष । हे अङ्गिर. ! अग्ने ! एतच्च सत्य न त्वत्र विसंवादोऽस्ति । यजमानस्य वित्तादिसम्पत्तो सत्याम् उत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति। भद्रशब्दार्थे शाख्यायनिनः समामनन्ति 'यद्वै पुरुषस्य वित्तं तद् भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रं' इति । अङ्गशब्दस्य निपातत्वेऽप्यभ्यादित्वाद् अन्तोदात्तत्वम् । 'दाश्वान् साह्वान्०' ( ३-१-१२ ) इतिसूत्रेण 'दाशृ दाने' ( धा० १-८६७ ) इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः । आमन्त्रितस्याग्निशब्दस्य पदात् परत्वेनाष्टमिळानुदात्तत्वं ( ८-१-१९ ) न शङ्कनीयम्, 'अनुदात्तं सर्वमपादादौ' ( ८-१-१८ ) ( १-१८ ) इति पर्युदस्तत्वात् । तत. षाष्ठिकम् ( ६-१-१९८ ) आद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेन (फि० २-१३) आद्युदात्तत्वप्रसक्तावपि 'भदि कल्याणे' ( धा० १-१२ ) इति धातोरुपरि रक्प्रत्ययेन ( उ० २-२९ ) निपातनाद् अन्तोदात्तत्वम् । अस्मिन् वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदिहन्त' (८-१-३०) इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सति शिष्टेन करिष्यसि शब्द उपान्त्योदात्तः । तवेत्यत्र 'युष्मदस्मदोर्ङसि' ( ६-१-२११ ) इत्याद्युदात्तत्वम् । 'अङ्गिरा अङ्गाराः' इति यास्कः ( नि० ३-१७ ) ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति—'येऽङ्गाराः आसँस्तेऽङ्गिरसोऽभवन् ।' ( ऐ० ब्रा० ८-१० ) इति । तस्मादङ्गिरोनामकमुनिकारणत्वात् अङ्गाररूपस्याग्नेरङ्गिरस्त्वम् । अत्र पदात् परत्वेनाष्टमिकानुदात्तत्वम् ॥

## हिन्दीभाषान्तर

अग्नि ! तुम यजमान का जो भी भला करोगे, अंगिरा ! तुम्हारा वह ( मन्तव्य ) सत्य ही होता है ।

## टिप्पणियाँ

१. अङ्ग—वस्तुतः यह शब्द ऋग्वेद में अवधारणार्थक है—तु० सायण—अङ्गेति निपात एवार्थे, ऋ० सं० १०. ४. ४। सभी भारतीय व्याख्याता तथा सायण भी अ० स० १. १६. २, २. ३. २ आदि ऋ० सं० ३. ३३. १, भी अङ्ग को आमन्त्रण के अर्थ को बताने वाला निपात मानते हैं—अङ्गेत्यामन्त्रणे। ऋ० सं० १०. १२०. ७ में इसे प्रसिद्धि अर्थ वाला कहा गया है—अङ्गेति प्रसिद्धौ। सम्भवतः अनुवर्ती युग में यह सम्बोधन अथवा पूजार्थक निपात के रूप में स्वीकारा गया।

२. दाशुषे—दाश् देना + क्वसु निपातनात्सिद्ध, द्वित्व और इट् के अभाव का निपातन, दाश्वस् च० ए० व०। दाश्वान्साह्वान्मीढ्वांश्च (६. १. १२)। द्वित्वरूप ददाशुषे का कम से कम चार बार ऋग्वेद में प्रयोग मिलता है। इसी तरह विविद्वान् भी मिलता है।

३. अङ्गिरः—अङ्गारेभ्यः सृतः इत्यङ्गिराः—अगि (गतौ) + असि (इरुडागम)—अङ्गतेरसिरिरुडागमश्च (उ० ४. २४१); अङ्गार + सृ + असि—सृ गतौ, अङ्गारशब्दोपपदे धातुलोपो निपात्यते, उपपदान्तलोपः, उपधेत्वं च (द० उ० वृ०)। ये अङ्गारा आसंस्तेऽङ्गिरसोऽभवन्, ऐ० ब्रा० ३.३४।

त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः।
आहरत् सहितः साध्यैर्विश्वेदेवैः सहेति च॥
तत्र वाग् दीक्षणीयायामाजगाम शरीरिणी।
तं दृष्ट्वा युगपत् तत्र कस्याथ वरुणस्य च॥
शुक्रं चस्कन्द तद् वायुरग्नौ प्रास्यद् यदृच्छया।
ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः॥

—बृहद्देवता ५.९७–९९

**उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम्।**
**नमो॒ भर॑न्त॒ एम॑सि॥ ७॥**

## पदपाठः

उप । त्वा । अग्ने । दिवेऽदिवे । दोषाऽवस्त । धिया । वयम् । नमः । भरन्तः । आ । इमसि ॥ ७ ॥

## सायणभाष्यम् ७

हे अग्ने, वयम् अनुष्ठातारो दिवेदिवे प्रतिदिनम् दोषावस्तः रात्रावहनि च धिया बुद्धया, नमो भरन्तः नमस्कारं सम्पादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः। उपशब्दस्य निपातस्वरः ( फि० ४-१२ ) । 'त्वामौ द्वितीयायाः' (८-१-२३) इति युष्मच्छन्दस्यानुदात्तस्त्वादेशः । [ दोषोवस्तः ] दोषा शब्दो रात्रिवाची वस्तरित्यहर्वाची । द्वन्द्वसमासे कार्त्तकौजपादित्वात् (६-२-३७) आद्युदात्तः । 'सावेकाचः' ( ६-१-१६८ ) इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरन्त इत्यत्र शपः पित्त्वाच्छतुर्थसार्वधातुकत्वाच्चानुदात्तत्वे सति धातुस्वरः शिष्यते । इमसीत्यत्र— 'इदन्तो मसि' ( ७-१-४६ ) इत्यादेशो निघातश्च ॥

## हिन्दीभाषान्तर

अन्धकार को प्रकाशित करने वाले अग्नि ! हम कर्म या स्तुतियों द्वारा नमस्कार करते हुए तुम्हारे पास आते हैं ।

## टिप्पणियाँ

१. उप एमसि—उपेमसि, अनुवर्ती संस्कृत में उपेमः । मस के सदृश ऋग्वेद में मसि भी मिलता है ।

२. दोषावस्तः—भारतीय व्याख्याता इसे सम्बोधन पद मानते हैं—स्कन्दस्वामी, रात्रौ स्वेन ज्योतिषा तमसामाच्छादयितः । माधव, दोषाया आच्छादयितः । दोषा निशा भवति । दोषेति रात्रेर्नाम वस्ता आच्छादयिता । रात्रौ स्वेन ज्योतिषा तम आच्छादयितरित्यर्थः । भरत, दोषा रात्रि तस्या विवासयितः, तमोनाशकेत्यर्थः । सायण ऋ० सं० ४.४.९ में इसे वैकल्पिक रूप में सम्बोधन मानकर अर्थ करते हैं और ऋ० सं० ७.१५.१५ में केवल सम्बोधन मानते हैं ।

प्रस्तुत सन्दर्भ में सायण इसे द्वन्द्व स्वीकारते हैं । पर यदि इसे द्वन्द्व माना जाय तो उदात्त प्रथम पद के प्रथम अक्षर में नहीं हो सकता । भट्टभास्कर का

अनुकरण करते हुए सायण कार्त्तकौजपादयश्च नियम का आश्रय ग्रहण कर उपर्युक्त समस्या का समाधान प्रस्तुत करते हैं। परन्तु यदि 'कार्त्तकौजपादि' को आकृतिगण भी मान लिया जाय तो भी प्रश्न उलझा ही रहता है, क्योंकि इस स्थिति में उदात्त स्वर प्रथम पद के द्वितीय अक्षर में होगा। शाकल्य के अनुसार पदपाठ मे द्वन्द्व अवगृहीत नही होता। 'दोषावस्तः' अवगृहीत है, अतएव यहाँ द्वन्द्व सम्भव नही है। वस्तुतः अन्य प्रमाणो से भी—आश्व० श्रौ० ३.१२.४, शा० गृ०, ७.५.४—'दोषावस्त:' सम्बोधन पद ही सिद्ध होता है, द्वन्द्व नही। दोषावस्तः के लिए डे० प्रिसेस ऑफ वेल्स सरस्वती भवन स्टडीज, भाग ८, पृ० ९१-९६।

३. धिया—धी—विचार, स्तुति, धार्मिक विचार, भक्ति, श्रद्धा, कर्म आदि।

**राजन्तमध्वराणां गोपामृतस्य दीदिविम्।**

**वर्धमानं स्वे दमे ॥ ८ ॥**

### पदपाठः

**राजन्तम्। अध्वराणाम्। गोपाम्। ऋतस्य। दीदिविम्। वर्धमानम्। स्वे। दमे ॥ ८ ॥**

### सायणभाष्यम् ८

पूर्वमन्त्रे त्वामुपेम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्? राजन्तम् देदीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानाम्। गोपाम् रक्षकम्। ऋतस्य सत्यस्यावश्यम्भाविनः कर्मफलस्य दीदिविम् पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम्। राजन्तं वर्धमानमित्यत्रोभयत्रपूर्ववद्धातुस्वरः शिष्यते। दीदिविंशब्दस्य 'अभ्यस्तानामादिः' (६-१-१८९) इत्याद्युदात्तत्वम्। दम-शब्दो वृषादित्वात् (६-१-२०३) आद्युदात्तः ॥

### हिन्दीभाषान्तर

यज्ञ के शासक, ऋत के देदीप्यमान रक्षक, अपने घर में बढने वाले (अग्नि! हम तुम्हारे पास आते हैं)।

## टिप्पणियाँ

१. राजन्तम्—राज् (दीप्तौ—प्रकाशित होना) + शतृ, द्वि० ए० व० । शासन करने वाले को । प्रायः सम्बन्धवाचक शब्द सम्बन्धी शब्द का पूर्ववर्त्ती होता है। अतएव भारतीय व्याख्याता—अध्वराणा गोपाम् और ऋतस्य दीदिवम् अन्वय करते हैं । परन्तु यहाँ अत्यन्त स्पष्ट है कि राजन्तम् को सम्बन्धवाचक शब्द की आवश्यकता है । अतएव अध्वराणा राजन्तम् अन्वय करना ठीक प्रतीत होता है । इसी दृष्टि से स्कन्दस्वामी अर्थ करते हैं—राजन्तम् ईशानम् । कस्य ? अध्वराणा यज्ञानाम् । गोपा रक्षितारं ऋतस्य यज्ञस्यैव । दीदिविम् अत्यर्थदीप्तम् । वर्धमानं स्व आत्मीये दमे यज्ञगृहे । ऋ० सं० १-४५-४ मे पुनः राजन्तमध्वराणाम् आता है, वेंकटमाधव इसका अर्थ करते हैं—ईशानं यज्ञानाम् ।

२. गोपाम्—रक्षक ।

३. ऋतस्य—ऋत का अर्थ है प्राकृतिक विधान, नैतिक नियम । ऋत के कारण सूर्य अपनी गति मे रहता है, दिन, रात, मास, ऋतु और संवत्सर निरन्तर आवर्त्तित होते रहते हैं। यज्ञ भी विधिपरक है और सृष्टि-प्रक्रिया का प्रज्ञापक है, अतएव उसे भी ऋत कहते हैं । अग्नि यज्ञ का रक्षक इसलिए कहा गया है कि वह न केवल विघ्नो से बचाता है, अपितु उसके अभाव में यज्ञ के अनुष्ठान असम्भाव्य हैं ।

४. दीदिवम्—दिव् + क्विन् दीव्यतीति । दिवो द्वे दीर्घश्चाभ्यासस्य (३-४-५७)। अत्यन्त प्रकाशित होने वाला, देदीप्यमान । भट्टोजि—क्विन्नित्यनुवर्तमाने दिवो द्वे दीर्घश्चाभ्यासस्येति । दीव्यतेरौणादिकः क्विन्प्रत्ययः वलिलोपः ।

५. दमे—दम उपशमने + घञ् ( नोदात्तोपदेशस्य, पा० ७.३.३४ इति वृद्धि-निषेधः ) । ग्रीक, दोमोस् ; लैटिन, दोमुस् ; अवे, दम् ; लिथुआनी, बुटस् ; चर्च-स्लावी, दोमु; सर्वोक्रेटी, डोम् ; बोहेमियन, दुम्; पोलिश, डोम् ।

इस मन्त्र के प्रथम और तृतीय पाद मे एक-एक अक्षर कम है, अतएव इसे विराट् गायत्री कहा गया है—द्वाभ्यां विराट स्वराजौ, पिं० ३-६० ।

**स नः पितेव सूनवेऽग्ने सूपायनो भव ।**
**सचस्वा नः स्वस्तये ॥ ९ ॥**

### पदपाठः

सः । नः । पिताऽइव । सूनवे । अग्ने । सुऽउपायनः । भव । सचस्व । नः । स्वस्तये ॥

### सायणभाष्यम् ९

हे अग्ने ! स त्वं नः अस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव । तथा नः अस्माकं स्वस्तये विनाशराहित्यार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत् । अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्' (८।१।१८) इत्यनुदात्तत्वम् । 'चादयोऽनुदात्ता' ( फि० ४-१६ ) इति इवशब्दोऽनुदात्तः । 'इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं न वक्तव्यम्' ( २।१।४।२ ) इति समस्त पितेवेति शब्दो मध्योदात्तः । [ सूपायनशब्दस्य ] शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' ( ७।२।१७२ ) इत्यन्तोदात्तत्वम् । सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः, सार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥

### हिन्दीभाषान्तर

अग्नि ! तुम हमारे लिए सुगम बनो; जैसे पिता अपने पुत्र के लिए ( सुगम होता है ) तथा हमारे कल्याण के लिए हमसे संसक्त रहो ।

### टिप्पणियाँ

१. पितेव—पिता के सदृश । यह समस्त पद है, अतएव इसे अवगृहीत कर पदपाठ में अलग किया गया है । इव उदात्तस्वररहित और अपने पूर्व पद से सम्बद्ध सर्वत्र मिलता है । इससे यह ज्ञात होता है कि प्राचीन काल में इव अपने पूर्ववर्ती पद के साथ समास बनाता है । ऋग्वेद तथा अथर्ववेद में इस परम्परा का पदपाठ में सर्वत्र पालन किया गया है ।

सूनु—अवे, हुनुस्; गा, सुनुस्, लिथु, सुनुस; प्राचीन नार्स, सुन्र्; सोन्र्; डेनिश, सोन्, स्वीडिश, सन्; प्रा. इं., सुनु; म. इं., सुने, सोने; प्रा. उ. ज., सुन् (उ); म. उ. ज., सुनुः न. उ. ज., सोहन्; चर्चस्लावी, सिनु; सर्वोक्रेटी, बोहेमियन, पोलिश, रूसी, सिन्, सीन् ।

पितेव—पुत्र के लिए पिता के समान । तु०—

वयं स्याम मार्तुन सूनवः, ऋ० सं० ७।८१।४

पितेव सोम सूनवे सूशेवः, ऋ० सं० ८।४८।४

त्वामग्ने पितरमिष्टिभिर्नरस्त्वां भ्रात्राय शम्या तनूरुचम् ।
त्वं पुत्रो भवसि यस्तेऽविधत् त्वं सखा सुशेवः पास्याधृषः ॥

—ऋ० सं० २।१।९

अग्नि मन्ये पितरमग्निमापिमग्निं भ्रातरमित् सखायम् ।

—ऋ० सं० १०।७।३

२. सूपायनः—सु + उप + इण् (गतौ + युच्) (छन्दसि गत्यर्थेभ्यः, ३।३।१२९), सु सुखेन उपायनम् उपगमनं प्रापण यस्य सः। सुगम, सुप्राप्य, सरलता से पहुँच के योग्य। भट्टभास्कर—सूपायनः सूपचरणः सुखेनोपचरणीयः परिचरणीयो वा भव""""शोभनोपायो वा। सायण अन्तिम व्याख्या को यहाँ स्वीकारते हैं, यद्यपि वे ऋ० सं० १०।१८।११ में सूपायना का अर्थ करते हैं—शोभनोपगमना सूपचारिका, अ० सं० १८।३।५० में—सूपायनास्मै भव सूपासर्पणा—सूपायना सुखेनोपगन्तुमर्हा सूपसर्पणा शोभनोपसर्पणयुक्ता च भव। स्कन्दस्वामी—सूपायनः सूपगमः सुखोपसर्पो भव। वेंकटमाधव—सूपचरः।

३. सचस्वा—छन्दोगत लय की दृष्टि से दीर्घ अन्यथा सचस्व षच् सेचने अथवा सेवने आत्मनेपदी है और षच् समवाये उभयपदी। प्रायः इस धातु का अर्थ साथ मे लगना, मिलना, संसक्त होना है। षच् + लोट् + थास्।

४. स्वस्तये—सु + अस् + क्तिन्, च० ए० व०। ऋग्वेद मे स्वस्ति अव्यय के रूप मे नही है, अपितु इसके रूप चलते हैं—स्वस्तिः, स्वस्तिम्, स्वस्तौ, स्वस्तौ आदि। इसी दृष्टि से भट्टभास्कर—स्वस्तय इति विभक्त्यन्त प्रतिरूपोऽव्ययः, और सायण ऋ० सं. २।३८।१ मे, यद्यपि स्वस्तिशब्दो विभक्त्यन्तनिर्दिष्टः शब्दपरस्तथाप्यपर्यवसानादर्थपरो भवति—कथन उचित नही प्रतीत होता। यह पदपाट मे अवगृहीत नहीं होता, क्योंकि अस्ति की स्वतन्त्र संज्ञा के रूप में उपलब्धि नही है।

# इन्द्रसूक्तम्

मं० १ सू० ३२

प्रथममण्डले द्वात्रिंशत्तमं ( सप्तमेऽनुवाके द्वितीयं ) सूक्तम्
( प्रथमाष्टके द्वितीयाध्याये षट्त्रिंशत्सप्तत्रिंशत्
अष्टात्रिंशतः वर्गाः )

आङ्गिरसो हिरण्यस्तूप ऋषिः । इन्द्रो देवता । त्रिष्टुप् छन्दः ।

## सायणभाष्यम्

'इन्द्रस्य नु वीर्याणि' इति पंचदशर्च द्वितीयं सूक्तम् । आङ्गिरसो हिरण्यस्तूप ऋषिः । त्रिष्टुप छन्दः । इन्द्रो देवता । 'इन्द्रस्य पञ्चोना' इत्यनुक्रमणिका । अग्निष्टोमे माध्यन्दिने सवने निष्केवल्यशस्त्रे 'इन्द्रस्य नु वीर्याणि' इति निविद्धानीयं सूक्तम् । 'निष्केवल्यस्य' इति खण्डे 'इन्द्रस्य नु वीर्याणीत्येतस्मिन्नैन्द्री निविदं दध्यात्' ( आश्व० श्रौ०, ५.१५ ) इति । विषुवत्यपि तस्मिन् शस्त्रे एतद् विनियुक्तम् । 'विषुवान् दिवाकीर्त्यः' इति खण्डे सूत्रितम्—'इन्द्रस्य नु वीर्याणीति एतस्मिन्नैन्द्रीं निविदं शस्त्वा ( आश्व० श्रौ० ८.६ ) इति । महाव्रते निष्केवल्येऽप्येतदेव विनियुक्तम् । 'राथन्तरो दक्षिणः पक्षः' इति खण्डे 'चतस्रः सतीः षड् बृहतीः करोतीन्द्रस्य नु वीर्याणि प्रवोचम्' ( ऐ० आ० ५. २. २ ) इति ॥

इन्द्र॑स्य॒ नु वी॒र्या॑णि॒ प्र वो॑चं॒
या॒नि॑ च॒कार॑ प्रथ॒मानि॑ व॒ज्री ।
अह॒न्नहि॒मन्व॒पस्त॑तर्द॒
प्र व॒क्षणा॑ अभिन॒त्पर्व॑तानाम् ॥ १ ॥

### पदपाठः

इन्द्र॑स्य । नु । वी॒र्या॑णि । प्र । वो॒च॒म् । यानि॑ । च॒कार॑ । प्र॒थ॒मानि॑ । व॒ज्री । अह॑न् । अहि॑म् । अनु॑ । अ॒पः । त॒त॒र्द॒ । प्र । व॒क्षणाः॑ । अ॒भि॒न॒त् । पर्व॑तानाम् ॥ १ ॥

## सायणभाष्यम् १

वज्री वज्रयुक्त इन्द्रः प्रथमानि पूर्वसिद्धानि मुख्यानि वा यानि वीर्याणि पराक्रमयुक्तानि कर्माणि चकार। तस्येन्द्रस्य तानि वीर्याणि नु क्षिप्रं प्रब्रवीमि। कानि वीर्याणि इति तदुच्यते। अहिं मेघम्। अहन्। हतवान्। तदेतदेकं वीर्यम्। अनु पश्चादपो जलानि ततर्द। हिंसितवान्। भूमौ पातितवानित्यर्थः। इद द्वितीयं वीर्यम्। पर्वतानां सम्बन्धिनीर्वक्षणाः प्रवहणशीला नदीः प्राभिनत्। भिन्नवान्। कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम। एवमुत्तरत्रापि द्रष्टव्यम्। वीर्याणि। 'शूरवीर विक्रान्तौ'। ण्यन्तादचो यदिति यत् (पा० ३-१-९७) णेरनिटीति (पा० ६-४-५१) णिलोपः। तित्स्वरितमिति (पा० ६-१-१८५) स्वरितत्वम्। यतोऽनावः (पा० ६-१-२१३) इत्याद्युदात्तत्वं न भवति। आद्युदात्तत्वे हि सुशब्देन बहुव्रीहौ आद्युदात्तं द्व्यच्छन्दसि (पा० ६-२-११९) इत्यनेनैवोत्तरपदाद्युदात्तत्वस्य सिद्धत्वाद्वीरवीर्यौ च (पा० ६-२-१२०) इति पुनस्तद्विधानमनर्थकं स्यात्। अतोऽवगम्यते यतोऽनाव (पा० ६-१-२१३) इत्याद्युदात्तत्वं वीर्यशब्दे न प्रवर्तत इति। अतः परिशेषात्तित्स्वरितम् (पा० ६-१-१८५) इति प्रत्ययस्य स्वरितत्वमेव। वोचम्। अस्यतिवक्तिख्यातिभ्योऽङ् (पा० ३।१।५२) इति च्लेरङादेशः। बहुलं छन्दस्यमाङ्योगेऽपि (पा० ६-४-७५) इत्यडभावः। चकार। णलि लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वम्। यद्वृत्तयोगादनिघातः। अहन्। लङि इतश्चेतीकारलोपं हल्ङ्याब्भ्यः (पा० ६-१-६८) इति तकारलोपः। अहिम्। आङ्पूर्वाद्धन्तेः आङि श्रियनिभ्यां ह्रस्वश्च (उ० ४-१३७) इतीण्प्रत्ययः। आङो ह्रस्वत्व च शब्देन वेञो डित् (उ० ४।७२) समाने ख्यश्चोदात्त (उ० ४-१३६) इति डित्वं पूर्वपदान्तोदात्तत्वं चानुकृष्यते। ततष्टिलोपे पूर्वपदस्योदात्तत्वम्। उतृदिर् हिंसानादरयोः। तिङ्ङतिङ इति निघातः। वक्षणाः। वक्ष रोषे। क्रुधमण्डार्थेभ्यश्च (पा० ३-२-१५१) इति युच् चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वर।

## हिन्दीभाषान्तर

अब (मैं) इन्द्र के पराक्रमो का कथन करूँगा, जिन्हें वज्रधारी ने पहले किया था। (उसने) अहि को मारा, जल का भेदन किया (तथा) पर्वतो को काटकर नदियो को बहाया।

टिप्पणियाँ—भारतीय व्याख्याताओं ने इन्द्र की अनेक व्युत्पत्तियाँ प्रस्तुत की हैं :—

इन्धी दीप्तौ ( प्रदीप्त होना, प्रकाशित होना ) <रन्, इन्धे (भूतानि) इति इन्द्रः—स योऽयं मध्ये प्राणः एष एवेन्द्रः, प्राणान् मध्यत इन्द्रियेणैन्ध, यद्धैन्ध तस्मादिन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षम्, परोक्षकामा हि देवाः; श० ब्रा० ६।१।१।२। [ तद् येदेनं प्राणैः समैन्धंस्तद् इन्द्रस्येन्द्रत्वमिति विज्ञायते, निरु० १०।१ ]

मध्य प्राण इन्द्रियों के द्वारा अन्य प्राणों को समिद्ध करता है, अतएव उसे परोक्ष ( इन्द्रियातीत ) रूप में इन्ध कहते हैं। व्यवहार्थ जगत् में यह इन्ध ही इन्द्र है।

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः, तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते, परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः; श० ब्रा० १४।६।११।२, बृ० उ० ४।२।२।

दाहिनी आँख में स्थित पुरुष का परोक्ष नाम इन्ध है, प्रत्यक्ष जगत् में यही इन्द्र है।

इन्धे भूतानि। निरु० १०।१; भूतानि प्राणिदेहान् इन्धे जीवचैतन्यरूपेणान्तःप्रविश्य दीपयतीतीन्द्रः, सायण, ऋ० सं० १।३।४। इन्धते, इध्यते वा तेजोभिरिति इन्द्रः, द० पा० उ० बृ० ८।४६।

इदि परमैश्वर्ये ( शासन करना, प्रभुता स्थापित करना ) + रन्; इन्दति, इन्दतेर्वा ऐश्वर्यकर्मणः, निरु० १०।१; स्वमायया जगद्रूपत्वं परमैश्वर्यम्, तद्योगादिन्द्रः, सायण, ऋ० सं० १।३।४—अपनी शक्ति से जगद्रूप परम ऐश्वर्य से युक्त ( मायाशब्द के अर्थ के लिए दे० खोंडा, फोर स्टडीज़ इन दि लैंग्वेज आफ़ दि वेदाज़ हेग, १९५९ में, 'माया' लेख )। इस परम ऐश्वर्य का प्रतिपादन—इन्द्रो मायाभिः पुरुरूप ईयते, ऋ० सं० ६।४७।१८, श० ब्रा० १४।५।५।१९; बृ० उ० २।५।१९ में है। इन्द्रः—ऋज्रेन्द्र इति रन्नन्तो निपातितः, सायण–माधवीयाधातुवृत्ति, १।५३; इन्दति शासनं करोतीति इन्द्रः, चन्नवीरकवि, काशकृत्स्नधातुपाठ १।९, भानुजिदीक्षित, अ० को० १।४१।

इदम् ( उपपद ) + दृश्, इदं पश्यति इति इन्द्रः—इस सम्पूर्ण ब्रह्माण्ड को देखने वाला—

स एतमेव पुरुषं ब्रह्म ततमपश्यदिदमदर्शमिती ३ । तस्मादिन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः, ऐ० आ० २।४।३ । इस सम्पूर्ण ब्रह्माण्ड को देखने के कारण इन्द्र का परोक्ष अभिधान इदन्द्र है। औपमन्यव इस निर्वचन को स्वीकारते हैं--इदं दर्शनाद् इति औपमन्यवः; निरु० १०।१ । सायण--इदम् इत्यापरोक्ष्यमुच्यते, विवेकेन हि परमात्मानमापरोक्ष्येण पश्यति, ऋ० सं० १।३।४ ।

इदम् + कृञ्, इदम् करोति इति इन्द्रः--इस जगत् का स्रष्टा। आग्रायण- इस निर्वचन के प्रतिपादक हैं—इदम् करणाद् इति आग्रायणः, निरु० १०।१ । सायण—इन्द्रो हि परमात्मरूपेणेदं जगत् करोति, ऋ० सं० १।३।४ ।

इरा + दॄ (विदारना, विदीर्ण करना), इरा दृणातीति, निरु० १०।१-- इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोति, सायण, ऋ० सं० १।३।४ । निरुक्त पर दुर्ग की टीका भी देखिए।

इरा + दा (देना), इरा ददाति; निरु० वही; सायण–इरामन्नं वृष्टिनिष्पादनेन ददाति, ऋ० सं० वही ।

इरा + धा (धारण करना, पोषण करना) इरा दधाति निरु० वही-- सायण, इरामन्नं तृप्तिकारणं सस्यं दधाति जलप्रदानेन पुष्णाति, ऋ० सं० वही।

इरा + दॄ, इरां दारयति, निरु० वही—सायण, इरामुत्पादयितुं कर्षकमुखेन भूमिं विदारयति, ऋ० सं० वही ।

इरा + धृ (धारण करना) इरा धारयति, निरु० वही—सायण, पोषणमुखेनेरा धारयति विनाशराहित्येन स्थापयति, ऋ० सं० वही ।

इन्दु + द्रु (जाना), इन्दवे द्रवति, निरु० वही—सायण, इन्दुः सोमो वल्लीरसः, तदर्थं यागभूमौ द्रवति, धावति, ऋ० सं० वही ।

इन्दु + रम् (क्रीडा करना, रमना, काँपना), इन्दौ रमते, निरु० वही— सायण, सोमे रमते क्रीडति, ऋ० सं० वही ।

इन् (ईश्वर) + दृ (भये), या द्रु (गतौ), इञ्छत्रूणा दारयिता वा द्रावयिता वा, निरु० वही—सायण, इन शब्दस्येश्वरवाचकस्य अकारलोपे सति नकारान्तम् इन् इति पदं भवति । दृ 'भये' इति धातुः । स च परमेश्वरः शत्रूणा दारयिता भीषयिता वा । 'द्रु गतौ' इति धातुः । शत्रूणां द्रावयिता पलायनं प्रापयिता, ऋ० सं० वही ।

इन्+टङ् (आदर करना), आदरयिता च यज्वनाम्, निरु० वही--सायण, यज्वना यागानुष्ठायिनामादरयिता भयस्य परिहर्ता, ऋ० सं० वही।

बर्गेन्य; श० ब्रा० आदि में स्वीकृत--इन्धी दीप्तौ-धातु से इन्द्र शब्द की संरचना मानते हैं--( रिलीजन ऑफ् वेद, भा० २, पृ० १६६ )। मैकडोनेल इन्-दु बूँदो का गिरना--को इन्द्र शब्द की रचना का आधार स्वीकारते हैं। ( वे० भा०, पृ० ६६; वे० री०, पृ० ४४ )। फादर जिमरामन इन्, इन्व--शक्ति रखना, शासन करना--से इन्द्र शब्द की रचना को उचित बताते हैं। ध्यातव्य है कि इन् या इन्व धातु भारतीय धातु पाठों में उपलब्ध नहीं होती।

२. वीर्याणि--वीरता के कार्य, पराक्रम, विक्रम। वीर विक्रान्तौ + यत्।

३. प्र वोचम्--उद्घोषणा करूँगा, उच्च स्वर से कहूँगा। प्र + वच् + लुङ्।

४. चकार--कृ + लिट् + तिप्, प्र० पु०, ए० व०, किया था।

५. प्रथमानि--पहले, पूर्वकाल में। प्रथ (प्रख्याने) + अमच्, प्रथेरमच् ( द० उ० ७.४६, पं० उ० ५.३७)। दे०--प्रथेरट् च ( द० उ० ७.२९ ) इति सिद्धे स्वरार्थं सूत्रम्, प्र० कौ० टी० भाग २, पृ० ६३१। प्रथन्तेऽस्मादिति प्रथमम्। यास्क--प्र + तम,--प्रथम इति मुख्यनाम प्रतमो भवति, निरु० २.६; चतुर्थ, षष्ठ आदि के सादृश्य के कारण प्रथम व्यवहृत होने लगा। तु० अवेस्ता 'फ्रतमो', प्राचीन पारसी-फ्रतम।

६. वज्री-वज्र धारण करने वाला। वज्र-यास्क-वृजी वर्जने (छुड़ाना, अलग करना, निषेध करना),--वज्रः कस्मात्। वर्जयतीति सतः निरु० ३.२। वज् ( गतौ ) + रन, निपातनात्, ऋज्रेन्द्राग्रवज्र···( द० पा० उ ८.४६, पं० उ० २.३१, सायण, ऋ० सं० १।८।३ )। व्रज् (गतौ) + रन् निपातनात्, द० पा० उ० वृ० वही, सायण वही। भानुजिदीक्षित केवल 'व्रज गतौ' से ही इस शब्द की सिद्धि मानते हैं, अ० को० टी० ३.१८४। देवराजयज्वा--वृगक्तेतुमण्यन्तात् रक्, गुणे, प्राप्तस्य रेफस्य लोपः। वर्जयति प्राणैः शत्रून्, अन्ये वर्जयतिमेव विनाशमाहुः विनाशयति शत्रून्--नि०, २.२०।

७. अहन्--मारा, हन् हिंसागत्योः + लङ्।

८. अहिम्--सर्प, मेघ आदि, वृत्र। अहि की अनेकधा व्युत्पत्ति प्रस्तुत की गयी है : ( १ ) इण् ( गतौ--गमन करना ) + इन् ( उणा० ४।११४ )।

( २ ) ( आङ्० + इन् (हिंसा करना,गमन करना) + इण् (उणा० ४।१३३) । देखिए---अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति ( निरु० २।५।३ ) । ( ३ ) अहि ( गमन करना ) + इन् ( उणा० ४।११४ ) । अह् ( व्याप्त करना ) + इन्--अह्नोति व्याप्नोति आकाश दिगन्तराणि वा---आकाश या दिशाओं को व्याप्त करने वाला । हन् + इण्--हिः ( मारने वाला ), नञ् + हिः--अहिः । असुरवाचक अहि शब्द आद्युदात्त होता है जैसे इस मन्त्र मे अथवा 'अहन्नहि पर्वते शिश्रियाणम्' ऋ० १।३२।२ मे । निघण्टु ( १।१०।२१ ) में अहि शब्द मेघनामों में पठित है । ज्ञातव्य है कि वृत्र शब्द का भी परिगणन यहाँ किया गया है । अवेस्ता मे भी अहिवध का वर्णन है---यो जनत् अजीम द्रहाकॅम् ( यो अहन् अहि दशकम् ) हओम यश्त, यस्न ८ । वृत्र-युद्ध का निर्देश है, जिसमे इन्द्र वृत्र का वध कर जल को बहने के निमित्त उन्मुक्त कर देता है । तुलनीय--'अहन्निमन्वपस्ततर्द' ऋ० १।३२।१ 'नो अपो वव्रुवांसं वृत्रं जघान्' ऋ० २।१४।२ । लङ् लकार मे आगम में उदात्त होता है, अतः यहाँ 'अ' उदात्तस्वरयुक्त है ।

९. अपः---जल, आप्लृ ( व्याप्तौ ) + क्विप्, आप्नोतीति आपः, द० पा० उ० । आप्नोतेः क्विप् ह्रस्वत्वं च ( ७.१, पं० उ० २.५८, सि० कौ० १.७७ ) । अद्भिर्वा इदं सर्वमाप्तम्, श० ब्रा० १।१।१।१४ । २।१।१।४ । ४।५।७।७; तु० श० ब्रा० ३।१।१।९ । गौ० ५।१।२ । 'अप्रेऽप्रकेत सलिलं सर्वमा इदम्' ऋ० सं० १०।१२९।३; आपो ह यद् बृहतीर्विश्वमायन् । ऋ० सं० १०।१२१।७; आपो अग्रे विश्वमायन् । अ० सं० ४।२।६; आपो हवा इदमग्रे सलिलमेवास, श० ब्रा० ११।१।६। १ ।

१०. ततर्द--तृद् ( हिंसानादरयोः + लिट् + तिप्, प्र० पु०, ए० व०, हिंसा करना, अनादर करना ) टुकड़े-टुकडे कर दिया, काट डाला, छिन्न-भिन्न कर दिया ।

११. वक्षणाः---नदियों को । निघण्टु ( १.१३ ) में नदी वाचक । वक्ष रोषे ( क्रोध करना, क्रुद्ध होना )---युच् । क्रुधमण्डार्थेभ्यश्च; पा० सू ३।२।१५१, सायण । ग्रासमान भी सायण का अनुकरण करते हुए इसी धातु से वक्षणा शब्द की व्युत्पत्ति प्रस्तुत करते हैं, पर वक्ष धातु का अर्थ, उभार, चढ़ाव, फुलाव,

बढ़ाव आदि मानते हैं। उनके अनुसार वक्ष का मूल आशय शरीर का वह भाग है जिसमे वक्षस्थल, गर्भाशय या कोख है। गाय के सन्दर्भ में इसका अर्थ थन होगा। वक्षस्थल और कोख पर आधृत आलंकारिक अर्थ नदी-प्रवाह और अन्तरिक्ष होता है। पिश्चेल के अनुसार वक्ष्-उक्ष्, सींचना, गीला करना अतएव स्त्रीयोनि अर्थ है, और आलंकारिक अर्थ अन्तरिक्ष, याज्ञिकवेदि, सोमलता, पर्वत पर नदी का प्रवाह, गाय का थन और नदी का प्रवाह है। पिश्चेल का अर्थ विद्वानो को स्वीकार्य नहीं हुआ।

देवराज यज्वा के अनुसार वह् प्रापणे + युच् व्युत्पत्ति है—युच् बहुलम्, वहति प्राप्तिकर्मणः स्यात्—इति माधवः। युच्। प्राप्यन्ते हि ताः प्राणिभिः प्राप्नुवन्ति वा समुद्रं निम्नं वा।

१२. अभिनत्–भिद्(विदारणे) + लङ् + तिप्, प्र०पु०, ए०व०। भेदन किया।

१३. पर्वतानाम्—पर्व (पूरणे) + अतच्, पर्वतीति–द० पा० उ० वृ० ६।१४, पां० उ० ३।१०३, भृदृशीङ्........इत्यादि सूत्र से। यास्क—पर्व शब्द की संरचना पृ (पालनपूरणयोः) और प्रीञ् (तर्पणे) से करते हैं, पर्व से युक्त पर्वत—पर्ववान् पर्वतः। पर्व पुनः पृणतेः प्रीणातेर्वा—निरुक्त १।६। देवराज यज्वा—पृ+ वनिप्—स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप् (उ० ४।१०९) पृणान्ति पालयन्ति अवयविनं पूर्यन्ते वा तेन इति पर्वाणि। यद् वा प्रीणाते-र्बाहुलकात् (पा० ३।३।१), प्रीणयन्ति स्वाश्रयमिति। पर्व + तप्– मत्वर्थीय) —पर्वमरुद्भ्यां तप् वक्तव्यः (वा० ५।२।१२१)। पर्व का अर्थ है सन्धि, जोड। अनेक स्तरो और जोड़ों से युक्त होने के कारण पहाड पर्वत है। नि० १।१० में पर्वत मेघवाचक शब्दों के अन्तर्गत परिगणित है।

छन्द की दृष्टि से वीर्याणि को वीरिआणि अथवा वीरियाणि तथा अन्वपः को अनु अपः पढ़ना चाहिए।

अहन्नहिं पर्वते शिश्रियाणं
त्वष्टास्मै वज्रं स्वर्यं ततक्ष।
वाश्रा इव धेनवः स्यन्दमाना
अञ्जः समुद्रमव जग्मुरापः॥ २॥

## पदपाठः

अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष । वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ २ ॥

## सायणभाष्यम् २

पर्वते शिश्रियाणमाश्रितम् । अहि मेघम् । अहन् हतवान् । अस्मा इन्द्राय स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं त्वष्टा विश्वकर्मा वज्रं ततक्ष । तनूकृतवान् । तेन वज्रेण मेघे भिन्ने सति स्यन्दमानाः प्रस्रवणयुक्ता आपः समुद्रमञ्जः सम्यगवजग्मुः प्राप्ताः । तत्र दृष्टान्तः । वाश्रा वत्सान् प्रति हम्भारवोपेता धेनव इव । यथा धेनवः सहसा वत्सगृहे गच्छन्ति तद्वत् । शिश्रियाणम् । श्रिञ् सेवायाम् । लिटः कानच् । द्विर्भावहलादिशेषेयङादेशाः । चित इत्यन्तोदात्तत्वम् । स्वर्यम् । ऋगतौ अस्मात् सुपूर्वात् ऋहलोर्ण्यदिति ण्यत् । संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः । यद्वा स्वृ शब्दोपतापयोरित्यस्मात् ण्यति पूर्ववद्वृद्ध्यभावः । तित्स्वरितमिति स्वरितत्वम् । वाशयन्त इति वाश्राः वाश्ृ शब्दे । स्फायितञ्चीत्यादिना रक् ( उ० २-१३ ) जग्मुः । उसि गमहनेत्युपधालोपः ॥

## हिन्दीभाषान्तर

( इन्द्र ने ) पर्वत में निवास करने वाले अहि को मारा । इस (इन्द्र) के लिए त्वष्टा ने गर्जन करने वाले वज्र को रचा । रँभाती हुई ( और बछड़ों की ओर दौड़ती हुई ) धेनुओं के समान बहती हुई जलराशि नीचे समुद्र की ओर तेजी से जाने लगी ।

## टिप्पणियाँ

१. शिश्रियाणम्—श्रिञ् सेवायाम् (आश्रित रहना, निवास करना, प्रतिष्ठित रहना) । कानच् ( लिट् ) अभ्यास को द्वित्व, इयङ् ( शेप के स्थान पर ) आदेश । पर्वते शिश्रियाणम्—सभी व्याख्याता इन्द्र तथा वृत्र के संघर्ष के अर्थ को पर्वत के अर्थ का आधार स्वीकारते हैं । निघण्टु में पर्वत मेघ का वाचक है । यास्क ने निरुक्त में पर्वत का अर्थ गिरि तथा मेघ किया है ( निरुक्त १।६, २।५ ) तु. पर्वतेषु क्षियन्तम्, ऋ० सं० २।१२।११ ।

२. त्वष्टा—त्वक्ष् तनूकरणे (तेज करना, निर्माण करना) + तृन् + त्वक्षतेर्वा स्यात् करोति कर्मणः (निरु०, ८.२, सायण, १.१३.१०, मैकदोनेल वै० टी० वो०, पीटर्सन, वै० हि०, भाग २, पृ० ९८) तक्ष् तनूकरणे + तृन्-तक्षति (सायण, ऋ० सं० १।१३।१०)। त्विष् दीप्तौ (चमकना, तेज करना) + तृन्। त्वेषति—त्विषेर्वा स्याद् दीप्तिकर्मणः (निरु० ८।२), सायण, माध० धा० वृ० १।७२३। नप्तृ नेष्टृ त्वष्टृ००—उ० उ० २।२।३, पं० उ० २।९५, सि० कौ० २।२६०—इत्यादि सूत्र से तृन् प्रत्ययान्त निपातन। तूर्ण + अशू व्याप्तौ तूर्णमश्नुते इति नैरुक्ताः (निरु० ८।२), देवराज यज्वा, नि० ५।२।११। दे०, त्वष्टा देवशिल्पी है। वह देवों के शस्त्र-निर्माण के लिए प्रसिद्ध है। यद्यपि उसके अन्य शारीरिक अंगों का वर्णन नहीं उपलब्ध होता तथापि हाथों अथवा भुजाओं का, जिनसे वह शस्त्र-रचना करता है, प्रायः वर्णन किया गया है। १।८५।९ में उसे इन्द्र के वज्र का निर्माण करने का श्रेय दिया गया है, जिससे वृत्र का वध कर इन्द्र ने जलधाराओं को मुक्त किया—

त्वष्टा यद्वज्रं सुकृतं हिरण्यं सहस्रभृष्टिं स्वपा अवर्तयत्।
यत्त इन्द्रो नर्यपांसि कर्तवेऽहन् वृत्रं निरपमौब्जदर्णवम्॥

तुलनीय—त्वष्टा अस्मै वज्रं स्वर्यं ततक्ष, ऋ० १।३२।२; तक्षन् त्वष्टा वज्रम्, ५।३१।४; त्वष्टा......वज्रं सहस्रभृष्टिं ववृतच्छताश्रिम्, ६।१७।१०। वह अनेक रूपों का निष्पादक है—देवस्त्वष्टा सविता विश्वरूपः, ३।५५।१९। अन्यत्र उसे गर्भ में दम्पती का निर्माता कहा गया है—गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः, ऋ० १०।१०।५। त्वष्टा गर्भ में समस्त रूप का निर्माण करता है—त्वष्टा रूपाणि पिंशतु—१०।१८४।१। वह मनुष्यों, पशुओं के गर्भस्थ बीज को विकसित करता है (१।१८८।९)। त्वष्टा के विरुद प्रायः उसके गुणों का ही ख्यापन करते हैं; व्यक्तित्व का नहीं (देखिए, मैकदोनेल, वैदिक माइथॉलॉजी, पृ० ११६; ओल्डेन बर्ग, Die Religion des Veda, १९२३, पृ० २३७ आदि भी देखिए)। विश्वरूप असुर त्वष्टा पुत्र कहा गया है (ओल्डेन बर्ग, वही, पृ० १४१; कीथ, रिलीजन एण्ड फिलासफी आफ़ दि वेद एण्ड उपनिषद्, पृ० २०५) अनुवर्ती ग्रन्थों में भी वह समस्त रूपों की रचना करता है—देखिए, तै० ब्रा० १।४।७।१; श० ब्रा० ११।४।३।३; अ० वे० २।२६।१।

३. स्वर्यम्—सु + ऋ गतौ + ण्यत् ( ऋहलोर्ण्यत्, पा० ३।१।१२४ ), सुष्ठु प्रेरणीयम्, सायण—अच्छी तरह से प्रेरणीय, फेंकने के योग्य। स्वृ शब्दोपतापयोः + ण्यत्, शब्दनीयं स्तुत्यम्, शब्द के योग्य, स्तुति के योग्य। तु०; अस्मा इदु त्वष्टा तक्षद् वज्रं स्वपस्तमं स्वर्यं रणाय, ऋ० सं० १।६१।६; य ईं ज जान स्वर्यं सुवज्रम्, ऋ० सं० ४।१७।४; त्वष्टा ··· ततक्ष, वज्रम्, ऋ० सं० १।३२।७।

४. ततक्ष—तक्ष् तनूकरणे + लिट् + तिप्, प्र० पु०, ए० व०, तक्षण किया, गढ़ा। प्रारम्भ में तक्ष् और त्वक्ष् धातु सम्भवतः समीकृत थी, तक्ष् की त्वक्ष् अधिकतर सामर्थ्य, प्रभाव को बताती है।

५. वाश्राः—वाशृ शब्दे + रक्; शब्द करती हुई, रँभाती हुई। 'स्फायि-तञ्चि०००'—द० पा० उ० ८।३१, पं० उ० २।१३, सि० कौ० २।१७८। सायण, मा० धा० वृ० ४।५५।

६. धेनवः—धेट् पाने + नु, धयति; धेट् इच्च—द० उ० १।१४५, पं० उ० ३।३४। धिवि प्रीणने—धिनोति प्रीणयति इति धेनुः—धेनुर्धयतेर्वा धिनोतेर्वा—निरु० ११।४।

७ स्यन्दमानाः—स्यन्दू प्रस्रवणे + शानच्, प्रवाहित होती हुई।

८. अञ्जः—अव्यय, सीधे, तेजी से, शीघ्रता से—तु० अञ्जः वरासि विभ्वा अभवत्, ऋ० स० १।१९०।२; अञ्जसा शासता रजः १।१३९।४।

९. समुद्रम्—सम् + उत् + द्रु ( गतौ ) + ड ( अन्येष्वपि दृश्यते, पा० ३।२।१०१ )। सम् + मुद् ( प्रीतौ हर्षे च ) + रक् (स्फायितञ्चि००)। सम् + उदक् + रु ( मत्वर्थीय )। सम् + उन्दी (क्लेदने—भिगोना, गीला करना) + रक् ( द० उ०, स्फायितञ्चि, ८।३१; पं० उ० २।१३; सि० कौ० २।१७८। ) समुद्रः कस्मात्—समुद्रवन्ति अस्मादापः, समभिद्रवन्ति एनमापः, सम्मोदन्तेऽस्मिन् भूतानि, समुदको भवतीति वा, समुनत्तीति वा—निरु० २।३। दे०, देवराजयज्वा, नि० १।३।१५।

छन्द की दृष्टि से स्वर्यम्, सुवर्यम् है।

**वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य।**
**आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३ ॥**

## पदपाठः

वृषाऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥

## सायणभाष्यम् ३

वृषायमाणः वृष इवाचरन्निन्द्रः सोममवृणीत वृतवान् । त्रिकद्रुकेषु ज्योतिर्गौ-रायुरित्येतन्नामकास्त्रयो यागास्त्रिकद्रुका उच्यन्ते । तेषु सुतस्य अभिषुतस्य सोमस्यांशमपिबत् पीतवान् । मघवा धनवानिन्द्रः सायकं बन्धकं वज्रमादत्त । स्वीकृतवान् । तेन च वज्रेण अहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघम् अहन् हतवान् । वृषायमाणः वृष इवाचरन् । 'कर्तुः क्यङ् सलोपश्च' ( पा० ३।१।११ ) इति क्यङ् । अकृत्सार्वधातुकयोरिति दीर्घः । अदुपदेशाद्धातो-रन्तोदात्तत्वे क्यङन्ताद्धातोरन्तोदात्तत्वम् । सायकम् । षिञ् बन्धने । सिनोति इति सायकः । ण्वुल् । लित्स्वरेणाद्युदात्तत्वम् । प्रथमजा प्रथम जायते इति प्रथमजाः । जनसनखनक्रमगमो विट् ( पा० ३।२।६७ ) विड्वनो ( ६-४-४१ ) रित्यात्वम् ॥

## हिन्दीभाषान्तर

बलवान् वृषभ के समान ( इन्द्र ने ) सोम को ( पीने के लिए ) चुना; ( उसने ) तीन यागों में सोम को पिया । मघवा ने मारक वज्र को स्वीकारा, ( तथा उससे ) अहियों में सर्वप्रथम जनमने वाले को इससे मारा ।

## टिप्पणियाँ

१. वृषायमाणः—वृषा + क्यङ् , ( वृषा इव आचरति, वृषायते ) बली बैल, साँड़ के समान आचरण करता हुआ ।

२. अवृणीत—वृञ् वरणे + लङ् म० पु० ए० व० । चुना, वरण किया ।

३. सोमम्—सोम—ऋग्वेद में सोम से सम्बद्ध लगभग १२० सूक्त हैं । सोमलता से सम्भवतः ऋग्वेदीय जनों का भी पूर्ण परिचय नहीं था । यदि हिलब्रान्त का यह मत मान लिया जाय कि ऋ० सं० ३।५३।१४ में प्रयुक्त 'नैचाशाख' शब्द सोम का विशेषण है तो यह मानना पड़ेगा कि उसके पत्ते और टहनियाँ नीचे की ओर लटकी रहती थीं । यह

सोमलता पोरों से युक्त बतायी गयी है। सम्भवतः इसमें काँटे भी होते थे। सोम मुञ्जवान् पर्वत पर मिलता था। ब्राह्मणों मे सोम की दिशा उत्तर ( तै० ब्रा० ३।११।५।२ ), पश्चिम ( ऐ० ब्रा० १।८ ) तथा पूर्व ( ऐ० ब्रा० १।३ ) कही गयी है। सोमरस का वर्ण अरुण, हरित या पिंगल, शोण या अरुष कहा गया है। सोम को अवेस्ता में हओम के नाम से वर्णित किया गया है। बल्ची भाषा मे इसे उमान, चीनी मे सिम या सुम कहा गया है। अँग्रेजी भाषा में एफ्रिडा बलगेरिस या साण्टिया बेल-विरोडी के नाम से इसे जाना गया है। लास्सन, म्यूर, हाग, मैक्समूलर, कीथ, मैकडोनेल सोम को सरकोस्टेमा विमिनेल, ऐस्क्लेपियस एसिडा या सरकोस्टेमा ब्रेविस्टिग्मा कहा है। राथ सरकोस्टेमा ऐसीडम को ही सोम के अधिक समीप बताते हैं। डॉ० एचीसन एफेड्रा पेचिक्लाडा को सोम मानते हैं। यह पौधा बलूचिस्तान, हरिरुद घाटी और ईरान के पार्वत्य प्रदेशों में बहुत मिलता है। एफ्रेडा की एक अन्य जाति हुम इबन्दक नाम से प्रसिद्ध है। मैक्समूलर का कथन है कि उक्त पौधे की पिसाई करने पर पर्याप्त मात्रा में रस निकलता है। वाट के अनुसार अफगानी अङ्गूर ही सोम है। राइस के मत में यह गन्ना है। मैक्समूलर और राजेन्द्र लाल मित्र के मत से सोम से यवसुरा का निर्माण किया जाता था। कतिपय अन्य विद्वान् इसे भाँग या सन मानते हैं। कर्मान और येज्द के पारसी जिस पौधे से हूम रस बनाते हैं, उसे हओम से अभिन्न मानते हैं। हिलब्रांत सोम को चन्द्रमा कहते हैं। अनुवर्ती युग में सोम के स्थान पर अन्य पौधों का प्रयोग यज्ञों मे किया जाता था ( सोमलता के स्थान पर अन्य लताओं के प्रयोग से सम्बद्ध सन्दर्भ के लिए देखिये, पं० क्षेत्रेशचन्द्र चट्टोपाध्याय, ज० के० आर० का० ओ० रि० ई० : अं० ३१, पृ० २३६ )। इसी सोमलता का अधिदेव सोम है। इसकी रूपसंरचना अत्यन्त अस्पष्ट है।

४. त्रिकद्रुकेषु--कदि ( अह्वाने रोदने च, 'वैक्लव्ये, वैकल्ये इति चन्द्रः' —क्षीरस्वामी, कन्दति कन्दते वा, शब्द करना, विकल होना ) + कु + मृगऽवादयश्च, द० उ० १।१२१; पं० उ० १।३७, कद्रुः एव कद्रुकः, ह्रस्वार्थे स्वार्थे वा कन्। सायण के अनुसार आभिप्लव षडह यज्ञ में होने वाले ज्योति, आयु तथा गो नामक तीन याग, ज्योतिष्टोमगोष्टोमाख्यः त्रिकद्रुका इत्युच्यन्ते—अ० सं०

१८।२।६ सायण, ऋ० १०।१४।१६। ग्रिफिथ त्रिकद्रुक को तीन पानपात्र मानते हैं, पीटर्सन तीन प्याले, ग्रासमान तीन सोम के पात्र ( ग्रह ) वसतीवरी, एकधना, पूतभृत्। गेल्डनर के अनुसार सम्भवतः त्रिकद्रुक उस स्थान का नाम है, जहाँ इन्द्र ने सोमभरे तीन सरों को पीकर खाली कर दिया था—

त्री सरांसि मघवा सोम्या अपाः, ऋ० सं० ५।२९।८।

त्रीणि सरांसि पृश्नयः दुदुह्रे वज्रिणे मधु, ऋ० सं० ८।७।१०।

५. सायकम्—षो ( अन्तकर्मणि—अन्त करना, मारना, स्यति ) + ण्वुल्; ण्वुल्तृचौ, पा० ३।१।१३३; आतो युक् चिण्कृतोः, पा० ७।३।३३; युक्। सायक शब्द नि० ( २।२०।१७ ) में वज्रवाचक शब्दों में परिगणित है। यहाँ यह विरुद के रूप में प्रयुक्त है, जो वज्र की मारकशक्ति का प्रख्यापन करता है। इन्द्र वज्र को लेकर वृत्र को तुरन्त मारता है। तुरन्त होने वाली मारणक्रिया ही सायक को वज्र की विरुदता में स्थापित करती है। सायण ने ( देवराजयज्वा भी ) षिञ् ( बन्धने—बाँधना ) + ण्वुल् से सायक शब्द की संरचना करते हैं। सायण के अनुसार सायक का अर्थ है बाँधने वाला (वज्र)। चाहे जो व्युत्पत्ति मानी जाय, सायक वज्र के विरुद रूप में ही प्रयुक्त है, यह निर्विवाद प्रतीत होता है।

६. मघवा—मंह अथवा मह + कनिन्,—मन्-विशप्सन् परिज्मन् मातरिश्वन्-मघवन्, द० उ० ६।५५, पं० उ० १।१४६। मंह धातु दान अर्थ में तथा मह पूजा अर्थ में प्रयुक्त होती है। नि०—मघ ( मंहतिर्दानकर्मा + क, घञर्थे कविधानम्, ३।३।५८ वा० ) धनवाचक शब्दों में परिगणित है ( २।१०।१ )—प्रशस्तं मघमस्यास्तीति—मघ + मतुप्। तु०—मघमिति धननामधेयम्, निरु० १।३।

यदि॑न्द्राह॑न्प्रथम॒जामही॑ना॒-

मान्मा॒यिना॒ममि॑नाः॒ प्रोत मा॒याः।

आत्सूर्यं॑ ज॒नय॒न्द्यामु॒षासं॑

ता॒दीत्ना॒ शत्रुं॒ न किला॑ विवित्से ॥ ४ ॥

## पदपाठः

यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः । आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥ ४ ॥

## सायणभाष्यम् ४

उत अपि च हे इन्द्र यत् यदा अहीना मेघाना मध्ये प्रथमजा प्रथमोत्पन्नं मेघम् अहन् हतवानसि । आत् तदनन्तरं मायिना माययोपेतानामसुराणा सम्बन्धिनीर्मायाः प्रामिनाः प्रकर्षेव नाशितवानसि । अनन्तरं सूर्यमुषसम् उषः-कालं द्यामाकाशं च जनयन्नुत्पादयन्नावरकमेघनिवारणेन प्रकाशयन् वर्तते । तादीत्ना तदानीम् । आवरकान्धकाराभावाच्छत्रुं घातकं वैरिणं न विवित्से किल । त्वं न लब्धवान् खलु । अहन् हन्तेर्लङि हल्ङ्याब्भ्य इति सिलोपः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । मायिनाम् । मायाशब्दस्य व्रीह्यादिषु पाठात् व्रीह्यादिभ्यश्च ( पा० ५।२।११६ ) इति मत्वर्थीय इनिः । अमिनाः । मीञ् हिंसायाम् क्रैयादिकः । मीनातेर्निगमे ( पा० ७।३।८१ ) इति ह्रस्वत्वम् । तादीत्ना । तदानीमित्यस्य पृषोदरादित्वाद्वर्णविपर्ययः । किल । निपातस्य च । ( पा० ६-३-१३६ ) इति दीर्घत्वम् । विवित्से । विद्लृ लाभे । क्रादिनियमात् प्राप्त इट् व्यत्ययेन न भवति ॥

## हिन्दीभाषान्तर

इन्द्र, ( तुमने ) जिस समय अहियो में सर्वप्रथम जनमने वाले को मारा, और माया करने वालों की माया को भलीभाँति नष्ट कर दिया, उस समय सूर्य, द्युलोक ( तथा ) उषा को जनमाते हुए ( तुमने ) निश्चित रूप से ( किसी ) शत्रु को नहीं पाया ।

## टिप्पणियाँ

१. यत्-यदा, जिस समय ।

२. आत्—अन्य शब्दों के साथ सम्बद्ध होकर यह काल की निरन्तरता को द्योतित करता है—अतएव इसका अर्थ होगा, उसके तुरन्त बाद, तब ।

३. मायिनाम्–मायी, मायावी, माया करने वाले। मा माने, माङ् माने शब्दे च + य–माच्छाससिसूभ्यो यः ( द० उ० ८।१२, पं० उ० ४।११८, सि० कौ० ४.५५९ )। माया + इनि, व्रीह्यादिभ्यश्च, पा० सू० ५।२।११६।

४. अमिनाः—मीञ् ( हिंसायाम् ) + लङ्, प्र० पु०, ए० व०, मारा, नष्ट कर दिया।

५. सूर्यम्—सृ ( गतौ ) या षू प्रेरणे + क्यप्, राजसूयसूर्य.., पा० ३।१।१४। सरतेर्वा, सुवतेर्वा (निरु०, १२।२ )। सूर्य शब्द सुवीर्य से भी व्युत्पन्न माना गया है—तं ( इन्द्रम् ) देवा अब्रुवन् सुवीर्यो मर्या यथा गोपायत इति। तत् सूर्यस्य सूर्यत्वम्, तै० ब्रा० २।२।१०।४।

बृहद्देवता में सु + ईर ( क्षेपे, फेंकना, प्रेरित करना ) भी उपलब्ध है—

सूर्यः सरति भूतेषु सुवीरयति तानि वा।
सु ईर्यत्वाय यात्येषु सर्वकार्याणि सन्दधत् ॥७।१२८।

शंकर–सूर्यः सुष्ठु ईरयते रसान् रश्मीन् गुणान् धियो वा जगतः, बृ० उ० ५।१५। सूते श्रियमिति सूर्यः; सूतेः सुवतेर्वा सूर्यशब्दो निपात्यते, विष्णु स० ना० १०७। रसानां रश्मीनां प्राणाना च जगत ईरणात् सूर्यः, छां० उ०, ३।१७।७। तु०–शश्वत् सूर्यमानात् सूर्यः, मै० उ० ६।७।

हिरण्यगर्भो भगवानेषच्छन्दसि पठ्यते।
आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते ॥

—सूर्यसिद्धान्त, १२।२५

स्वर्, प्रकाश से, आधुनिक विद्वान्, सूर्य शब्द की निष्पत्ति मानते हैं। इस दृष्टि से गोपथ ब्रा० तुलनीय—एष ह वै सूर्यो भूत्वामुष्मिंल्लोके स्वरति, गो० ५।५।१४।

६. उषासम्—उच्छी विवासे–समाप्त करना, दूर करना; ( समाप्तिर्विवासः, क्षीरस्वामी ) + असि; उषाः कस्मादुच्छतीति, निरु० २.६। वश ( कान्तौ, दीप्त होना, चमकना ) वष्टि इति। आधुनिक जन इसे वस् मानते हैं। उष् ( दाहे, जलाना ) ओषत्यन्धकारम्। संहितापाठ में दसवाँ अक्षर होने के कारण 'उषसम्' का 'ष' दीर्घ हो गया है—एकादशिद्वादशिनोर्लघावष्टममक्षरम्। उदये संहिताकाले, ऋ० प्रा० ८.३६, दशमं चैतयोरेवम्, ८.३८।

७. तादीत्ना—तदीत्न से सम्बद्ध, तदानीम्। उस समय।

८. शत्रुम्—शद्लृ (शातने, काटना, विशीर्ण करना; 'शद्लृ शातने विशीर्णताया वर्त्तते'—मैत्रेय) + त्रुन् ('तृशदिभ्या त्रुन्'; सायण, मा० धा० वृ० १.५८४) अथवा क्रुन्, 'रुशातिभ्यां क्रुन्' द० पा० उ०, १.१५९, पं० उ० ४.११२। सि० कौ० ४.५५३। निरुक्त मे शत्रु शब्द शमु शान्तौ धातु से भी सिद्ध स्वीकारा गया है—इन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा. २.५।

९. किला—किल, पूर्व शब्द पर बल देने वाला अव्यय, पाद मे आठवॉ अक्षर होने के कारण दीर्घ।

१०. विवित्से—विद्लृ (लाभे, प्राप्त करना) लिट्, प्र० पु०, ए० व०।

**अहन्वृत्रं वृत्रतरं व्यंस-**

**मिन्द्रो वज्रेण महता वधेन।**

**स्कन्धांसीव कुलिशेना विवृक्णा-**

**हिः शयत उपपृक्पृथिव्याः॥ ५॥**

### पदपाठः

अहन्। वृत्रम्। वृत्रऽतरम्। विऽअंसम्। इन्द्रः। वज्रेण। महता। वधेन। स्कन्धांसिऽइव। कुलिशेन। विऽवृक्णा। अहिः। शयते। उपऽपृक्। पृथिव्याः॥ ५॥

### सायणभाष्यम् ५

अयमिन्द्रो वज्रेण सम्पादितो यो महान् वधः तेन वज्रेण वृत्रतरम् अतिशयेन लोकानामावरकमन्धकाररूपम्। यद्वा। वृत्रैरावरणैः सर्वान् शत्रूंस्तरति तम्। वृत्रमेतन्नामकमसुरं व्यंसं विगतांसं छिन्नबाहुर्यथाभवति तथा अहन् हतवान्। अंसच्छेदे दृष्टान्तः। कुलिशेन कुठारेण विवृक्णा विशेषतः छिन्नानि स्कन्धांसीव। यथा वृक्षस्कन्धाश्छिन्ना भवन्ति तद्वत्। तथा सति अहिर्वृत्रः पृथिव्या उपरि उपपृक् सामीप्येन संपृक्तः शयते शयनं करोति। छिन्नकाष्ठवद्भूमौ पततीत्यर्थः।

वृत्रतरम् । वृतु वर्तने स्फायितञ्चि (उ० १३-१२) इत्यादिना भावे रकप्रत्ययान्तो वृत्रशब्दः । वृत्रेणावरणेन सर्वं तरतीति वृत्रतरः । तरतेः पचाद्यच् ( पा० ३-१-१३४ ) परादिश्छन्दसि बहुलम् ( पा० ६-२-१९९ ) इत्युत्तरपदाद्युदात्तत्वम् । तरपि तु व्यत्ययेन । व्यंसम् । बहुव्रीहौ पूर्वपदप्रकृतस्वरितत्वे उदात्तस्वरितयोर्यणः ( पा० ८-२-४ ) इति स्वरितत्वम् । वधेन । हनश्च वध इति भावे अप् । तत्सन्नियोगेन धातोर्वधादेशः । स चान्तोदात्तः । अन्त्यस्याकारस्य अतो लोपः ( पा० ६-४-४८ ) इति लोपे उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वम् । विवृक्णा । ओव्रश्चू छेदने । कर्मणि निष्ठा । यस्य विभाषा ( पा० ७-२-१५ ) इतीट्प्रतिषेधः । आदितश्च ( पा० ८-२-४५ ) इति परत्वान्निष्ठानत्वम् । ततो व्रश्चभ्रस्जेति० ( पा० ८-२-३६ ) षत्वे प्राप्ते निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः । ( पा० ८-२-६२ ) इति नत्वस्य सिद्धत्वेन झल्परत्वाभावात् षत्वं न भवति । कुत्वे तु कर्तव्ये तदसिद्धमेव ( पा० ८-२ २१ ) इति चोः कुः ( पा० ८-२-३० ) इति कुत्वम् । शेश्छन्दसि बहुलमिति शेर्लोपः । गतिरनन्तर इति गतेः प्रकृतस्वरत्वम् । शयेत । बहुलं छन्दसीति शपो लुगभावः । पृथिव्याः । उदात्तयणो हल्पूर्वात् ( पा० ६-१-१७४ ) इति विभक्तेरुदात्तत्वम् ॥

## हिन्दी-भाषान्तर

इन्द्र ने महान् अस्त्र वज्र से बाहुविहीन महान् शत्रु वृत्र को मारा। कुठार से काटे गये ( वृक्ष के ) तनों के सदृश ( वह ) अहि पृथ्वी से सटकर सो रहा है।

## टिप्पणियाँ

१. वृत्रम्—यास्क ने इसकी अनेक व्युत्पत्तियाँ प्रस्तुत की हैं—

वृञ् ( घेरना, आच्छादित करना ), वृतु ( वर्तने, बरतना ), वृधु ( वृद्धौ, बढ़ना ) धातुओं से वृत्र बनता है।

वृत्रो वृणोतेर्वा, वर्ततेर्वा, वर्धतेर्वा । यदवृणोत् तद् वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्धत तद् वृत्रस्य वृत्रत्वमिति विज्ञायते–निरु० २.५ ।

वृञ् धातु से वृत्र शब्द की संरचना का प्रतिपादन श० ब्रा० में है—वृत्रो ह वा इदं सर्वं वृत्वा शिश्ये, यदिदमन्तरेण द्यावापृथिवी । स यदिदं सर्वं वृत्वा

शिश्ये तस्माद् वृत्रो नाम । १.१.३.४ । यदिमा लोकानवृणोत् तद् वृत्रस्य वृत्रत्वम्, तै० सं० २.५.२ ।

वृतु और वृधु धातु से वृत्र शब्द यजुर्वेदीय संहिता और ब्राह्मण में उपलब्ध है—यदवर्तयत् तद् वृत्रस्य वृत्रत्वम् । स इषुमात्रमिषुमात्रं विष्वङ् विवर्धत, तै० स० २.५.२ । 'स यद् वर्त्तमानः समभवत् तस्माद् वृत्रः । इषुमात्रमेव तिर्यङ् वर्धद्, इषुमात्रं प्राङ्' श० ब्रा० १.६.३.९.११ ।

वृञ् वरणे + क्त्रन्—'अमिचिमिभिदिशंसिभ्यः क्त्रन्' उ. । उद्धृत देवराजयज्वा, नि० १.१०.२८ । दशपादी उणादि मे या पंचपादी मे यह सूत्र क्त्र प्रत्यय करता है, और जिन धातुओ से क्त्र प्रत्यय होता है, उनका परिगणन प्रत्यक्ष है । इसमें वृञ् का अनुल्लेख है, अतएव देवराज की उपर्युक्त व्युत्पत्ति कैसे सम्भव है ? इस सम्बन्ध मे यह भी ध्यातव्य है कि वृत्र शब्द अन्तोदात्त है; यदि क्त्रन् प्रत्ययान्त होगा तो नित् होने के कारण 'ञ्नित्यादिर्नित्यम्' ( पा० ६.१.१९७ ) से वृत्र के प्रथम अक्षर में उदात्तस्वर होगा । वृतु गतौ + रक् ( देवराजयज्वा ), वृतु वर्तने + रक्, स्फायितञ्चि; द० उ०, ८.३१; पं० उ० २.१३; सि० कौ० २.१०८ । चन्नवीर वृतु वरणे धातु से वृत्र शब्द की निष्पत्ति मानते हैं—का० कु० ३.१०१ । वृधु वृद्धौ + क्त्रन्, बाहुलकात् ( देवराज ), यह प्रत्यय करने पर वृत्र आद्युदात्त हो जायगा । 'बहुल' का ही आश्रय लेना है तो रक् प्रत्यय क्या अनुचित है ?

नैरुक्त वृत्र को मेघ मानते हैं और ऐतिहासिक त्वाष्ट्र असुर—तत् को वृत्रः ? मेघ इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । आप् और ज्योति के मिश्रण से वर्षा होती है, अर्थ सामीप्य के लिए उसे युद्धवर्णन के रूप में प्रस्तुत किया गया है—अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते । तत्रोपमार्थेन युद्धवर्णा भवन्ति—नि० २.५ ।

२. वृत्रतरम्—वृत्र + तरम् 'महान् शत्रु' शत्रुओं में बड़ा, श्रेष्ठ ।

३. व्यंसम्—वि + अंस + घञ् ( अकर्त्तरि च कारके, पा० ३.३.१९ ) । विगतौ विभिन्नौ वा अंसौ यस्य स व्यंसः ।

वि + अम् ( गतौ, अयति अभ्यते वा ) + सन् (उन्दमि गुधिकुषिभ्यः किच्च, द० उ० ९.२८; पं० उ० ३.६८ उज्ज्वलदत्त ) । वि + अम + सन् (सि० कौ० ५.१०९, अमेः सन्; भानु० २.६.७८ )

'अहन् वृत्र वृत्रतरं व्यंसम्' के अर्थ में विवाद है। सायण व्यंस और वृत्रतर को वृत्र का विशेषण मानते हैं और अर्थ करते हैं—(लोकों को ढँकनेवाले) अन्धकार के रूप में स्थित वृत्र को छिन्नबाहु कर मारा। ग्रिफिथ के अनुसार वृत्रतर = वृत्रों में अत्यन्त नीच: मैकदोनेल व्यंस को व्यक्तिवाचक संज्ञा मानते हैं। ऋग्वेद में यह शब्द छह बार प्रयुक्त है, जिसमें पाँच बार व्यक्तिवाचक है। वृत्रतर का अर्थ मैकदोनेल की दृष्टि में भी वही है जो ग्रिफिथ मानते हैं। गेल्डनर 'वृत्रतरं व्यंसम्' का अर्थ महत्तम शत्रु करते हैं। पीटर्सन का भी यही मत है। परांजपे वृत्रविजेता अर्थ मानते हैं। वस्तुतः व्यंसम् को वृत्र का विशेषण मानना युक्तिसंगत है; क्योंकि आगे आयी हुई उपमा—'स्कन्धांसीव'—की सार्थकता इसी से है।

४. वज्रेण महता वधेन—महान् अस्त्र वज्र के द्वारा।

५. स्कन्धांसीव कुलिशेन विवृक्णा—कुलिशेन—कुठार, कुल्हाडी के द्वारा—कुलि + शीङ् (स्वप्ने, सोना), (अन्येभ्यो...वा० ३.२.१०१)। कुल + शद्लृ (शातने) + क ('आतोऽनुपसर्गे कः', पा० ३.२.३.)—क्षीरस्वामी। कुलपर्वतान् श्यति पक्षच्छेदेन तनूकरोति—स्कन्दस्वामी। कुल + णि + शद्लृ + ड (अन्येभ्यो...वा० ३.२.१०१)—मेघस्यान्तं पर्वतस्य वा समुच्छ्रिताः प्रदेशा कुलानीव, देवराज यज्वा, नि० २.२०.१२। कु + लिश अल्पीभावे (कुत्सितमीषद् वा लिशति) + कः (इगुपधज्ञा प्रीकिरः कः, पा० ३.१.१३५)। कुलिश इति वज्रनाम कुलशातनो भवति, निरु० ६.४।

स्कन्धासि इव—स्कन्दिर गतिशोषणयोः) + घञ् (कर्मणि, पा० ३.३.१९) —स्कन्धो वृक्षस्य, समास्कन्नो भवति, निरु० ६.४। तना—तनों के सदृश।

विवृक्णा—वि + ओव्रश्चू (छेदने, काटना) + क्त, विवृक्णानि, (स्कन्धासि) काटे गये। कटे हुए।

६. अहिः शयते उपपृक् पृथिव्याः—उप + पृची (सम्पर्के) + क्विप्। पृक् का अर्थ है सम्पृक्त, मिला हुआ, सटा हुआ। तु०, वीरेषु वीरान् उप पृङ्धि, ऋ० सं० २.२४.१५। उप इदमुपपर्चनं आसु गोषु उप पृच्यताम्। पृथिव्याः आपृक् अमुया शयन्ते, १०.८९.१४।

अयोद्धेव दुर्मद आ हि जुह्वे
महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां
सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

पदपाठः

अयोद्धाऽइव । दुःमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । सम्ऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥

सायणभाष्यम् ६

दुर्मदो दुष्टमदोपेतो दर्पयुक्तो वृत्रः अयोद्धेव योद्धृरहित इव इन्द्रमा जुह्वे हि आहूतवान् खलु । कीदृशमिन्द्रम् । महावीरं गुणैर्महान् भूत्वा शौर्योपेतं तुविबाधं बहूना बाधकमृजीषं शत्रूणामपार्जकम् । अस्यदृशस्येन्द्रस्य सम्बन्धिनो ये शत्रुवधाः सन्ति तेषां वधाना समृतिं संगमं नातारीत् । पूर्वोक्तो दुर्मदः तरीतुं नाशक्नोत् । इन्द्रशत्रुः इन्द्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्रः इन्द्रेण हतो नदीषु पतितः सन् रुजानाः नदीः समिपिपिषे सम्यक् पिष्टवान् । सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीना कूलानि तत्रत्यं पाषाणादिकं च चूर्णीभूतमित्यर्थः । अयोद्धाऽइव । न विद्यते योद्धास्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वं समासान्तविधेरनित्यत्वात् । ( परि० ८४ ) नद्यृतश्च ( पा० ५-४-१५३ ) इति कबभावः । जुह्वे । ह्वेञ् स्पर्धाया शब्दे च । अभ्यस्तस्य च ( पा० ६-१-३३ ) इति सम्प्रसारणम् । उवङादेशाभावश्छान्दसः यद्वा छन्दस्युभयथेति सार्वधातुकसंज्ञाया हुश्नुवोः सार्वधातुके ( पा० ४।६।८७ ) इति यणादेशः । अत्र लक्षणप्रतिपदोक्तपरिभाषा ( प० १०५ ) लक्ष्यानुरोधान्नाश्रीयते । इतरथा हि आजुह्वान इत्यादिषु यणादेशो न स्यात् । न चैवं सति सातये हुवे वाम् ( ऋ० ६-७-१३ ) इत्यादावपि तथा स्यादिति वाच्यम् । अनेकाच्त्वाभावात् । अनेकाच इति हि तत्रानुवर्तते । प्रत्ययस्वरेणान्तोदात्तत्वम् । हिचेति

निघातप्रतिषेधः । महावीरं महांश्चासौ वीरश्च महावीरः । आन्महतः० ( पा० ६-३-४६ ) इति आत्वम् । तुविबाधम् । बाधृ विलोडने । तुवीन् प्रभूतान् बाधते इति तुविबाधः पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वम् समृतिम् । तादौ चेति गतेः प्रकृतिस्वरत्वम् । रुजानाः रुजो भङ्गे । रुजन्ति कूलानीति रुजानाः नद्यः रुजाना नद्यो भवन्ति रुजन्ति कूलानि ( नि० ६-४ ) इति यास्कः । नद्यः रुजाना नद्यो भवन्ति रुजन्ति कूलानि ( नि० ६-४ ) इति यास्कः । अदुपदेशाल्लसार्वधातु-व्यत्ययेन शानच् । तुदादिभ्यः शः । नुमभावश्छान्दसः । अदुपदेशाल्लसार्वधातु-कानुदात्तत्वे विकरणस्वरः । पिपिषे । पिष्लृ सञ्चूर्णने । व्यत्ययेन लिट् । इन्द्रशत्रुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥

## हिन्दीभाषान्तर

दर्पयुक्त, अशक्त योद्धा के सदृश ( वृत्र ने ) सबको पराभूत करने वाले ( और ) सोम की आखिरी बूँद तक को पी जाने वाले महावीर ( इन्द्र ) को ललकारा । ( परन्तु वह वृत्र ) उस ( इन्द्र ) के अस्त्रों की गति ( प्रहार ) से पार न पा सका । जिसका शत्रु इन्द्र है उस ( वृत्र ) ने ( गिरकर ) नदियों ( के तटों ) को पीस डाला ।

## टिप्पणियाँ

१. अयोद्धेव दुर्मदः—अयोद्धा इव, सायण, बर्गेन्य, जिमरमान इसे बहुव्रीहि समास कहते हैं, न विद्यते योद्धा अस्येति । ग्रासमान, गेल्डनर, वाकरनागल, ओल्डेनबर्ग इसे तत्पुरुष मानते हैं, न योद्धा इति । तृन् प्रत्ययान्त शब्द नञ् ( अ, अन् ) के साथ समस्त होने पर विकल्परूप में अन्तिम वर्ण में उदात्तस्वर से युक्त होते हैं ( विभाषा तृन्नतीक्ष्णशुचिषु, पा० ६.२.२६१; नञ्सुभ्याम्, ६.२.१७२ )। विल्सन, अयोद्धा—जिसका जोड़ीदार कोई दूसरा योद्धा न हो; ग्रिफिथ, निर्बल योद्धा; पीटर्सन, असमर्थ योधा की तरह । दुर्मदः—सायण; विल्सन, दर्पयुक्त, मिथ्याभिमानी; ग्रिफिथ, पागल; पीटर्सन, नशे में धुत, मतवाला ।

२. जुह्वे—हु पुकारना, ललकारना + लिट्, प्र० पु०, ए० व० ।

३. ऋजीषम्—इस शब्द का प्रयोग केवल यहीं मिलता है । इन्द्र को ऋजीषी कहा गया है, ऋजीषी वज्री, ऋ० सं० ५.४०.४, दे० १०.९८.१। ऋजीषी का अर्थ है सोम का ऋजीष ( तलछट ) सहित पी जाने वाला । निरु० के

अनुसार छाने गये या स्वच्छ किये गये सोम के अवशिष्ट भाग को ऋजीष कहते हैं—यत् सोमस्य पूयमानस्यातिरिच्यते तद् ऋजीषम् अपार्जितं भवति (९.७)—रसादन्यदसारमतिरिच्यते तद् ऋजीषम् (दुर्ग)। इन्द्र को ऋजीषी इसलिए कहा जाता है कि उसके घोड़ों को ऋजीष मिलता है—हर्योरस्य स भागः (निरु०), अश्वयोरस्येन्द्रस्य स भागो यदृजीषम् (दुर्ग)। अर्ज्यते तदिति ऋजीषम्, अर्ज अर्जने + ईषन्, अर्जेर्ऋज च, द० उ० ९.११, पं० उ० ४.२०, सि० कौ० ८.४७६। गेल्डनर, ग्रासमान, ऋञ्ज; निर्देश देना से ऋजीषी शब्द बनाते हैं।

४. तुविबाधम्—तुवीन् प्रभूतान् बाधते इति तुविबाधः-शक्तिशालीबाधक। तुवि (शक्तिसम्पन्न, प्रभूत, प्रचुर) + बाधृ (विलोडने) + अच् (पचादि)। तुवि नि० (३.१.२) में बहुनामों में पठित है। वृद्ध्यर्थक तवतेः सौत्राद्धातोः इ-प्रत्ययः।

५. अतारीत्—तॄ (तरणसम्प्लवनयोः) + लुङ् + प्र० पु०, ए० व०, पार किया।

६. समृतिम्—सम् + ऋ (गतौ) + क्तिन्, संगम। वधानां समृतिम्। शस्त्र की गति को (प्रहार को, तु. समर, अरि)।

७. रुजानाः—रुजो (भंगे, भंग करना, तोड़ना) + शानच् (व्यत्यय से); तटों को तोड़ने वाली नदियाँ—रुजाना नद्यो भवन्ति रुजन्ति कूलानि, निरु० ६.१। नि० १.१३.८ में रुजाना नदीवाचक शब्दों में परिगणित है। सम्पिपिषे-पिष्, चूरचूर कर देना, पीसना, लिट् + प्र० पु०, ए० व०—को कर्तृवाच्य मानकर सायण रुजानाः को उसका कर्म मानते हैं। ब्लूमफील्ड, ओल्डेनबर्ग और गेल्डनर सम्पिपिषे को भाववाच्य मानकर 'रुजानाः' को 'इन्द्रशत्रुः' का विरुद मानते हैं। उपर्युक्त योरोपीय वेदवित् अपनी भ्रान्त उपपत्ति पर आधृत होकर अनेक व्याख्याभास प्रस्तुत करते हैं। ब्लूमफील्ड आवृत्ति लोर (हिपोलोजी) से रुजान + आस—भग्नमुख, रुजान + नास्, टूटी हुई नाक वाला अर्थ सिद्ध करते हैं। ओल्डेनबर्ग के अनुसार—रुजा + अनास् (वज्रप्रहार के कारण रुजा—पीड़ा से अनास्, मुखरहित या नासिकाविहीन); गेल्डनर, रुज + अनसे (अनस्, बैलगाड़ी को तोड़ने वाला); रुज + नास् (टूटी हुई नाक वाला)। पिटर्सन, गेल्डनर का अनुकरण करते हुए रुजानाः का अर्थ रथभंजक करते हैं।

८. इन्द्रशत्रुः—इन्द्रः शत्रुः (शातयिता) यस्य स इन्द्रः। इन्द्र है मारने वाला जिसका, जिसका शत्रु इन्द्र है।

अपादहस्तो अपृतन्यदिन्द्र-
मास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूष-
न्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥

पदपाठः

अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान । वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

सायणभाष्यम् ७

अपात् वज्रेण छिन्नत्वात्पादरहितः अहस्तः हस्तरहितो वृत्रः इन्द्रमुद्दिश्य अपृतन्यत्। पृतनां युद्धमैच्छत्। द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः। अस्य हस्तपादहीनस्य वृत्रस्य सानौ पर्वतसानुसदृशे प्रौढस्कन्धे अधि उपरि वज्रं जघान इन्द्र आभिमुख्येन प्रक्षिप्तवान्। अशक्तस्यापि युद्धेच्छायां दृष्टान्तः। वध्रिः छिन्नमुष्कपुरुषः वृष्णो रेतःसेचनसमर्थस्य पुरुषान्तरस्य प्रतिमानं सादृश्यं बुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमितिशेषः। सवृत्रः पुरुत्रा बहुष्ववयवेषु व्यस्तः विविधं क्षिप्तः ताडितः सन् अशयत् भूमौ पतितवान्। अपात्। बहुव्रीहौ पादशब्दस्यान्त्यलोपश्छान्दसः। अहस्तः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम्। अपृतन्यत्। सुप आत्मनः क्यच्। कव्यध्वरपृतनस्येत्यन्त्यलोपः। बुभूषन्। सनिग्रहगुहोश्च (पा० ७।२।१२) इतीट्प्रतिषेधः। पुरुत्रा। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् (पा० ५।४।५६) इति सप्तम्यर्थे त्राप्रत्ययः। अशयत्। व्यत्ययेन परस्मैपदम्। बहुल छन्दसीति शपो लुगभावः। व्यस्तः। असु क्षेपणे इत्यस्मात् कर्मणि क्तः। यस्य विभाषेतीट्प्रतिषेधः। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। संहितायामुदात्तस्वरितयोर्यण् इति परस्यानुदात्तस्य स्वरितत्वम् ॥

हिन्दीभाषान्तर

पैरों, (तथा) हाथो से हीन (वृत्र) ने इन्द्र से समर करना चाहा; (इन्द्र ने) उस (वृत्र) के कन्धे पर वज्र से प्रहार किया। नपुंसक वृत्र

बलवान् के समान बनने की इच्छा करता हुआ—अनेक स्थानों में ( अंगों द्वारा ) बिखर कर सो गया।

## टिप्पणियाँ

१. अपात्, अहस्तः—ब० व्री० समास, पैरो से रहित, हाथो से रहित। तु०—वृत्रोऽथ यदपात् समभवत् तस्मादहिः—श० ब्रा० १।६।३।९।

२. अपृतन्यत्—पृतनाम् आत्मन ऐच्छत्—पृतना + क्यच्—पृतन्य + लङ्, प्र० पु०, ए० व०। युद्ध करने की इच्छा की, लड़ना चाहा।

३. सानौ—षणु दाने + ञुण्, षण् सम्भक्तौ + ञुण् ( सनोति, सनति ), दृसनिजनिचरिचटिरहिभ्यो ञुण्, द० उ० १।८८, पं. उ० १।३, सि० कौ० १।३। सनोति ददाति सुखमिति सानुः, क्षीरस्वामी, अ० को० २।३।५। षणु + युण्, दृसनिजनि, भानुजिदीक्षित, अ० को०, वही। सानु समुच्छ्रितं भवति, समुन्नमिति वा, निरु० २।७। सानु पर्वत की चोटी को कहते हैं, क्योंकि वह ऊपर की ओर उठी होती है या ऊपर की ओर प्रेरित होती है। सायण, सानु सदृशे प्रौढस्कन्धे—सानु के समान दृढ़ कंधे, विल्सन सायण का अनुकरण करते हैं। ग्रिफ़िथ, कन्धे और पीटर्सन, पीछे, पीठ पर।

वज्रम् अस्य सानौ अधि जघान—( इन्द्र ने ) वज्र से इसके कन्धे के ऊपर प्रहार किया।

४. जघान—हन् ( हिंसागत्योः ) + लिट्, प्र० पु०, ए० व०। मारा, वध किया, हना।

५. वध्रिः—नपुंसक, बधिया। प्रतिमानं बुभूषन्—प्रतिरूप बनने की इच्छा करता हुआ, जोड़ीदार होने की लालसा रखता हुआ।

६. पुरुत्रा—दे० वाक्-सूक्त ३, टिप्पणी।

७. अशयत्—शीङ् ( स्वप्ने ) + लङ्, प्र० पु०, ए० व० [ सो गया, गिर पड़ा.। ]

८. व्यस्तः—वि + असु ( क्षेपे, फेंकना, बिखर जाना ) + क्त—विविध स्थानों में गिरा हुआ, फेंका गया, प्रक्षिप्त।

नुदं न भिन्नममुया शयानं
मनोरुहाणा अति यन्त्यापः ।
याश्चिद्वृत्रो महिना पर्यतिष्ठ-
त्तासामहिः पत्सुतःशीर्बभूव ॥ ८ ॥

पदपाठः

नुदम् । न । भिन्नम् । अमुया । शयानम् । मनः । रुहाणाः । अति । यन्ति । आपः । याः । चित् । वृत्रः । महिना । परिऽअतिष्ठत् । तासाम् । अहिः । पत्सुतःऽशीः । बभूव ॥ ८ ॥

सायणभाष्यम् ८

अमुयामुष्यां पृथिव्यां शयानं पतितं मृतं वृत्रमापो जलानि अति यन्ति अतिक्रम्य गच्छन्ति । तत्र दृष्टान्तः । भिन्नं बहुधा भिन्नकूलं नदं न सिन्धुमिव । यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्त्वातिक्रम्य गच्छन्ति तद्वत् । कीदृश्य आपः । मनोरुहाणाः । नृणा चित्तमारोहन्त्यः । पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपो भूमौ वृष्टा न भवन्ति तदानीं नृणा मनः खिद्यते । मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लङ्घ्य प्रवहन्ति तदा वृष्टिलाभेन तु मनुष्यास्तुष्यन्तीत्यर्थः । तदेतदुत्तरार्धेन स्पष्टीक्रियते । वृत्रो जीवनदशायां महिना स्वकीयेन महिम्ना याश्चित् या एव मेघगता आपः पर्यतिष्ठत् परिवृत्य स्थितवान् । अहिर्वृत्रो मेघः तासामपां पत्सुतः शी पादस्याधः शयानो बभूव । यद्यप्यपां पादो नास्ति तथाप्यद्भिर्वृत्रस्याभिलङ्घितत्वात् पादस्याधः शयनमुपपद्यते । भिन्नम् । रदाभ्यां निष्ठातो नः (पा० ८।२।४२) इति नत्वम् । अमुया । सुपां सुलुगिति सप्तम्या याजादेशः । शयानम् । शीङ् सार्वधातुके गुणः (पा० ७।४।२१) धातोर्ङित्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । रुहाणाः । रुह बीजजन्मनि प्रादुर्भावे । व्यत्ययेन शानच् । कर्तरि शपि प्राप्ते व्यत्ययेन शः । अनित्यमागमशासनमिति वचनान्मुमभावः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरे प्राप्ते धातुस्वरः । महिना । मह पूजायाम् । सर्वधातुभ्य इन् (उ० ४।११७) इतीन्, प्रत्ययः ।

व्यत्ययेन विभक्तेरुदात्तत्वम् । यद्वा महिना महिम्ना । महच्छब्दस्य पृथ्व्यादिषु पाठात्तस्य भाव इत्येतस्मिन्नर्थे पृथ्व्यादिभ्य इमनिज्वा ( पा० ५।१।१२२ ) इति इमनिच् प्रत्ययः । टेरिति टिलोपः । चित इत्यन्तोदात्तत्वम् । तृतीयैकवचने अल्लोपे सति उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वम् । मकार लोपश्छान्दसः । पत्सुतः शीः । पादस्याधः शेत इति पत्सुतःशी । क्विप् चेति क्विप । तसि पद्वन्नित्यादिना पादशब्दस्य पदादेशः । शस्प्रभृतिष्विति प्रभृतिशब्दः प्रकारवचन इति शलादोष-णीत्यत्रापि दोषन्नादेशो भवति ( का० ६।१।६३ ) इत्युक्तत्वात् । मध्ये सु इति शब्दोपजनश्छान्दसः । यद्वा पादशब्दस्य सप्तमीबहुवचने पदादेशे कृत इतराभ्योऽपि दृश्यन्ते ( पा० ५।३।१४ ) इति सप्तम्यर्थे तसिल् । लुगभावश्छान्दसः ॥

## हिन्दीभाषान्तर

मन को आकर्षित करता हुआ जल, विभक्त नद के समान, इस ( पृथ्वी ) पर सोए हुए ( वृत्र ) को अतिक्रान्त करता हुआ बह रहा है । वृत्र अपने पराक्रम से जिस जल को चारो ओर से घेरे हुए था, अहि ( आज ) उसी ( जल ) के पैरों के नीचे सोने वाला बन गया है ।

## टिप्पणियाँ

१. नदम्—णद् ( अव्यक्ते शब्दे ) + अच् ( पचादि ), बड़ी नदी जैसे शोणभद्र ( सोन ) को महानद कहते हैं । भिन्नम्-भिदिर् ( विदारणे ) + क्त । नदं न भिन्नम्—छिन्न-भिन्न, बटे हुए नद के समान ( न उपमावाचक ) ।

२. अमुया—अमू ( अदस् ) से संरचित । सायण, अमुष्यां पृथिव्याम्, इस पृथ्वी पर, विल्सन भी इसी अर्थ को मानते हैं । गेल्डनर, इस प्रकार से पड़ा हुआ—नग्न, अनावृत; पीटर्सन, उस अवस्था में ।

३. शयानम्-शीङ् (स्वप्ने) + कानच् । नदं न भिन्नममुया शयानम्—सायण का अनुगमन करते हुए विल्सन इसका अर्थ करते हैं—टूटे कगारवाले नद के सदृश इस पृथ्वी पर सोया हुआ । ग्रिफिथ—तट तोड़ने वाली नदी के समान…। पीटर्सन—टुकड़े-टुकडे होकर गिरे हुए वृषभ की तरह वह पड़ा हुआ था ।

पिश्चेल नद का अर्थ नड ( नरकट ) मानते हैं । नड अर्थ से दूसरा अर्थ 'पुरुष जननेन्द्रिय' भी सिद्ध करने का प्रयास करते हैं । ओल्डेनबर्ग ने पिश्चेल के अर्थ को नहीं स्वीकारा ।

४. मनोरुहाणाः—मनः ( मनश्चर ) रुह ( बीजजन्मनि, प्रादुर्भावे च ) + कानच्, चढ़ती हुई; सायण चित्त पर चढते हुए। बो० रा० सें० पीटर्सबर्ग को, उसकी शक्ति पर ( स्वामित्व ) प्राप्त करते हुए; ग्रासमन, चहेते की तरह उठते हुए; गेल्डनर, हृदय को आकर्षित करते हुए; ओल्डेनबर्ग; मनु के लिए प्रवहित होते हुए; ग्रिफिथ, साहस ग्रहण करते हुए; पीटर्सन, मनुष्य की रक्षा के हेतु प्रवहित होते हुए।

५. पर्यतिष्ठत्—परि + स्था + लङ्, प्र० पु०, ए० व०—चारों ओर से स्थित हुआ, घेर लिया। महिना पर्यतिष्ठत्—महिमा से चारो ओर घेरकर स्थित हुआ।

६. पत्सुतःशी—पत्सु–पाद + सुप्–पाद को पत् आदेश, ( पद्दन्०– पा० ६।१।६३ ) पत्सु + तसिल् ( सप्तम्यर्थे ) इतराभ्योऽपि दृश्यन्ते, पा० ५।३।१४ ) पत्सुतः + शीङ् ( स्वप्ने ) + क्विप्–तत्पुरुष समास। अथवा पत्सुतः—में सु का समावेश छान्दस् है। पदस्याधः शेते, पैरो के नीचे सोने वाला। बभूव—भू + लिट्, प्र० पु०, ए० व०।

नीचावया अभवद्वृत्रपुत्रे-
न्द्रो अस्या अव वधर्जभार।
उत्तरा सूरधरः पुत्र आसी-
द्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥

नीचाऽवयाः। अभवत्। वृत्रऽपुत्रा। इन्द्रः। अस्याः। अव। वधः। जभार। उत्ऽतरा। सूः। अधरः। पुत्रः। आसीत्। दानुः। शये। सहऽवत्सा। न। धेनुः ॥ ९ ॥

### सायणभाष्यम् ९

वृत्रपुत्रा वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा नीचावया न्यग्भावं प्राप्ता हताभवत्। पुत्रं प्रहाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः। तदानी-मयमिन्द्रोऽस्या मातुरधोभागे वृत्रस्योपरि वधो हननसाधनमायुधं जभार प्रहृतवान्। तदानीं सूः माता उत्तरापरिस्थितासीत्। पुत्रस्त्वधोभागस्थित–आसीत्। सा च

दानुर्दानवी वृत्रमाता शये । मृता शयने कृतवती । तत्र दृष्टान्तः । धेनुर्लोकप्रसिद्धा गौः सह वत्सा न । यथा वत्ससहिता शयनं करोति तद्वत् । नीचावयाः । वेति खादतीति वयो बाहुः । औणादिकोऽसिप्रत्ययः न्यञ्चौ वयसौ यस्याः सा नीचावयाः । न्यच् शब्दादुत्तरस्या विभक्तेः सुपां सुलुक्पूर्व...—तृतीयैकवचनादेशः । अच इत्यकारलोपे चाविति दीर्घत्वम् ' अञ्चेश्छन्दस्य सर्वनामस्थानम् (पा० ६।१।१७०) इति तस्योदात्तत्वम् । समासे लुगभावश्छान्दसः । बहुव्रीहौ पूर्ववदप्रकृतस्वरत्वम् । यद्वा नीचौ निकृष्टौ वयसौ यस्याः सा । पूर्वपदस्य दीर्घश्छान्दसः । वधः । हन्यतेऽनेनेति वधः । असुनि । हन्तेर्वधादेशः । नित्वादाद्युदात्तत्वम् । जभार । हृग्रहोर्भ इति भत्वम् । सूः । षूङ् प्राणिगर्भविमोचने । सूते गर्भं विमुञ्चतीति सूर्माता । क्विप् चेति क्विप् । दानुः । दो अवखण्डने । दाभाभ्यां नुः (उ० ३।३२)। शये । लटि लोपस्त आत्मनेपदेषु ( पा० ७।१।४१ ) इति तलोपः । शीङ् सार्वधातुक इति गुणोऽयादेशः ॥

## हिन्दीभाषान्तर

जिसका पुत्र वृत्र है, उस ( माता ) ने हाथों को नीचे कर लिया । इन्द्र ने उसके नीचे ( वृत्र पर ) अस्त्र का प्रहार किया । माता ऊपर थी, पुत्र नीचे । बछड़े के साथ ( सोयी हुई ) धेनु के सदृश ( वृत्र की माँ ) दानु सो रही है ।

## टिप्पणियाँ

१. नीचावयाः—न्यञ्चौ (नि + अञ्च) वयसौ अथवा नीचौ (निकृष्टौ) वयसौ यस्याः सा । सा० वयस् का अर्थ बाहु करते हैं; क्योंकि मनुष्य उनसे अपने मुख में भोजन डालता है—वेति खादतीति वयो बाहुः । पीटर्सन, वयस् का अर्थ शक्ति, प्राणवत्ता मानकर अर्थ करते हैं—वृत्र की माता की समाप्त होती हुई प्राणशक्ति ।

वृत्रपुत्रा—वृत्रः पुत्रो यस्याः सा, ब० व्री० समास—जिसका पुत्र वृत्र है ।

२. जभार—भृञ् + लिट् । प्र० पु०, ए० व० । मारा, प्रहार किया । सा० अव का अर्थ नीचे करते हैं । पीटर्सन, अव को जभार के साथ मानकर—नीचे प्रहार किया । सूः—षू, पैदा होना । शये—शीङ् स्वप्ने + लट्, प्र० पु०, ए० व०—सो रही है ।

अतिष्ठन्तीनामनिवेशनानां
काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो
दीर्घं तम आशयदिन्द्रशत्रुः ॥१०॥

पदपाठः

अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रशत्रुः ॥ १० ॥

सायणभाष्यम् १०

वृत्रस्य शरीरमापो विचरन्ति विशेषेण पर्याक्रम्य प्रवहन्ति । कीदृशं शरीरम् । निण्यम् । निर्नामधेयम् अप्सु मग्नत्वेन गूढत्वात्तदीयं नाम न केनापि ज्ञायते । एतदेव स्पष्टीक्रियते । काष्ठानामपां मध्ये निहितम् निक्षिप्तम् । कीदृशानां काष्ठानाम् । अतिष्ठन्तीनां स्थितिरहितानाम् । अनिवेशनानामुपवेशरहितानाम् । प्रवहणस्वभावत्वादेतासा मनुष्यवन्न क्वापि स्थितिः सम्भवति । इन्द्रशत्रुः वृत्रो जलमध्ये शरीरे प्रक्षिप्ते सति दीर्घतमो दीर्घनिद्रात्मकं मरणं यथा भवति तथा आशयत् । सर्वतः पतितवान् । अतिष्ठन्तीनाम् । अव्ययपूर्वपदप्रकृतिस्वरत्वम् । अनिवेशनानाम् । निविशन्तेऽस्मिन्निति निवेशनं स्थानम् करणाधिकरणयोश्च (पा० ३।३।११७) इत्यधिकरणे ल्युट् । तद्रहितानां बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वम् । क्रान्त्वा स्थिताः काष्ठाः पृषोदरादि । निहितम् । गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम् । अत्र यास्कः । अतिष्ठन्तीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघम् । शरीरम् । शृणातेः शम्नातेर्वा । वृत्रस्य निण्यं निर्णामं विचरन्ति विजानन्ति आप इति । दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिन्द्रशत्रुरिन्द्रोऽस्य शमयिता वा शातयिता वा तस्मादिन्द्रशत्रुः । तत्को वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुरः इत्यैतिहासिकाः ( नि० २।१६ ) इति ॥

## हिन्दीभाषान्तर

कभी न रुकने वाली और कभी आराम न करने वाली जल-राशि के मध्य में पड़े हुए वृत्र के औंधे शरीर के ऊपर जल इधर-उधर बह रहा है। जिसका शत्रु इन्द्र है वह ( वृत्र ) घोर अंधकार मे सो गया।

## टिप्पणियाँ

१. अतिष्ठन्तीनाम्—नञ् + स्था + शतृ, ष० ब० व०, न ठहरने वाली, निरन्तर बहने वाली। अनिवेशनानाम्—नञ् + विश् + ल्युट् (अन्)—आराम न करने वाली।

काष्ठानाम्—काश् ( दीप्तौ—प्रकाशित होना, चमकना) + क्थन्—हनि-कुषि-नी-रमि-काशिभ्यः क्थन्(द० उ० ६।२७,पं० उ० २।२,सि० को० २।१६७), सा० भा० धा० वृ० १।४१८। काशन्ते दीप्यन्ते काष्ठा:—देवराज, नि० १।६।५। यहाँ काष्ठा जल के अर्थ में प्रयुक्त है। यास्क ने अनेक पदार्थों का, काष्ठ शब्द को, वाचक माना गया है। काष्ठा दिशो भवन्ति, काष्ठा उपदिशो भवन्ति, आदित्योऽपि काष्ठोच्यते। आज्यतोऽपि काष्ठोच्यते। आपोऽपि काष्ठा उच्यन्ते। क्रान्त्वा स्थिता भवन्ति। निरु० २।५। अनुवर्ती संस्कृत में 'काष्ठा के दिक्।' एक कालमान ( २ क्षण = १ लव, २ लव = १ निमेष, १६ निमेष = १ काष्ठा), उत्कर्ष और स्थिति अर्थ होते हैं;अ० को० १।३।१,४।११;३।३।४१। मो० वि० डि० ( पृ० २८१ ) में काष्ठा का अर्थ—दौड़ने के लिए स्थान, घुड़दौड़ का मैदान, वायु का बहाव, अन्तरिक्ष में बादल—है। ग्रिफिथ के अनुसार काष्ठा जलप्रवाह है, पीटर्सन नदी की धारा, लहर अर्थ उचित मानते हैं। परांजपे, काष्ठा का मूल अर्थ घुड़दौड़ का मैदान था, जिसमें काठ का विजयस्तम्भ रहता था। इस पर आधृत होकर किसी मार्ग, किसी सरणि को काष्ठा कहा जाने लगा। नदी का धारा-प्रवाह के रूप में एक सरणि या मार्ग है।

काष्ठानां मध्ये निहितं शरीरम्—जलराशि—शुभ्र, चमचमाता जल-प्रवाह—के मध्य में स्थित ( वृत्र का ) शरीर।

२. निण्यम्—निर् + णीञ् ( णी + प्रापणे, ले जाना, पहुँचाना ) + यक्। देवराज यज्वा यत् प्रत्यय मानते हैं—निर् शब्दपूर्वात् नयतेः 'अघ्न्यादयश्च'—

इति यत् प्रत्ययः टिलोपो रेफलोपश्च निपात्यते ( नि० ३।२५।१ ) द० उ०, पं० उ०, सि० कौ० ( ८।१४, ४।१२०, ४।१६१ ) में—अघ्न्यादयः शब्दा निपात्यन्ते यक् प्रत्यये निरुद्धाः, यगन्ता निपात्यन्ते, वृ०—यक् प्रत्यय का विधान है। यास्क के अनुसार निण्य का अर्थ निर्णाम है—निण्यं निर्णामम् ( निरु० २।५ )। यास्क के भाष्यकार दुर्ग निर्णाम का अर्थ करते हैं—वह प्रदेश या स्थान जो निचली तरफ झुकता हो—"निण्यं निर्णामं" येनासौ नीचैर्नमति तं प्रदेशम्। सायण, निर्नामधेयम्—नामरहित। निर्णाम श० ब्रा० में भी प्रयुक्त हुआ है--निर्णामौ पक्षयोः करोति। निर्णामौ हि वयसः पक्षयोर्भवतः। तस्मिन् निर्णामे एकामिष्टकामुपदधाति; येयं वयसः पततो निर्णामेत् (१०।२।१।५, २।१।६ )—यहाँ सायण अत्यन्त झुका हुआ अर्थ करते हैं--नितरां नमति। इस सन्दर्भ में एकलिङ्ग झुका हुआ, मुड़ा हुआ अर्थ मानते हैं। से० बु० ई०, भाग ४३, पृ० ३०१।३०२। बौ० श्रौ० ३०।१० में आये निर्णाम का अर्थ, कैलेंड भी, झुका हुआ, मुड़ा हुआ प्रस्तुत करते हैं--इन्डेक्स ऑफ् वर्ड्स, पृ० ४३। ग्रॉसमान–गुप्तस्थान अर्थ कर इस सन्दर्भ का अर्थ करते हैं—वृत्र से दूर। गेल्डनर निण्य का अर्थ--गुह्य भाग मानते हैं। पीटर्सन, वृत्र का गुह्य स्थान अर्थ प्रस्तुत करते हैं। लानमान के अनुसार निण्य शब्द के अर्थ आन्तर, छिपा हुआ, गुप्त है, यहाँ पर--छिपा हुआ है। मेयर हाफ़र भी इन्हीं अर्थों को स्वीकारते हैं--क० इ० डि० १०, पृ० १६१। यदि निरुक्तकार का अर्थ निर्णाम ठीक है तो श० ब्रा०, बौ० श्रौ० में निर्णाम शब्द के अर्थ यह सिद्ध करते हैं कि निण्य का अर्थ झुका हुआ, मुड़ा हुआ, करना उचित है। स्पष्ट है कि वृत्र का शरीर, इन्द्र के वज्र-प्रहार से झुक गया होगा, मुड़ गया होगा और भूमि पर औंधा पड़ गया होगा।

विचरन्ति का अर्थ, यास्क के अनुसार–विजानन्ति—है। विजानन्ति का अर्थ है अच्छी तरह समझ लेना, प्राप्त कर लेना, पहचान लेना। वृत्रस्य निण्यं विचरन्ति आपः—वृत्र के औंधे पड़े हुए शरीर पर जल पहुँच गया। वृत्र के शरीर को जल पहचान गया।

३. दीर्घतम आशयद् इन्द्रशत्रुः—दीर्घं तमः–घोर अन्धकार। आशयत्—सो गया, पड़ गया। इन्द्रशत्रुः—जिसका ( वृत्र का ) शत्रु इन्द्र है। जिसका इन्द्र शत्रु है वह ( वृत्र ) घोर अन्धकार में सो गया।

यज्ञो में होने वाले स्तम्बयजुर्हरण [ वेदि पर स्फ्य ( काठ की तलवार ) का प्रहार करने के अनन्तर जो मिट्टी निकलती है, उसे ले जाकर उत्कर ( कूड़े का स्थान ) में छोड़ने का अनुष्ठान ] में विनियोजित मन्त्र—' ''बधान देव सवितः परमस्यां परावति शतेन पाशैः'—तै० सं० १।१।९, मै० सं० १।१।१०; 'बधान देव सवितः परमस्या पृथिव्या शतेन पाशैः',–का० सं० १।२५, का० सं० १।९–में प्रयुक्त 'परम परावत्' या 'परम पृथिवी' का अर्थ है—घोर अंधकार–सवितारमाहान्धे तमसि बधान, श० ब्रा० १।२।४।१६। वेदि से मिट्टी लेकर उत्कर में छोड़ने का अनुष्ठान शत्रु को अन्धकार मे डालने का प्रतीक है। अतएव वृत्र का अन्धकार मे सोना, उसकी समाप्ति का संकेत करता है। ध्यातव्य है कि अनेक वैदिक सन्दर्भों–ऋग्वेद में भी–में वृत्र अथवा वृत्र के सजातीय अन्य पदार्थों, व्यक्तियों का सम्बन्ध अन्धकार से है। अन्धकार की आवरकता और वृत्र की आवरकता मे कोई भेद नहीं है।

**दासपत्नीरहिगोपा अतिष्ठन्**
**निरुद्धा आपः पणिनेव गावः।**
**अपां बिलमपिहितं यदासीद्-**
**वृत्रं जघन्वाँ अप तद्ववार ॥ ११ ॥**

**पदपाठः**

**दासऽपत्नीः। अहिऽगोपाः। अतिष्ठन्। निऽरुद्धाः। आपः। पणिनाऽइव गावः। अपाम्। बिलम्। अपिऽहितम्। यत्। आसीत्। वृत्रम्। जघन्वान्। अप। तत्। ववार ॥ ११ ॥**

**सायणभाष्यम् ११**

दासपत्नीः। दासो विश्वोपक्षयहेतुर्वृत्रः पतिः स्वामी यासामपां ता दासपत्नीः। अत एवाहि गोपाः। अहिर्वृत्रो गोपा रक्षको यासां ताः। गोपनं नाम स्वच्छन्देन यथा न प्रवहन्ति तथा निरोधनम्। एतदेव स्पष्टीक्रियते। आपो निरुद्धा अतिष्ठन्निति। तत्र दृष्टान्तः। पणिनेव गावः। पणिनामकोऽसुरो गा अपहृत्य बिले

स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः। अपां यद्बिलं प्रवहणद्वारमपिहितं वृत्रेण निरुद्धमासीत् यद्बिलं प्रवहणद्वारं वृत्रं जघन्वान् हतवानिन्द्रोऽपववार अपवृतमकरोत्। वृत्रकृतमपां निरोधं परिहृतवान्। हतवान्। अत्र यास्कः। दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ताः। अहिरयनादेत्यन्तरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहन्तीति। निरुद्धा आपः पणिनेव गावः। पणिर्वणिग् भवति। पणिः पणनाद्वणिक् पण्यं नेनेक्ति। अपां बिलमपिहितं यदासीत्। बिलं भरं भवति बिभर्तेर्वृत्रं जघिवानप ववार तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा यद्वावृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते। यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते। यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते (नि० २।१७) इति। दासपत्नी। दसु उपक्षये। दासयतीति दासो वृत्रः। पचाद्यच्। चितः (६।१।१६३) इत्यन्तोदात्तत्वम्। दासः पतिर्यासां विभाषा सपूर्वस्य (पा० ४।१।३४) इति ङीप्। तत्सन्नियोगेनेकारस्य नकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। यद्वा दासस्य पालयित्र्याः। पत्यावैश्वर्ये (पा० ६।२।१८) इति पूर्वपदप्रकृतिस्वरत्वम्। अहिगोपाः गुपू रक्षणे। गोपायतीति गोपाः। आयादय आर्धधातुके वा (पा० ३।१।३१) इत्यायप्रत्ययः। ततः क्विप्। अतो लोपः। वेरपृक्तलोपाद्वलिलोपो बलीयानिति पूर्वं यकारलोपः (पा० ६।१।६६-६७) न चाचः परस्मिन्नित्यतो लोपस्य स्थानिवत्वम्। न पदान्तद्विर्वचनेति प्रतिषेधात्। अहिर्गोपा यासाम्। पूर्ववत्स्वरः। निरुद्धाः। रुधिरावरणे। झषस्तथोर्धोऽधः (पा० ८।२।४०) इति निष्ठातकारस्य धकारः। गतिरनन्तर इति गतेः प्रकृतिस्वरत्वम्। जघन्वान् हन्तेर्लिटः क्वसुः। अभ्यासाच्च (पा० ७।३।५५) इत्यभ्यासादुत्तरस्य हकारस्य कुत्वम्। क्रादिनियमप्राप्तस्येटो विभाषागमहनेत्यादिना (पा० ७।२।६८) विकल्पविधानादभावः। संहितायां नकारस्य रुत्वानुनासिकावुक्तौ॥

## हिन्दीभाषान्तर

पणि के द्वारा (रोकी गयी) गायों के समान (वह) जल अवरुद्ध पड़ा था, (जिसका) पति दास है, (और) जिसका रक्षक अहि है। जल का बिल जो आवृत था, (इन्द्र ने) वृत्र को मारकर उसे अनावृत कर दिया।

## टिप्पणियाँ

१. दासपत्नीः—दासः–दसु ( उपक्षये, नाश ) + ( णिच् ) ( पचादि ), दास का अर्थ है, असुर, राक्षस, समाज के हित का विनाशक, कर्म का समापक–तु०–दासो दस्यतेः, उपदासयति कर्माणि, निरु० २।५। मेयर हाफर–असुर, राक्षस, बर्बर, परिचारक ( क० इ० डि० १।३८ )। दास, दस्यु शब्द, ऋग्वेद मे, आर्यों के समस्त शत्रुओं—असुर तथा मानव—के निमित्त प्रयुक्त हुए हैं। यहाँ पर, जैसा कि सायण को अभिमत है, स्पष्टतः प्रतीति होती है कि अनार्य जातियो की ओर संकेत किया है। ग्रॉसमन भी इसी मत में आस्था रखते हैं। रॉथ इसका अर्थ राक्षसो की सन्तान करते हैं।

ऋग्वेद मे दास शब्द ६१ बार तथा दस्यु शब्द ८४ बार प्रयुक्त हुआ है। इन शब्दो के सम्यग् अर्थबोध में विद्वद्वर्ग एकमत नहीं है। कतिपय विद्वान् दास दस्यु को आर्यों का अनार्य शत्रु मानते हैं ( कैम्ब्रिज हिस्ट्री, पृ० ८४-८६; कीथ; रिलीजन ऐण्ड फिलासफी आफ वेद, पृ० २३४; रेगोजिन, वैदिक इण्डिया, पृ० २८३ )। डॉ० सुनीतिकुमार चटर्जी के अनुसार उपर्युक्त शब्द अधिकांशतः द्रविडो के लिए प्रयुक्त हुए हैं ( इण्डो आर्यन ऐण्ड हिन्दी, पृ० ४७ ) राबर्ट शेफर शारीरिक संघटन पर आधृत हो इन्हे निषाद कहते हैं ( एथनोग्रॉफी आफ एन्शियेण्ट इण्डिया, पृ० ९ )। इन मतवादो के रहते हुए भी कहा जा सकता है कि वृत्र आदि के वर्णन से यह प्रतीत होता है कि दास शब्द का प्रयोग असुर पिशाचो के लिए भी हुआ है। ऋग्वेद मे वृत्र को छह नेत्रों एवं तीन सिरो से युक्त कहा गया है ( षडक्षं त्रिशीर्षाणम्, १०।९९।६ तुलनीय : 'थ्रि. कमृदॅम् ख्षवृश् अषीम्' ( त्रिकमूर्धानम्, षडक्षम् )—अवेस्ता, हओम यश्त, यस्न ९, ( दास का अवेस्ता में समान शब्द 'दाह' )। यद्यपि यह ठीक है कि इन्द्र का 'अमानुष', 'मायावी' असुरो के साथ जो युद्ध-वर्णन है उसके पीछे एक ऐतिहासिक एवं मानवीय संघर्ष की प्रतिध्वनि है, (डॉ० गोविन्दचन्द्र पाण्डेय, स्टडी इन दी ओरिजिन्स आफ बुद्धिज्म, पृ० २५४), तथापि वैदिक वर्णना में दास-दस्यु शब्द का प्रयोग प्रायः असुरों के लिए हुआ है। पं० क्षेत्रेशचन्द्र चट्टोपाध्याय के अनुसार दास-दस्यु का अर्थ असुर स्वीकारना ही युक्तिपूर्ण एवं मान्य है (पं० क्षेत्रेशचन्द्र चट्टोपाध्याय, उद्धृत, डॉ० गोविन्दचन्द्र

पाण्डेय वही पृ० २५३ )। गिरीशचन्द्र अवस्थी, दस्यु-विवेचन तथा दासमीमांसा। यास्क के अनुसार पति शब्द का अर्थ है—रक्षक या पालक—पाता, पालयिता वा ( निरु० १०।२।४ )। इस दृष्टि से यहाँ अर्थ होगा दास ने जिन्हें घेरकर अपने वश में कर रखा है—दासः पतिर्यासां ताः, दासपत्नीः, ब० व्री० समास।

२. अहिगोपाः—अहिः गोपाः यासां ताः, अहि है गोपा (रक्षक) जिनका ( वे जल )। गोपा के अर्थ के लिए दे०, अग्निसूक्त, ८ टिप्पणी। गुपू रक्षणे + क्विप् (सायण)। रक्ष धातु का पुराना अर्थ है—घेरना, रोकना—देवान् ह वै यज्ञेन यजमानास्तानसुररक्षसानि ररक्षुर्न यक्ष्यध्व इति, तद् यदरक्षन् तस्माद् रक्षांसि, श० ब्रा० १।१।१।१६। इस सन्दर्भ में प्रयुक्त रक्ष का अर्थ सायण घेरना करते हैं; एगलिंग, रोकना। इस दृष्टि से अहिगोपा का अर्थ होगा; अहि द्वारा आवृत, घेरा गया, रोका गया ( जल )।

दासपत्नी और अहिगोपा की उपर्युक्त अर्थ-संरचना को मन्त्र में प्रयुक्त 'निरुद्धाः' ('आपः' और 'गावः' दोनों का विशेषण) शब्द भी प्रमाणित करता है। पणि द्वारा गायों का निरोधन अनुप्रथा (माइथॉलोजी) में अनेकत्र प्रतिपादित है। उपमा की अर्थवत्ता भी दास०, अहि० के पूर्वोक्त अर्थ के परिसर में ही सम्भव है।

३. निरुद्धाः—नि + रुध् + क्त—रोका गया, घेरा गया, निरोध में पड़ा हुआ।

पणिना इव—यास्क पणि का अर्थ वणिक् करते हैं—पणिर्वणिग् भवति। पणिः पणनात्—पण ( व्यवहारे, स्तुतौ च ) + इन् ( 'इन्' द० उ० १।४६, पं० उ० ४।१२६; 'सर्वधातुभ्य इन्', सि० कौ० ४।५६७ ); वणिक् पण्य नेनेक्ति—पण्य + निज् ( णिजिर् शौचपोषणयोः ) + क्विप् ( ण्य का लोप, पकार को वकार, पृषोदरादि )। लौकिक संस्कृत में वणिक् शब्द पण धातु से ही बनता है—पण = इजि ( द० उ०, ४।८; पं० उ० २।७१; सि० कौ० २।२३८; पणेरिज्यादेश्च वः इति इजि प्रत्ययः, पकारस्य च वकारः, सायण, मा० धा० वृ०, १।२९१–९२ )। आधुनिक लोग पणि का अर्थ लोभी, कृपण, मक्खीचूस करते हैं। मेयर हाफ़र—विद्वेषी असुरों की एक जमात का नाम पणि है। पणि के स्वामी को भी पणि कहते हैं। ऋग्वेद में एकवचन में पणि का प्रयोग पणियों के अधिपति के लिए हुआ है ( क० इ० डि०, भाग ११।१९५ )।

निरुद्धा आपः पणिनेव गावः—पणि द्वारा रोकी गयी गायों के समान।

८. बिलम्—डुभृञ् ( धारणपोषणयोः ) + क ( कर्मणि )—बिलं भरं भवति बिभर्तेः ( निरु० )। भृतमुदकादिभिरिति बिलम्। लौकिक संस्कृत में बिल भेदने + क ( पा० ३।१।१३५ )।

अपिहितम्—अपि + धा + क्त—ढँका हुआ, आवृत, घिरा हुआ। पिहित भी होता है—वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्ताना यथा वाचा निशा दिशा। सि० कौ० सू० २।४।८२।

अपां बिलम्—जल का बिल। अपिहितं यद् आसीत्—जो ढँका था, घिरा था।

५. जघन्वान्—हन् + क्वसु—मारा। वृत्रं जघन्वान्—वृत्र को मारा। ववार—वृञ् + लिट्, प्र० पु०, ए० व०—अनावृत्त किया, मुक्त कर दिया, छोड़ा, खोला। अप तद् ववार—उस जल को मुक्त कर दिया, खोल दिया।

**अश्व्यो वारो अभवस्तदिन्द्र**
**सृके यत्त्वा प्रत्यहन्देव एकः।**
**अजयो गा अजयः शूर सोम-**
**मवासृजः सर्तवे सप्त सिन्धून्॥ १२॥**

पदपाठः

**अश्व्यः। वारः। अभवः। तत्। इन्द्र। सृके। यत्। त्वा। प्रतिऽअहन्। देवः। एकः। अजयः। गाः। अजयः। शूर। सोमम्। अव। असृजः। सर्तवे। सप्त। सिन्धून्॥ १२॥**

सायणभाष्यम् १२

सृके वज्रे। सृको वृक इति वज्रनामसु पठितत्वात्। युद्धे देवो दीप्यमानः सर्वायुधकुशल एकोऽद्वितीयो वृत्रो यद्यदा त्वा त्वा प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् तत्तदानीं त्वमश्व्यो वारोऽश्वसम्बन्धी बालोऽभवः। यथाश्वस्य बालोऽनायासेन मक्षिकादीन्निवारयति तद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः। किं च गाः पणिनापहृतास्त्वमजयः। जितवान्। हे शूर शौर्ययुक्तेन्द्र सोममजयः। जितवान्।

तथा च तैत्तिरीयाः त्वष्टा हतपुत्र इत्यस्मिन्नुपाख्याने समामनन्ति । स यज्ञवेशसं कृत्वा प्रासहा सोमममपिबत् ( तै० सं० २।४।१२ ) इति । सप्तसिन्धून्—इमं मे गङ्गे ( ऋ० १०।७५।५ ) इत्यस्यामृच्याम्नाता गङ्गाद्याः सप्तसंख्याका नदीः । सर्तवे सर्तुं प्रवाहरूपेण गन्तुं अवासृजः संत्यक्तवान् । वृत्रकृतं प्रवाहनिरोधं निराकृतवानित्यर्थः । अश्व्यः अश्वे भवः । भवे छन्दसीति यत् । यतोनाव इत्याद्युदात्तत्वम् । वारयति दंशमशकानिति वारः । पचाद्यच् । कपिलकादित्वाल्लत्वविकल्पेः ( म० ८–२–१८ ) वृषादित्वादाद्युदात्तत्वम् । प्रत्यहन् । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । तिङि चोदात्तवतीति गतेरनुदात्तत्वम् । अजयः । गा इत्यस्य वाक्यान्तरगतत्वात्तदपेक्षयास्य तिङ्ङतिङ इति निघातो न भवति । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः (पा० १।१।१८।५) इति वचनात् । सर्तवे । तुमर्थे सेसेनिति ( पा० ३।४।९ ) तवेन् प्रत्ययः । नित्वादाद्युदात्तत्वम् ॥

## हिन्दीभाषान्तर

इन्द्र, जब ( वृत्र ने ) तुम्हारे वज्र पर पलट कर प्रहार किया, तब ( तुम ) अद्वितीय देव घोड़े की पूँछ के बाल बन गये । ( तुमने ) गायें जीती, वीर, ( तुमने ) सोम जीता और सात नदियों को बहने के लिए मुक्त किया ।

## टिप्पणियाँ

१. अश्व्यः— अश्व + यत्—अश्व से सम्बद्ध, घोड़े का । वारः—वृञ् + अच् ( पचादि ) + घञ्—बाल, केश, यहाँ आलङ्कारिक प्रयोग—इन्द्र ने आत्मरक्षा के लिए फुर्ती से कार्य किया, या उसे एक ओर हटा दिया । 'बाला दंशवारणार्था भवन्ति'—( निरु० १।६ । ) अभवः—भू + लङ् । म० पु०, ए० व० ।

२. सृके—सृ (गतौ) + कक्–सृवृभूसुषिमुषिभ्यः कक् (सि०कौ० ३।३२८); सृवृभूशुषिमुषिभ्यः कित् ( सृ + क; ससर्ति इति ); द० उ० ३।१९ । सृक का, नि० २।२०।६ में, वज्रवाचक शब्दों में पाठ है ।

३. अजयः—जि + लङ्, म० पु०, ए० व०—जीत लिया । असृजः—सृज् + लङ्; म० पु०, ए० व०—मुक्त किया, छोड़ दिया । सर्तवे, सृ + तवे । बहने के लिए, प्रवहित होने के लिए, प्र-सरण, प्र-सार के लिए ।

४. सप्त सिन्धून्—सायण के अनुसार इसके दो अर्थ हैं ( १ ) प्रसर्पित जल, ( २ ) गङ्गा, यमुना आदि सात मुख्य नदियाँ । सायण के दूसरे अर्थ में

गङ्गा, यमुना, गोदावरी, सरस्वती, नर्मदा, सिन्धु, कावेरी नामक सात नदियो का संकेत है, तुलनीय—जलशुद्धि का पौराणिक मन्त्र—'गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु'।

मैक्समूलर के अनुसार ऋग्वेदीय आर्यों का जीवन पंजाब एवं सैंधव घाटी में बीता। गंगा का ज्ञान सम्भवतः अत्यल्प था। ऋग्वेद में केवल १०।७५।५ में गंगा शब्द आया है। 'आर्य लोगो को गङ्गा से परिचय बहुत बाद में हुआ था' (पं० क्षेत्रेशचन्द्र चट्टोपाध्याय, वैदिक भूगोल, भूगोल, भुवनकोष विशेषाङ्क, पृ० ४१)। ध्यातव्य है कि आर्यों को दक्षिण का कुछ भी परिचय न था। मैक्समूलर का विचार है कि पंजाब की पाँच नदियाँ एवं सिन्धु, सरस्वती ही सात नदियाँ हैं।

जिमरामॅन इन नदियों के शोध मे अनवहित हैं। टामस के अनुसार प्रारम्भिक 'सप्तसिन्धु' में ओक्सस ( वक्षु ) अवश्य रही होगी।

वस्तुतः लोग सात नदियो से प्रधान नदियो को समझते हैं। परन्तु सात प्रधान नदियो के अभिधान की व्यवस्था करना अत्यन्त दुष्कर है। मैक्समूलर का मत भी मान्य नहीं हो सकता क्योकि पञ्जाब की अन्य नदियों तथा सिन्धु की सहायक नदियो का भी ऋषियो ने उल्लेख किया है और उन्हें छोड़ने का किसी का कोई अधिकार नहीं है। सम्भवतः आर्य अपने मूलनिवास में सात नदियो से ही परिचित थे, अतः 'सब-नदी' के अर्थ में 'सात नदी' कहना उनका स्वभाव हो गया होगा। सब नदियो के अर्थ में ऋक्संहिता में 'सप्त-सिन्धवः' या 'सप्तस्रवतः' या ऐसे शब्द आये हैं; जिनका अर्थ है 'सात नदियाँ'। अतएव यहाँ 'सप्तसिन्धून्' का अर्थ समस्त नदी या जल होगा ( देखिए, पं० चट्टोपाध्याय, वही, पृ० ४२-५० )। सप्त अवेस्ता में हप्त, लैटिन मे सेप्टम् और सप्तसिन्धु अवेस्ता में हप्तहेन्दु है।

नास्मै॑ वि॒द्युन्न त॑न्य॒तुः सि॑षेध॒

न यां मिह॒मकि॑र॒द्ध्रादु॒निं॑ च।

इन्द्र॑श्च॒ यद्यु॑यु॒धाते॒ अहि॑-

श्चो॒ता प॒रीभ्यो॑ म॒घवा॒ वि जि॑ग्ये ॥१३॥

### पदपाठः

न । अस्मै । विऽद्युत् । न । तन्यतुः । सिषेध । न । याम् । मिहम् । अकिरत् । ह्रादुनिम् । च । इन्द्रः । च । युयुधाते इति । अहिः । च । उत । अपरीभ्यः । मघऽवा । वि । जिग्ये ॥ १३ ॥

### सायणभाष्यम् १३

इन्द्रं निषेद्धुं वृत्रो यान्विद्युतादीन् मायया निर्मितवान् ते सर्वेऽप्येनं निषेद्धुमशक्ताः । सोऽयमर्थोऽनेन मन्त्रेणोच्यते । अस्मै इन्द्रार्थं निर्मिता विद्युन्न सिषेध इद्रं न प्राप्नोत् । तथा तन्यतुः गर्जनम् । यां मिहं सेचनं यां वृष्टिमकिरत् वृत्रो विक्षिप्तवान् साऽपि वृष्टिर्न सिषेध । ह्रादुनिं चाशनिमपि यां वृत्रः प्रयुक्तवा सापि न सिषेध । इन्द्रश्चाहिश्च इन्द्रवृत्रावुभावपि युयुधाते युद्धकृतवन्तौ । तदानी विद्युतादयो न प्राप्ता इति पूर्वत्रान्वयः । उतापि च मघवा धनवानिन्द्रः अपरीभ्यः अपराभ्यः अन्यासामपि वृत्रनिर्मितानां मायानां सकाशाद्विजिग्ये विशेषेण जितवान् । सिषेध । षिधु गत्याम् । मिहम् । मिह सेचने । मेहति सिञ्चतीति मिह वृष्टिः । क्विप् चेति क्विप् । अकिरत् । कॄ विक्षेपे । तुदादिभ्यः शः । ऋत इद्धातोरितीत्वम् । अडागम उदात्तः यद्वृत्तयोगादनिघातः । युयुधाते । युद्ध संप्रहारे लिटि प्रत्ययस्वरः । जिग्ये । सन्लिटोर्जेः ( पा० ७-३-५७ ) इत्यभ्यासादुत्तरस्य जकारस्य कुत्वम् ॥

### हिन्दीभाषान्तर

जब इन्द्र और अहि का युद्ध हुआ, ( तब ) न तो बिजली, न गर्जन, न मेघ, न वज्र ही सफल हो सका, जिन्हें ( वृत्र ने ) उस ( इन्द्र ) के लिए फैलाया था, और मघवा ( इन्द्र ) ने ( वृत्र द्वारा किये गये ) अन्य प्रहारों पर भी विजय प्राप्त की ।

### टिप्पणियाँ

१. तन्यतुः—तनु ( विस्तारे ) + यतुच् ऋतन्यञ्जि, सि० कौ० ४,४५०, तनु + यतु, ऋतन्यञ्जि, द० उ० वृ० १०।१२;—'यतुच्' इति युक्तः पाठः । तन्यतु पदस्यान्तोदात्तत्वदर्शनात्, युधिष्ठिर मीमांसक, टिप्पणी वही ।

सिषेध—षिधु (संराद्धौ) लिट्, प्र०पु०,ए० व० । सफल हुआ । मिहम्—मिह (सेचने) से यह शब्द बनता है, यही मेघ ( और हिन्दी मेह ) के मूल में है।

२. ह्रादुनिम्—इस शब्द का प्रयोग केवल यहाँ मिलता है अन्यत्र ह्रादुनी-वृत् मरुतों के विशेषण रूप में है (ऋ० सं० ५।५४।३) । ह्रादुनीवृत् विरुद तथा अनुवर्ती काल के निह्राद या ह्रादिनी जैसे शब्दों पर आधृत होकर कहा जा सकता है कि ह्रादुनी एक ऐसी वस्तु है जो वज्र के समान है। सायण का वज्र अर्थ इसी दृष्टि से उचित है। योरोपीय विद्वानो का अर्थ—उपल-वृष्टिगलत प्रतीत होता है—पराजपे ।

३. अकिरत्—कृ ( विक्षेपे—छितराना, छिटकाना, बिखेर देना ) + लङ्, प्र० पु०, ए० व०—फैला दिया । युयुधाते—युध् ( लड़ना, प्रहार करना ) + लिट , प्र० पु०, द्विव० ।

४. अपरीभ्यः—सा० ( वृत्र द्वारा फैलायी गयी ), अन्य ( माया ) । ग्रिफिथ, पीटर्सन, पराजपे—आने वाले दिन । विजिग्ये—वि + जि + लिट्, प्र०पु०,ए० व० ।

अहे॑र्या॒तारं॒ कम॑पश्य इन्द्र
हृ॒दि यत्ते॑ ज॒घ्नुषो॒ भीरग॑च्छत् ।
नव॑ च॒ यन्न॑व॒तिं च॒ स्रव॑न्तीः
श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि ॥ १४ ॥

पदपाठः

अहेः॑ । या॒तार॑म् । कम् । अ॒प॒श्य॒ः । इ॒न्द्र॒ । हृ॒दि । यत् । ते॒ । ज॒घ्नुषः॑ । भीः । अग॑च्छत् । नव॑ । च॒ । यत् । न॒व॒तिम् । च॒ । स्रव॑न्तीः । श्ये॒नः । न । भी॒तः । अत॑रः । रजां॑सि ॥१४॥

सायणभाष्यम् १४

हे इन्द्र जघ्नुषो वृत्रं हतवतस्तव चित्ते यद्यदि भीरगच्छत् न हतवानस्मीति बुद्धया भयं प्राप्नुयात् यर्ह्यहेर्वृत्रस्य यातारं हन्तारं कमपश्यः । त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि तादृशस्य पुरुषान्तरस्याभावान्मा भूत्तव भयमित्यर्थः । यद्यस्मा-त्कारणात्त्वं नव च नवतीं च स्रवन्तीः एकोनशतसंख्याकाः प्रवहन्तीर्नदीः प्राप्य

रजांसि तत्रत्यान्युदकान्यतरः । तीर्णवानसि । तत्र दृष्टान्तः । श्येनो न । श्येन-नामको बलवान् पक्षीव । दूरगमनात्तव भयमासीदिति गम्यते । तद्भयं मा भूदि-त्यभिप्रायः । तच्च दूरगमनं ब्राह्मणे समाम्नातम् । इन्द्रो वै वृत्रं हत्वा नास्तृषीति-मन्यमानः पराः परावतोऽगच्छत् (ऐ० ब्रा० ३।१५) इति । तैत्तिरीयाश्वमिनन्ति इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपराधमिति मन्यमानः, (तै० ब्रा० ६-१-७-४) इति । हृदि । पद्दन्नित्यादिना हृदयशब्दस्य हृदादेशः । ऊडिदमित्यादिना विभक्ते-रुदात्तत्वम् । जघ्नुषः । हन्तेर्लिटः क्वसु । षष्ठ्येकवचने वसोः सम्प्रसारणमिति सम्प्रसारणपरपूर्वत्वे । शासिवसिघसीनां चेति शत्वम् । न च षत्वतुकोरसिद्धः ( पा० ६-१-३८ ) इति एकादेशस्यासिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यम् । संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः ( का० ६-१-८६।१ ) इति असिद्धवद्भावस्य प्रतिषिद्धत्वात् । गमहनेत्यादिना ( पा० ६-४-९८ ) उपधालोपः । न चासिद्ध-वदत्राभात् ( पा० ६-४-२२ ) इति सम्प्रसारणस्यासिद्धवद्भावः । भिन्नाश्रयत्वात् । संप्रसारणं हि षष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वम् । स्रवन्तीः । स्रु गतौ । शप्श्यनोर्नित्यम् ( पा० ७-१-८१ ) इति नुमागमः । शपः पित्त्वादनु-दात्तत्वम् । शतुश्च लसार्वधातुकस्वरेणाद्युदात्तत्वम् । अतरः । यद्वृत्तयोगादनिघातः ॥

## हिन्दी-भाषान्तर

इन्द्र, ( तुमने ) अहि के किस अनुयायी को देखा ? जिससे मारने वाले, तुम्हारे हृदय में डर घुस गया, ( और जिससे ) भीत होकर निन्यान्बे नदियों तथा अन्तरिक्ष के स्थानों को ( तुम ) श्येन के सदृश पार कर गये ।

## टिप्पणियाँ

१. यातारम्—या ( प्रापणे ) + तृच्, द्वि० ए० व०—सायण—मारने वाले को; विल्सन—विनाशक; से० पी० डी० ग्रामसमान पीटर्सन—प्रतिशोधी, बदला लेनेवाला; परांजपे—अनुयायी, अनुगामी ।

अपश्यः—दृश् + लङ् + म० पु०, ए० व०—देखा ।

२. जघ्नुष —हन् + क्वसु ( जघ्निवम् , जघ्निवान् ), ष० ब० व०—जघ्नुषः ते भीरगच्छत्—मारने वाले, तुम्हारे ( हृदय में ) भय प्रविष्ट हो गया । वृत्र को मारने के बाद इन्द्र डर गया था, यह तथ्य अनेक स्थानों पर वर्णित है ( ऐ० ब्रा०, ३.१५, तै० ब्रा० १.६.७.४ )—इन्द्रो ह यत्र वृत्राय वज्रं प्रजहार,

सोऽबलीयान् मन्यमानो नास्तृषीतीव बिभ्यन्निलयाचक्रे, स पराः परावतो जगाम, देवा ह वै विदाञ्चक्रुर्हतो वै वृत्रः, अथेन्द्रो न्यलेष्टेति, श० ब्रा० १.६.४.१।

३. स्रवन्तीः—स्रु (गतौ) + शतृ + ङीप्—सर्वदा गतिशील; अतएव नदियाँ। नि० १।१३.२७ में नदीवाचक।

श्येनः—श्यैङ् (गतौ; श्यायते इति) + इनच्; श्या—स्त्या—हृञ्—क्षिप्य इनच् (द०उ० ५.१२, पं० उ० २.४८, सि०कौ० २.२१३)। यास्क के अनुसार यह अत्यन्त गतिशील पक्षी है—श्येनः शंसनीयं गच्छति, निरु० ४.४। श्येनः··· श्यायतेर्गतिकर्मणः, निरु० १४। परांजपे श्येन शब्द का सम्बन्ध श्येत, गुलाबी, श्वेत से स्थापित करते हैं। श्येन खगराज है—श्येनो गृध्राणाम्, ऋ० सं० ९।९६।६१। ग्रासमान के मत में श्येन बाज या गृध्र है। अधिक सम्भावना यह है कि यह बाज है। श्येन और सुपर्ण एक स्थान पर अलग-अलग बताये गये हैं—मा त्वा श्येन उद्वधीत् मा सुपर्णः, (ऋ० सं० २.४२.२)। सुपर्ण श्येन का नाम प्रतीत होता है, जो स्वर्ग से धरती पर सोम लाता है। श्येन इन्द्र और मरुत् के विशेषण रूप में भी प्रयुक्त है। इस सन्दर्भ में यही कथ्य है कि जिस तरह श्येन स्वर्ग से अन्तरिक्ष को पारकर सोम ले आया था, उसी गति से इन्द्र अन्तरिक्ष को पार कर गया। श्येन द्वारा सोम-आहरण—ऋ० ४.२७.१०.१४४.४, १०.७७.२ आदि।

भीतः—भी (डरना) + क्त = डरा हुआ। अतरः—तॄ (तरणसंप्लवनयोः) + लङ्, म० पु०, ए० व०—पार कर गये, तर गये।

**इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः।**
**सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५॥**

## पदपाठः

इन्द्रः॑। या॒तः। अव॑ऽसितस्य। राजा॑। शम॑स्य। च॒। शृ॒ङ्गिणः॑। वज्र॑ऽबाहुः। सः। इत्। ऊँ इति॑। राजा॑। क्षय॒ति॒। च॒र्ष॒णी॒नाम्। अ॒रान्। न। ने॒मिः। परि॑। ता। ब॒भू॒व ॥ १५ ॥

## सायणभाष्यम् १५

वज्रबाहुरिन्द्रः शत्रौ हते सति निःसपत्नो भूत्वा यातो गच्छतो जंगमस्यावसितस्य एकत्रैव स्थितस्य स्थावरस्य शमस्य शान्तस्य शृङ्गराहित्येन प्रहरणादावप्रवृत्तस्या-श्वगर्दभादेः शृङ्गिणः शृङ्गोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजाभूत्। सेदु स एवेन्द्रश्चर्षणीना मनुष्याणा राजा भूत्वा क्षयति निवसति। ता तानि पूर्वोक्तानि जङ्गमादीनि सर्वाणि परिबभूव व्याप्तवान्। तत्र दृष्टान्तः। अरान्न नेमिः। यथा रथचक्रस्य परितो वर्तमान नेमिररान्नाभौ कीलितान्काष्ठविशेषान् व्याप्नोति तद्वत्। यातः या प्रापणे। याति गच्छतीति यात्। लटः शतृ सावेकाच इतिविभक्तेरुदा-त्तत्वम्। सः। सोऽचि लोपे चेदिति ( पा० ६-१-१३४ ) संहिताया सोर्लोपः। ता। शेश्छन्दसि बहुलमिति शेर्लोपः। बभूव। भवतेर्लिटो णलि भवतेरः ( पा० ७-४-७३ ) इत्यभ्यासस्यात्वम्। कृताकृतप्रसङ्गितया वुगागमस्य नित्यत्वाद्वृद्धेः पूर्वं वुगागमः। यद्वा। इन्धिभवतिभ्यां च ( पा० १-२-६ ) इति लिटः कित्वाद्वृद्ध्यभावः। न चासिद्धवदत्रा भादिति ( पा० ६-२-४२ ) तस्यासिद्धत्वादुवङादेशः शङ्कनीयः। वुग्युटावुवङ्यणोः सिद्धौ भवतः ( पा० ६-४-२२-१४ ) इति तस्य सिद्धत्वात्। तिङ्ङतिङ इति निघातः॥

### हिन्दीभाषान्तर

वज्रधारी इन्द्र चर, ( और ) अचर, शान्त ( सींगरहित ) तथा सींगवाले का राजा है। वही मनुष्यो का राजा ( उसी तरह ) सबमें व्याप्त होकर स्थित रहता है, जैसे रथ की नेमि में चारो ओर अरे ( व्याप्त रहते है )।

### टिप्पणियाँ

१. यातः—या (प्रापणे) + शतृ, ष० ए० व०, जगत्, जंगम, चर, स्थिर न रहने वाला। अवसितस्य—अव + सो ( षो अन्तकर्मणि ) + क्त अथवा अव + षिञ् ( बन्धने ) + क्त (परांजपे के अनुसार, सा धातु है अथवा सो)—अचर, स्थावर, स्थिर रहने वाला।

२. शमस्य—शान्त, सींग से रहित। शृंगिणः—शृंगमस्यास्तीति शृंगी तस्य वज्रबाहुः—ब० व्री० समास, वज्र जिसके हाथ में है। क्षयति—क्षि + लट्, प्र० पु०, ए० व०, निवास करता है या शासन करता है। चर्षणीनाम्—मनुष्यों का। परिबभूव—व्याप्त हो गया।

# विश्वेदेवासूक्तम्

म० १ सू० ८९

प्रथममण्डले एकोननवतितमं ( चतुर्दशेऽनुवाके पञ्चमं ) सूक्तम्

( प्रथमाष्टके षष्ठाध्याये पञ्चदशषोडशौ वर्गौ )

गोतम ऋषिः । विश्वेदेवा देवता । आदितः पञ्चानां सप्तम्याश्च जगती षष्ठ्या विराट्स्थाना ।

आ नो भद्राः क्रतवो यन्तु विश्वतो-
ऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद् वृधे अस-
न्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥

पदपाठः

आ । नः । भद्राः । क्रतव । यन्तु । विश्वतः । अदब्धासः । अपरिऽइतासः । उत्ऽभिदः । देवाः । नः । यथा । सदम् । इत् । वृधे । असन् । अप्रऽआयुवः । रक्षितारः । दिवेऽदिवे ॥ १ ॥

सायणभाष्यम् १

'आ नो भद्राः' इति दशर्चं पञ्चमं सूक्तम् । गोतमस्यार्षं वैश्वदेवम् । आदितः पञ्चर्चः सप्तमी च जगत्यः षष्ठी 'स्वस्ति न इन्द्रः' इत्येषा विराट्स्थाना । 'नवकौ वैराजस्त्रैष्टुभश्च' ( अनु० ९।५ ) इत्युक्तलक्षणयोगात् । अष्टम्याद्यास्तिस्त्रस्त्रिष्टुभः । तथा चानुक्रान्तम् —'आ नो दश वैश्वदेव तु पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट्स्थाना' इति ॥ अग्निष्टोमे वैश्वदेवशस्त्रे उत्तमावर्जमेतत् सूक्तं वैश्वदेवनिविद्धानीयम् । सा तु प्रकृतौ विकृतौ च वैश्वदेवशस्त्रस्य परिधानीया । तथा सूत्रितम्— "आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवम्" इति 'अदितिर्द्यौरदिति-

रन्तरिक्षमिति परिदध्यात् सर्वत्र वैश्वदेवे" (आश्व० श्रौ० ५।१८) इति च। ब्राह्मणं च भवति—"सदैव पञ्चजनीयया परिदध्यात्" (ऐ० ब्रा० ३।३१) इति। महाव्रते निष्केवल्ये एतत् सूक्तम्। तथा च पञ्चमारण्यके सूत्र्यते—"आ नो भद्रीयं च तस्य स्थाने" (ऐ० आ० ५।३।२) इति॥

१. नोऽस्मान् क्रतवोऽग्निष्टोमादयो महायज्ञा विश्वतः सर्वस्मादपि दिग्भागादायन्तु। आगच्छन्तु। कीदृशाः क्रतवः। भद्राः समीचीनफलसाधनत्वेन कल्याणा भजनीया वा अदब्धासोऽसुरैरहिंसिता अपरीतासः शत्रुभिरपरिगताः। अप्रतिरुद्धा इत्यर्थः। उद्भिदः शत्रूणामुद्भेत्तारः। ईदृशाः क्रतवोऽस्मांस्तथागच्छन्तु। अप्रायुवोऽप्रगच्छन्तः स्वकीयं रक्षितव्यमपरित्यजन्तः। अत एव दिवेदिवे प्रतिदिवसं रक्षितारो रक्षां कुर्वन्त एवङ्गुणविशिष्टाः सर्वे देवा नोऽस्माकं सदमित् सदैव वृधे वर्धनाय यथा असन् भवेयुस्तथागच्छन्त्विति सम्बन्धः।

अदब्धासः। 'दम्भु दम्भे'। दम्भो हिंसा। निष्ठाया 'यस्य विभाषा' (पा० ७।२।१५) इतीट्प्रतिषेधः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। अपरीतासः। 'इण् गतौ'। पूर्ववत् कर्मणि निष्ठा। उभयत्र 'आज्जसेरसुक्' (पा० ७।१।५०)। वृधे। 'वृधु वृद्धौ'। सम्पदादिलक्षणो भावे क्विप् (वा०—पा० ३।३।९४)। 'सावेकाचः' (पा० ६।१।१६८) इति विभक्तेरुदात्तत्वम्। असन्। 'अस् भुवि' लेट्यडागमः। 'बहुलं छन्दसि' (पा० २।४।७३) इति शपो लुगभावः। तस्य अङित्वात् 'श्नसोरल्लोपः' (पा० ६।४।१११) इत्यकारलोपाभावः। अप्रायुवः। 'इण् गतौ' अस्मात् प्रपूर्वात् 'छन्दसीणः' (उणा० १।२) इत्युण्प्रत्ययः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। जसि 'जसादिषुच्छन्दसि वा वचनं...'। (पा० ७।३।१०७-वा०) इति गुणस्य विकल्पितत्वादभावे तन्वादित्वादुवङ्॥[1]

[1] (शु० य० सं० १५।१४) भद्रा भन्दनीयाः 'भदि कल्याणे' कल्याणकारिणः—(महीधरः)। भद्रा भन्दनीयाः स्तुत्याः—(उव्वटः)। क्रतवो यज्ञाः सङ्कल्पा वा—(म०, उ०)। नोऽस्मान् प्रति, आयन्तु आगच्छन्तु यज्ञकर्त्तारो वयं भवेमेत्यर्थः (म०)। विश्वतोऽदब्धासः सर्वतोऽनुपहिंसिताः निर्विघ्ना इत्यर्थः—(म०)। अपरीतासोऽपरिज्ञाताः केनचित्—(उ०)। न परीता अपरीता अपरिगता अज्ञाताः केनचित्। फलानुमेया इत्यर्थः—(म०)उद्भिद उद्भिन्दन्ति प्रकटयन्त्युद्भिद उद्भेत्तारः यज्ञान्वराणां प्रकटीकर्त्तार इत्यर्थः—

## हिन्दीभाषान्तर

कल्याणकारिणी, अप्रतारित, अप्रतिरुद्ध तथा अर्थसाधिका बुद्धियाँ हमारे समीप चारो ओर से आयें, जिससे निरलस एवं प्रतिदिन रक्षा करनेवाले देव सर्वदा हमारी वृद्धि के लिए हों।

## टिप्पणियाँ

१. आ—उपसर्ग है और इसका संयोजन 'यन्तु' क्रिया के साथ होगा। वैदिक भाषा में उपसर्ग प्रायः प्रधान वाक्य के क्रियापद से दूर रहते हैं और उदात्त होते हैं। तु० 'व्यवहिताश्च' ( पा० १।४।८२ )।

२. क्रतवः—दे. १. ५ कविक्रतु पर टिप्पणी।

'क्रतवो यन्तु विश्वतः' मे स्वरिताङ्कित 'त' तथा अनुदात्त चिह्नयुक्त 'वि' के बीच में वर्ण अनुदात्त हैं। व्याकरण में इन्हें प्रचय कहा जाता है। इसका दूसरा नाम एकश्रुति भी है–'स्वरितादनुदात्तानां परेषां प्रचयः स्वरः' ऋ० प्रा० ३।१९।

३. अदब्धासः—छन्दोदृष्टि से पाठ मे 'विश्वतो अदब्धासः' पढ़ना होगा। जगती छन्द के प्रत्येक पाद में १२ वर्ण होते हैं। यहाँ द्वितीय पाद में ११ वर्ण हैं अतः खण्डाकार ( अवग्रहीत ) अ का पूर्ण उच्चारण करना चाहिए। दम्भु दम्भे + क्त, दब्ध, नञ् लगाकर अदब्ध। बहुवचन मे अदन्त शब्दो के, वेद में, दो रूप मिलते हैं, अदब्धाः, अदब्धासः–'दम्' धातु का अर्थ प्रवंचना करना है, अतः हि० भा० अप्रतारित।

अदब्धासः—'आज्जसेरसुक्' से जस् को 'असुक्' होगा। नञ्समास में पद का प्रथम अक्षर उदात्त होता है।

४. वृधे—वृधु वृद्धौ + क्विप्, च० ए० व०। 'सावेकाचः' से विभक्ति को उदात्त हुआ है। अर्थ है—वृद्धि के निमित्त।

---

( म० )। उद्गन्तारोऽन्येषां यज्ञक्रतूनां [ ? सङ्] कल्पानां वा—( उ० ) असन् स्युर्भूयासुः–(उ०)। यथा ``` असन् भवन्ति तथा क्रतव आयन्त्वित्यर्थः–( म० ) अप्रायुवः प्रकर्षेणायुवन्ति प्रमाद्यन्ति ते प्रायुवः। यौतेः क्विप् तुगभाव आर्षः न प्रायुवोऽप्रायुवः। अनलसा अस्माकं वृद्ध्यै भवन्त्वित्यर्थः ( म० ) अप्रमाद्यन्तः—( उ० ) तथा दिवेदिवेऽहन्यहनि प्रत्यहं रक्षितारः पालकाः—( म० ) दिवेदिवेऽहन्यहनि तथा भूयादिति वाक्यशेषः—( उ० )॥

५ देवा नः—यहाँ नः को स्वरित नहीं हुआ, यद्यपि वह उदात्त का उत्तरवर्ती है। उदात्त + अनुदात्त + उदात्त—की स्थिति में अनुदात्त को स्वरित नहीं होता।

६. असन्—अस् + भुवि + लेट्, प्र० पु०, ब० व०। लेट् मे अट् आगम होता है ( दे० सा० भा० )। अप्रधान वाक्य की क्रिया होने से उदात्तयुक्त है। धातुओं में आगम 'अ' पर उदात्त होता है ॥ १ ॥

**देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम्। देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥ २ ॥**

पदपाठः

देवानाम्। भद्रा। सुऽमतिः। ऋजुऽयताम्। देवानाम्। रातिः। अभि। नः। नि। वर्तताम्। देवानाम्। सख्यम्। उप। सेदिम। वयम्। देवाः। नः। आयुः। प्र। तिरन्तु। जीवसे ॥ २ ॥

सायणभाष्यम् २

भद्रा सुखयित्री भजनीया वा देवानां सुमतिः शोभना मतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः। कीदृशाम्। ऋजूयतामृजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम्। तथा देवानां रातिर्दानं नोऽस्मानाभिमुख्येन नितरां वर्तताम्। तदभिमतफलप्रदानमप्यस्माकं भवत्वित्यर्थः। वयं च तेषां देवानां सख्यं सखित्वं सख्युः कर्म वोपसेदिम प्राप्नुयाम। तादृशा देवा नोऽस्माकमायुर्जीवसे जीवितुं प्र तिरन्तु वर्धयन्तु।[२]

---

[२] ( शु० य० सं० २५।१५ ) ऋजूयताम्—ऋजु अवक्रं यन्ति गच्छन्ति ऋजुयन्तस्तेषाम्। इणः शतृप्रत्ययः। अवक्रगामिनाम्—( म० )। ऋजुगामिनाम्—(उ०)। यद्वा—ऋजुमवक्र साधुं यजमानं कामयन्ते ते ऋजूयन्ति। 'सुप आत्मनः क्यच्' ( पा० ३।१।८ )। ऋजूयन्ति ते ऋजूयन्तस्तेषाम्। क्यजन्ताच्छतृ। साधुं यजमानं कामयमानानामित्यर्थः—( म० )। यद्वा—ऋजुकामिनाम्। ऋजुं प्रगुणं यजमानं कर्तुं ये कामयन्ते तथोक्ता—( उ० )।

भद्रा। 'भदि कल्याणे सुखे च'। 'ऋज्रेन्द्राग्र०' (उणा० २।२८) इत्यादौ रन्प्रत्ययान्तो निपातितः। ऋजूयताम्। ऋजुमात्मन इच्छति ऋजूयति। 'सुप आत्मनः क्यच्' (पा० ३।१।८)। तदन्ताल्लटः शतृ। 'शतुरनुमो०' (पा० ६।१।१७३) इत्यजादिविभक्तेरुदात्तत्वम्। रातिः। 'रा दाने'। 'मन्त्रे वृषेष०' (पा० ३।३।९६) इति क्तिन् उदात्तत्वम्। सख्यम्। 'सख्युर्यः' (पा० ५।१।१२६) इति भावे कर्मणि वा य प्रत्ययः। सेदिम। 'षद्लृ' विशरणगत्यवसादनेषु। 'छन्दसि लुङ्लङ्लिटः' (पा० ३।४।६) इति वर्तमाने प्रार्थनाया लिट्। सत्वस्यानैमित्तिकत्वेन लिटि परत आदेशादित्वाभावात् 'अत एक हल्मध्ये' (पा० ६।४।१२०) इत्येत्वाभ्यासलोपौ। 'अन्येषामपि दृश्यते' (पा० ६।३।१३७) इति संहितायां दीर्घत्वम्। प्रतिरन्तु। प्रपूर्वस्तिरतिर्वर्धनार्थः। तथा च यास्को व्याचख्यौ—"देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय" (निरु० १२।३९) इति॥

## हिन्दीभाषान्तर

सरल हृदय (यजमान) को चाहते हुए देवों की कल्याणकारिणी सुमति तथा देवों का दान हमारी ओर प्रत्यावर्तित हो जाय। हम देवों की मैत्री प्राप्त करें और देव हमारी आयु को जीने के निमित्त बढ़ा दें।

## टिप्पणियाँ

ऋजूयताम्—ऋजुमात्मन इच्छति ऋजूयति, ऋजूयन्ति, इति ऋजूयन्तस्तेषाम्। ऋजु + क्यच् + शतृ, ष० ब० व०। सरल हृदय यजमानों को अपना बनाने की इच्छा करनेवाले। महीधर—इसके अतिरिक्त—ऋजु अवक्रं यन्ति

---

**देवानां भद्रा भन्दनीया सुमतिः कल्याणी मतिः। अभि नो निवर्ततामित्यनुषङ्गः। अस्मान् प्रत्यभिमुखीभवतु'''। किञ्च देवानां रातिर्दानमभि नोऽस्मान् प्रति निवर्तताम्—(उ०)। भद्रा कल्याणकारिणी देवानां सुमतिः शोभना बुद्धिर्नोऽस्मान् प्रत्यभिनिवर्ततामस्मदभिमुखीभवतु।'' किञ्च देवानां रातिर्दानं नोऽस्मानभिनिवर्तताम्। देवा अस्मभ्यं ददत्वित्यर्थः—(म०)। सख्यं सखिभावं, यजमानाः सन्तः—(उ०)। मैत्रीम्—(म०) उपसेदिम प्राप्नुयाम। सदेर्लिटि उत्तमबहुत्वे रूपम्, संहितायां दीर्घः (म०)। नोऽस्माकं भक्तानामायुः—(उ०)। नोऽस्माकं सखीनामायुः—(म०)॥**

गच्छन्ति ऋजूयन्तस्तेषाम्—सरल भाव से गमन करनेवाले। उव्वट—ऋजुं प्रगुण यजमानं कर्तुं ये कामयन्ते ते तेषाम्, यजमान को प्रकृष्ट गुणों से समन्वित करने की कामना करनेवाले। यहाँ 'शतुरनुमो०' से विभक्ति को उदात्त हुआ है।

२. सेदिम—षद्लृ—विशीर्ण होना, गति, अवसादन अर्थ में + प्रार्थना में लिट्, उ० पु०, ब० व०। संहिता में दीर्घ छान्दस् है।

३. जीवसे—जीव + असे, तुमुन् अर्थ में—'तुमर्थे०' से। तुमर्थक प्रत्यय धातुओं से बने संज्ञा-शब्दों के चतुर्थी, द्वितीया, पञ्चमी, षष्ठी एवं सप्तमी के रूप में प्रयुक्त होते हैं। यहाँ चतुर्थी में है॥ २॥

**तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम्। अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत्॥ ३॥**

पदपाठः

**तान्। पूर्वया। निऽविदा। हूमहे। वयम्। भगम्। मित्रम्। अदितिम्। दक्षम्। अस्रिधम्। अर्यमणम्। वरुणम्। सोमम्। अश्विना। सरस्वती। नः। सुऽभगा। मयः। करत्॥ ३॥**

**सायणभाष्यम् ३**

तान् विश्वान् देवान् पूर्वया पूर्वकालीनया नित्यया निविदा वेदात्मिकया वाचा वयं हूमहे। निविदिति वाङ्नाम। यद्वा निविदा 'विश्वेदेवा सोमस्य मत्सन्' इत्यादिकया वैश्वदेव्या निविदा वयं हूमहे। आह्वयामः। देवानिति यत् सामान्येनोक्तं तदेव विव्रियते। भगं भजनीयं द्वादशानामादित्यानामन्यतमम्। मित्रं प्रमीतेस्त्रायकमहरभिमानिनं देवम्। "मैत्रं वा अहः" ( तै० ब्रा० १।७।१०।१ ) इति श्रुतेः। अदितिम् अखण्डनीयामदीना वा देवमातरम्। दक्षं सर्वस्य जगतो निर्माणे समर्थं प्रजापतिम्। यद्वा प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भम्। "प्राणो वै दक्षः" ( तै० सं० २।५।२।४ ) इति श्रुतेः अस्रिधं शोषणरहितं सर्वदैकरूपेण वर्तमानं मरुद्गणम्। अर्यमणम्। अरीन् मन्देहादीनसुरान् यच्छति

नियच्छतीत्यर्यमा सूर्यः । "असौ वा आदित्योऽर्यमा" ( तै० सं० २।३।४।१ ) इति श्रुतेः । तम् । वरुणम् । वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति रात्र्यभिमानिदेवो वरुणः । श्रूयते च–'वारुणी रात्रिः" (तै० सं० १।७।१०।१) इति । सोमं द्वेधात्मानं विभज्य पृथिव्या लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम् । अश्विना अश्ववन्तौ । यद्वा–सर्वं व्याप्नुवन्तौ । तथा च यास्कः–"अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत् कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृता वित्यैतिहासिकाः" ( निरु० १२।१ ) इति । एवम्भूतान् सर्वान् देवानस्मद्रक्षणार्थमाह्वयाम इति पूर्वत्र सम्बन्धः । अस्माभिराहूता सुभगा शोभनधनोपेता सरस्वती नोऽस्मभ्यं मयः सुखं करत् करोतु ।[3]

हूमहे । ह्वेञो लटि 'ह्वः' इत्यनुवृत्तौ 'बहुलं छन्दसि' ( पा० ६।१।३४ ) इति सम्प्रसारणम् । परपूर्वत्वे 'हलः' ( पा० ६।४।२ ) इति दीर्घत्वम् । 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शपो लुक् । अस्त्रिधम् स्त्रिधु शोषणे । सम्पदादिलक्षणो भावे क्विप । बहुव्रीहौ, 'नञ्सुभ्याम्' ( पा० ६।२।१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । मयस्करत् । करोतेर्लेटि अडागमः 'बहुलं छन्दसि' ( पा० २।४।७६ ) इति विकरणस्य लुक् । 'अतः कृकमि···' ( पा० ८।३।४६ ) इति विसर्जनीयस्य सत्वम् ।

## हिन्दीभाषान्तर

हम ( गोतम ) उन भग, मित्र, अदिति, दक्ष, प्रतिकूल न होनेवाले ( मरुद्गण ? ), अर्यमन्, वरुण, सोम तथा अश्विनों को पूर्वकालिक निविद् ( स्तुतिविशेष ) द्वारा पुकारते हैं । शोभनधन वाली सरस्वती हमारे लिए सुख प्रदान करे ।

---

[3] ( शु० य० सं० २५।१६ ) पूर्वया प्राचीनया, अकृत्रिमया स्वयम्भुवा निविदा वाचा वेदरूपया—( म० )। अस्त्रिधम् अच्युतसद्भावम्—दक्षस्यैतद्विशेषणम्—( उ० )। अस्त्रिधमिति भगादीनां विशेषणम्। न स्त्रेधते च्योतते सोऽस्त्रित् तमच्युतसद्भावम् ।·····शोभनं भगं यस्याः सा सुभगा भजनीया सरस्वती भगादिसहिता—( म० ) ॥

## टिप्पणयाँ

१. भगम्—आदित्य गण में भग का भी उल्लेख है—ऋ० २।२७।१ यह भाग्य का देवता है। अवेस्ता में 'वघ' शब्द उपलब्ध होता है, जिसका अर्थ भाग्य है। स्लावभाषाओं (रूसी, पोलिश आदि) में इसी शब्द के समान 'बोग' शब्द मिलता है जिसका अर्थ देवता है। प्राचीन स्लाव-पुराकथाओं में 'बील बोग' (श्वेत देव) तथा 'जर्नी बोग' (कृष्ण देव) का वर्णन मिलता है–मार्टिन हाग, (एसेज़ ऑन रिलीजन ऑफ़ पारसीज़, पृ० २७३, पादटिप्पणी भी देखिए)।

२. मित्रम्—इस देवता का भी परिगणन आदित्यवर्ग में किया गया है। सम्भवतः यह दिन का अभिमानी देवता है। अवेस्ता का सौर देवता 'मिथ्र' और यह एक हैं। सम्भवतः मित्र शब्द का अर्थ सखा है। अवेस्ता में मिथ्र भी विश्वास का संरक्षक है। मित्र तथा वरुण प्रायः एकत्र स्तुत हुए हैं।

सजातीय शब्द—अवे० मिथ्र, प्रा० पा० मिष, एलम मिइश-श, अक्काद मि-इत्-रि, न० पा० मिह्र् (सं० मिहिर)।

३. अदितिम्—अ+दो अवखण्डने, कर्मणि क्तिन्। सर्वं वा अत्तीति तददितेरदितित्वम्; श० ब्रा० १०।६।५।५। अदिति के अर्थ के सम्बन्ध में प्रायः वैमत्य है। एक मत के अनुसार इसका अर्थ बन्धनों, पाशों से मुक्ति है एवं दूसरी दृष्टि से स्वातन्त्र्य, आनन्त्य है। अन्य विद्वान् इसे अविनश्वर अन्तरिक्षीय ज्योति मानते हैं। वैदिक प्रमाणों का आयाम अन्तिम अर्थ की पुष्टि करता है। आदित्यों का सम्बन्ध प्रकाश से है और यह उनकी जननी कही गयी है अतएव 'परमे व्योमन्' में स्थित 'ज्योतिष्मती' के रूप में इसका चित्रण समुचित ही है। पं० क्षेत्रेशचन्द्र चट्टोपाध्याय का अभिमत है कि पहले अदिति देवी रूप में इतनी समादृत नहीं थी, जितनी अनुवर्ती युग में हुई। विश्व में मातृदेवी की पूजा का प्रभाव अत्यन्त प्राचीन है, उससे वैदिक जन भी मुक्त नहीं हो सका।

४. दक्षम्—यह भी आदित्य देवता है। यह बौद्धिक चातुर्य का अधिदेव है। ऋग्वेद में एक स्थान पर यह अदिति के पुत्र और पिता के रूप में वर्णित है।

५. अखिधम्—खिधु + क्विप् = खिध्, न खिध् = अखिध, द्वि० ए० व०। सायण ने इसका अर्थ शोषणरहित किया है, अन्य लोग भूल न करनेवाला, विफल न होनेवाला करते हैं। वस्तुतः अखिध् का अर्थ—जो हमारे लिए प्रतिकूल, विरोधी, द्वेष या प्रतिरोध-भाव नहीं रखता, जो हमारे प्रति मैत्री-भाव रखता है ( दे०, खोदा, इपीथेट्स इन दि ऋग्वेद, पृ० १४१, २१० ) अन्यत्र ऋ० ५।४६।४ में यह विष्णु तथा वात के विशेषण के रूप में आया है। उपर्युक्त दोनों देवता आनन्द और भोग के दाता हैं। यहाँ यह मरुद्गण के लिए प्रयुक्त हुआ है।

६. अर्यमणम्—अर्यमा भी सौर देवता है। इसका चित्रण सुहृद्, साथी के रूप में मिलता है। वस्तुतः मित्र की विशेषताएँ इसमें भी उपलब्ध होती हैं। विशेष रूप से मनुष्य के साथ इसके सम्बन्ध के विषय मे यह शान्ति, सन्धि, विवाह का देवता है। 'मन्नन्त' पुल्लिंग होने पर, मन् के 'म' पर उदात्त होता है, अतः 'अर्यमणम्' का 'म' उदात्त है।

७. वरुणम्—वरुण देवता का नाम भी आदित्यों में है। मित्र के साथ इसके साहचर्य का निर्देश किया जा चुका है। यह 'ऋत'—शाश्वत नैतिक नियम–का अधिदेव है। विद्वान् ग्रीक देवता 'यूरेनस' से इसका सम्बन्ध जोड़ते हैं। अवेस्ता के अहुरमज्द और वरुण में नाम की समता तो नहीं है, पर चरित्रपरक समानता मिलती है [ राथ; ह्विटनी ]। विण्डिशमैन के अनुसार अहुरमज़्द विशुद्ध ईरानी है। स्पीगेल के मत में अहुरमज्द और वरुण में कोई साम्य नहीं है। ओल्डेनबर्ग वरुण को चन्द्रमा का प्रतिनिधि मानते हैं। मैकडोनेल इसे विस्तृत आकाश मानने के पक्ष में हैं। अपने समर्थन मे ऋ० सं० १।८९।३, तै० सं० १।८।१६।१, २।१।७।४ पर लिखित सायण भाष्य को भी प्रस्तुत करते हैं। ब्राह्मणों में वरुण को रात्रि का सूर्य कहा गया है : 'रात्रिर्वरुणः' ऐ० ब्रा० ४।१०, 'वारुणी रात्रिः' तै० ब्रा० १।७।१०।१ वृ, आवृत्त करना + उन्। 'उनर्व-न्नन्तानाम्' फि० सू० २।३२ से आद्युदात्त।

८ सोम—ऋग्वेद में सोम से सम्बद्ध लगभग १२० सूक्त हैं। सोमलता से सम्भवतः ऋग्वेदीय जनो का भी पूर्ण परिचय नहीं था। यदि हिलब्रान्त का यह मत मान लिया जाय कि ऋ० सं० ३।५।३।१४ में प्रयुक्त 'नैचाशाख' शब्द

सोम का विशेषण है तो यह मानना पड़ेगा कि उसके पत्ते और टहनियाँ नीचे की ओर लटकी रहती थी। यह सोमलता पोरो से युक्त बताई गयी है। सम्भवतः इसमें काँटे भी होते थे। सोम मुञ्जवान् पर्वत पर मिलता था। ब्राह्मणों मे सोम की दिशा उत्तर ( तै० ब्रा० ३।११।५।२ ), पश्चिम ( ऐ० ब्रा० १।८ ) तथा पूर्व ( ऐ० ब्रा० १।३ ) कही गयी है। सोमरस का वर्ण अरुण, हरित या पिंगल, शोण या अरुष कहा गया है। सोम को अवेस्ता में हओम के नाम से वर्णित किया गया है। बलूची भाषा मे इसे उमान, चीनी मे सिम या सुम कहा गया है। अँग्रेजी भाषा में एफ्रिडा बलगेरिस या साण्टिया बेल-विरोडी के नाम से इसे जाना गया है। लास्सन, म्यूर, हाग, मैक्समूलर, कीथ, मैकदोनेल सोम को सरकोस्टेमा विमिनेल, ऐस्क्लेपियस एसिडा या सरकोस्टेमा ब्रेविस्टग्मा कहा है। राथ सरकोस्टेमा ऐसीडम को ही सोम के अधिक समीप बताते हैं। डॉ० एचीसन एफेड्रा पेचिक्लाडा को सोम मानते हैं। यह पौधा बलूचिस्तान, हरिरुद घाटी और ईरान के पार्वत्य प्रदेशों में बहुत मिलता है। एफ्रेडा की एक अन्य जाति हुम-इबंदक नाम से प्रसिद्ध है। मैक्समूलर का कथन है कि उक्त पौधे की पिसाई करने पर पर्याप्त मात्रा में रस निकलता है। वाट के अनुसार अफगानी अंगूर ही सोम है। राइस के मत मे यह गन्ना है। मैक्समूलर और राजेन्द्र लाल मित्र के मत से सोम से यवसुरा का निर्माण किया जाता था। कतिपय अन्य विद्वान् इसे भाँग या सन मानते हैं। कर्मान और येज्द के पारसी जिस पौधे से हूम रस बनाते हैं, उसे हओम से अभिन्न मानते हैं। हिलब्रान्त सोम को चन्द्रमा कहते हैं। अनुवर्ती युग में सोम के स्थान पर अन्य पौधों का प्रयोग यज्ञों में किया जाता था ( सोमलता के स्थान पर अन्य लताओं के प्रयोग से सम्बद्ध सन्दर्भ के लिए देखिए, पं० क्षेत्रेशचन्द्र चट्टोपाध्याय, ज० के० आर० का० ओ० रि० इं० : अं० ३१, पृ० २२६ )। इसी सोमलता का अधिदेव सोम है। इसकी रूपसंरचना अत्यन्त अस्पष्ट है।

९. अश्विना—युग्मदेवता अश्विनौ। इनके वास्तविक रूप के सम्बन्ध में बहुत मतवैषम्य है। इनका सम्बन्ध अश्व से भी जोड़ा जाता है। ग्रीक 'दिओ-सकोरस', लातीनी 'कैस्तोर पोलुक्स' भी अश्वयुक्त देव हैं। सम्भवतः इनमें परस्पर साम्य है। कुछ विद्वान् इन्हें सूर्य के अग्रचारी प्रकाश के रूप में

स्वीकारते हैं। पूना के समीप गाजा नामक स्थान पर गुहाओं के उत्कीर्ण (रिलीफ) चित्रों में एक पुरुष है, उसके निकट दो नारियाँ और सामने दो अश्वारोही हैं। अश्व एवं अश्वारोही दोनों के सिर पर कलंगी है। पुरुष के पीछे प्रभामण्डल है। पुरुष रथ पर आरूढ़ है। अश्वारोहियो के समीप में कुछ कुत्सित नारियो एवं पुरुषों के चित्र हैं। इससे यह ज्ञात होता है कि अश्विन् सूर्य के आगे चलनेवाले अश्वारोही हैं। निरुक्त मे कहा गया है कि अश्विन् पुण्यकर्मा राजा हैं। यह मत प्राचीन ऐतिहासिकों का है। वस्तुतः अश्व से उनका सम्बन्ध उनकी सौरात्मकता का द्योतक है ॥ ३ ॥

**तन्नो वातो मयोभु वातु भेषजं**
**तन्माता पृथिवी तत्पिता द्यौः।**
**तद्ग्रावाणः सोमसुतो मयोभुव-**
**स्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥**

पदपाठः

**तत्। नः। वातः। मयःऽभु। वातु। भेषजम्। तत्। माता। पृथिवी। तत्। पिता। द्यौः। तत्। ग्रावाणः। सोमऽसुतः। मयःऽभुवः। तत्। अश्विना। शृणुतम्। धिष्ण्या। युवम् ॥ ४ ॥**

### सायणभाष्यम् ४

वातो वायुस्तद् भेषजमौषधं नोऽस्मान् वातु प्रापयतु। यद् भेषजं मयोभु मयसः सुखस्य भावयितृ। माता सर्वेषां जननी पृथिवी भूमिरपि तद् भेषजम् अस्मान् प्रापयतु। पिता वृष्टिप्रदानेन सर्वेषां रक्षिता द्यौः द्युलोकोऽपि तद् भेषजम् अस्मान् प्रापयतु। सोमसुतः सोमभिषवं कृतवन्तो मयोभुवो मयसो यागफलभूतस्य सुखस्य। भावयितारो ग्रावाणोऽभिषवसाधनाः पाषाणाश्च तद् भेषजमस्मान् प्रापयन्तु। हे धिष्ण्या। धिषणा बुद्धिस्तदर्हावश्विनौ। युवं युवां तद् भेषजं शृणुतमाकर्णयतम्। यद् भेषजमस्माभिर्वाय्वादिषु प्रार्थ्यते,

यद् भेषजं देवाना भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः ।[४]

मयोभु । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' ( पा० १।२।४७ ) इति ह्रस्वत्वम् । वातु । 'वा गतिगन्धनयोः' अन्तर्भावितण्यर्थात् प्रार्थनाया लोट् । सोमसुतः । 'सोमे सुञः' (पा० ३।२।९०) इति भूते क्विप् । धिषणाशब्दाद् अर्हार्थे 'छन्दसि च' ( पा० ५।१।६७ ) इति यः । वर्णलोपश्छान्दसः । 'सुपां सुलुक्' ( पा० ७।१।३९ ) इत्याकारः ।

## हिन्दीभाषान्तर

वायुदेव उस सुखदात्री औषध को हमारे समीप पहुँचाएँ । माता पृथिवी उस (सुखदात्री औषध को हमारे समीप पहुँचाएँ ) । पिता द्युलोक उस (सुखदात्री··· ) सोम को चुआनेवाले, सुखदायक पाषाण उस ( सुखदात्री··· ) । ओ बुद्धिमान् अश्विनो ! तुम दोनो उसे सुन लो ।

## टिप्पणियाँ

१. अश्विना—सम्बोधन, द्वि० व० । सम्बोधन-पद जहाँ वाक्य या पाद के प्रारम्भ में नहीं रहता, वहाँ उदात्त का अभाव होता है, अतएव 'अश्विना' में उदात्त नहीं है—'आमन्त्रितस्य च' ( पा० ८।१।१९ ) ।

---

[४] ( शु० य० सं० २५।१७ )—तद् भेषजं मयोभु सुखस्य भावयितृ नोऽस्माकं वातो वातु अनुगृह्णातु ।···तच्च हे अश्विनौ धिष्ण्या धारयितारौ युवं युवामपि शृणुतम् । श्रुत्वा चानुगृह्णीतम् ( उ० ) ॥ वातः पवनो नोऽस्माकं भेषजमौषधं हितं यथा तथा वातु 'वा गतिगन्धनयोः' लोट् । प्रवातु । अनुगृह्णात्वित्यर्थः । ददात्विति यावत् । कीदृशं हितम् । मयोभु मयः सुखं भवति यस्मात्तन्मयोभु सुखोत्पादकं हितं ददातु । माता जगन्निर्मात्री पृथिवी तद् हितं वातु । पिता पालको द्यौः स्वर्गस्तद् हितं वातु । सोमं सुन्वन्ति सोमसुतः सोमाभिषवकारिणो ग्रावाणो दृषदस्तद् भेषजं वान्तु ददतु । कीदृशा ग्रावाणः । मयोभुवः । मयः सुखं भावयन्ति ते मयोभुवः सुखस्य दातारः । हे अश्विना अश्विनौ युवं युवां तद् वातादिभ्यो भेषजप्रार्थनं शृणुतं युवामपि हितं दत्तमित्यर्थः । कीदृशौ युवाम् । धिष्ण्या धिष्ण्यौ गृहवद् धारयितारौ—(महीधरः) ॥

२. धिष्ण्या—छन्दस्परिमार्जन के निमित्त 'धिष्णिया' पढ़ा जायगा। धिषणा + अर्हार्थे य; द्वि० व०, प्रथमा सम्बोधन। 'सुपां सुलुक्' ( पा० ७।१।३९ ) से आकारलोप। वर्णलोप छान्दस् है। खोदा के अनुसार इसके अर्थ उदार, दयालु, परोपकारी, शिष्ट आदि हैं ( वही, पृ० ११७ )। माता को 'म आता' एवं 'द्यौः' को दिऔः पढ़ना चाहिए, अन्यथा छन्दोभंग होगा ॥ ४ ॥

तमीशा॑नं॒ जग॑तस्त॒स्थुष॒स्पतिं॑
धियञ्जि॒न्वमव॑से हूमहे व॒यम्।
पू॒षा नो॒ यथा॒ वेद॑सा॒मस॑द्वृ॒धे
र॑क्षि॒ता पा॒युरद॑ब्धः स्व॒स्तये॑ ॥ ५ ॥

पदपाठः

तम्। ईशा॑नम्। जग॑तः। त॒स्थुषः॑। पति॑म्। धि॒यं॒ऽजि॒न्वम्। अव॑से। हू॒म॒हे॒। व॒यम्। पू॒षा। नः॒। यथा॑। वेद॑साम्। अस॑त्। वृ॒धे। र॒क्षि॒ता। पा॒युः। अद॑ब्धः। स्व॒स्तये॑ ॥ ५ ॥

सायणभाष्यम् ५

पूर्वार्धेनेन्द्रः स्तूयते, अपरार्धेन पूषा। ईशानमैश्वर्यवन्तम्, अतएव जगतो जङ्गमस्य तस्थुषः स्थावरस्य च पतिं स्वामिनं धियञ्जिन्वं धीभिः कर्मभिः प्रीणयितव्यम्। एवम्भूतं तमिन्द्रमवसे रक्षणाय वयं हूमहे। आह्वयामः। पूषा नोऽस्माकं वेदसा धनाना वृधे वर्धनाय रक्षिता यथासत् येन प्रकारेण भवति तेनैव प्रकारेणादब्धः केनाप्यहिंसितः पूषा नोऽस्माक वेदसां धनाना वृधे वर्धनाय रक्षिता यथासत् येन प्रकारेण भवति तेनैव प्रकारेणादब्धः केनाप्यहिंसितः पूषा स्वस्तयेऽस्माकमविनाशाय रक्षिता भवतु।[५]

[५] ( शु० य० सं० २५।१८ )—ईशानं रुद्रम्।........ पतिमिव पतिम्। धिया बुद्ध्या सङ्कल्पमात्रेण जिन्वति प्रीणातीति धियञ्जिन्वम्। यद्वा धिया कर्मणा जिन्वति प्रीणातीति धियञ्जिन्वम्। अवसे अवनाय तर्पणाय किञ्च पूषा नोऽस्माकं वेदसां धनानाम् असद् भूयाद् वृधे वर्धनाय। रक्षिता च पायुः

तस्थुषः । तिष्ठतेर्लिटः क्वसुः । षष्ठ्येकवचने 'वसोः सम्प्रसारणम्' ( पा० ६।४।१३१ ) इति सम्प्रसारणम् । 'शासिवसिघसीनां च' ( पा० ८।३।६० ) इति षत्वम् । 'षष्ठ्याः पतिपुत्र०' (पा० ८।३।५३ ) इतिविसर्जनीयस्य सत्वम् । धियञ्जिन्वम् । जिविः प्रीणनार्थः । 'कृत्यल्युटो बहुलम्' ( पा० ३।३।११३ ) इति बहुलवचनात् । खच् । 'इच एकाचोऽम्प्रत्ययवच्च' (पा० ६।३।६८) इत्यमागमः । असत् । 'अस् भुवि' । लेट्यडागमः । 'बहुलं छन्दसि' ( पा० २।४।७३ ) इति शपो लुगभावः । पायुः । 'पा रक्षणे' । 'कृवापाजि०' ( उणा० १।१ ) इत्युण् । स्वस्तये । सुपूर्वादस्तेर्भावे क्तिन् । छन्दस्युभयथा' ( पा० ३।४।११७ ) इति सार्वधातुकत्वाद् 'अस्तेर्भूः' (पा० २।४।५२) इति भूभावाभाव इति वृत्तावुक्तम् ।

( इति षष्ठेऽध्याये पञ्चदशो वर्गः )

## हिन्दीभाषान्तर

चर ( तथा ) अचर के पति, मन्त्रों के प्रेरक उस ऐश्वर्यवान् इन्द्र को हम ( गोतम ) सहायता हेतु आवाहित करते हैं। जिससे रक्षक, पालक एवं अप्रतारित पूषा हमारे धनों की कल्याणकारिणी वृद्धि के लिए हो ।

## टिप्पणियाँ

१. धियञ्जिन्वम्—धियं जिन्वतीति—धी + जिवि + खच् । द्वि० ए० व० । यजमान के मन को प्रसन्न करनेवाले । धिया जिन्वति ऐसा विग्रह भी किया

पाता च । अदब्धोऽनुपहिंसितश्चान्येन केनचित् स्वस्तये अविनाशाय । तथा हूमहे वयमित्यनुषङ्गः ( उव्वटः ) ॥

वयं तं प्रसिद्धमीशानं रुद्रं हूमहे आह्वयामः । कीदृशं तम् । जगतो जङ्गमस्य तस्थुषः स्थावरस्य च भूतजातस्य पतिं पालकम् । धियञ्जिन्वम्, धियं बुद्धिं जिन्वति प्रीणतीति धियञ्जिन्वस्तम् । अलुक् बुद्धिसन्तोषकारकम् । जिन्वतिः प्रीणानार्थः । किमर्थं हूमहे । अवसे अवितुं तर्पयितुम् । तुमर्थे असेप्रत्ययः । यथा येन प्रकारेण पूषा नोऽस्माकं वृधे वृद्धयै स्वस्तये कल्याणाय च असद् भवतु तथा हूमहे इत्यर्थः । कीदृशः पूषा । वेदसां धनानां ज्ञानानां वा रक्षिता रक्षकः । पायुः पालकः पुत्रादीनाम् । अदब्धोऽनुपहिंसितः—( महीधरः ) ।

जा सकता है, तब अर्थ होगा, बुद्धि या कर्म से प्रसन्न होनेवाला। सायण इसी अर्थ को स्वीकारते हैं। 'धी' के लिए दे०, खोंदा, विजन आफ वैदिक पोएट्स, पृ० ६८-१७०। पं० क्षेत्रेशचन्द्र चट्टोपाध्याय के अनुसार ऋग्वेद में धी शब्द का मन्त्र के अर्थ में बहुल प्रयोग हुआ है, अतः अर्थ होगा मन्त्रप्रेरक।

२. अवसे—अव् + असे तुमर्थक। देखिए मन्त्र २ में जीवसे पर टिप्पणी। सहायता के लिए।

३. पूषा—पुष्, पोषण करना, समृद्ध बनाना ( मैकदोनेल, वै० मा०, पृ० ३७; ब्लूमफील्ड, रिलीजन आफ् दि वेद, पृ० १७०; एटकिन्स, पूषन् इन दि ऋग्वेद, पृ० ३६ आदि; खोंदा, स्टाइलिस्टिक रिपीटीशन इन दि वेद, पृ० ३७६) से निष्पन्न पूषा देवता का आदित्यवर्ग में उल्लेख हुआ है [ पुष् + कनिन्, उणा० १।१५५ ] ऋग्वेद के ८ सूक्तों में इसकी स्तुति की गयी है। पूषा के अनेक विरुद हैं ( सकल विरुदों के संग्रह के लिए देखिये—एस्० डी० एट्-किन्स, पूषन् इन दि ऋग्वेद, प्रिन्स्टन, १९४१, पृ० ९८ आदि )। वह पशुओं की रक्षा करता है और यदि पशु खो जायें तो उन्हें सुरक्षापूर्वक घर वापस लाता है। विद्वानो ने पूषा को चरवाहो का देवता कहा है। ( ग्रिसवोल्ड, रिलीजन आफ् ऋग्वेद, पृ० ८३-८४; आर० एन० दाण्डेकर, पूषन् दि पास्टोरल गॉड आफ् दि वेद, न्यू इण्डियन एण्टीक्वेरी, ५ ( १९४२, पृ० ५७ आदि )। पूषा पशुसमूह एवं चरवाहो की रक्षा करता हुआ उनके संवर्धन, समृद्धि तथा भलाई में दत्तचित्त रहता है। ( दे,० मैकदोनेल, वै० मा०, पृ० ३५ आदि; खोंदा, आस्पेक्ट्स आफ् अर्ली विष्णुइज़्म, पृ० १०१ आदि )। ऋ० ६।५५।५ में इन्द्र और पूषा को भाई कहा गया है। ८।४।१५-१६ में वह 'विमोचन' (मुक्तिदाता) के नाम से स्मृत हुआ है। पूषा प्रत्येक पथ का रक्षक है—पाथस् पाथः परिपतिम्–६।४९।८ 'अजाश्व' विरुद से ज्ञात होता है कि उसके रथ में बकरे जोते जाते थे। इस देवता का विवाह-संस्कार से भी सम्बन्ध है (ऋ० १०।८५)। पूषा का विवाह सूर्यसुता सूर्या से हुआ है।

४. वेदसाम्—विद् + असुन्–वेदस्, धन, ज्ञान। 'वेदसाम्' के प्रथम अक्षर में उदात्त है—'ञ्नित्यादिर्नित्यम्'—( पा० ६।१।१९७ )।

५. स्वस्तये—सु + अस् + भावे क्तिन्। अविनाश के लिए—'स्वस्तीत्य-विनाशनाम' ( निरु० ३।२१ )। कल्याण के लिए। छन्द के परिमार्जनार्थ 'सु अस्तये' पढ़ना चाहिए। 'क्तिन्'—'रित' में उदात्त ( मन्त्रे वृषेषपचमन०, पा० ३।३।९६ )॥ ५॥

षष्ठी विराट्स्थाना

**स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।**
**स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥**

पदपाठः

स्वस्ति । नः । इन्द्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः । स्वस्ति । नः । ताक्ष्यः । अरिष्टऽनेमिः । स्वस्तिः । नः । बृहस्पतिः । दधातु ॥ ६ ॥

सायणभाष्यम् ६

वृद्धश्रवा वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृश इन्द्रो नोऽस्माकम्। 'स्वस्तीत्यविनाशनाम' ( निरु० ३।२१ )। स्वस्त्यविनाशं दधातु। विदधातु करोतु। विश्ववेदाः। विश्वानि वेत्ति, इति विश्ववेदाः। यद्वा—विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य। तादृशः पूषा पोषको देवो नोऽस्माकं स्वस्ति विदधातु। अरिष्टनेमिः। नेमिरित्यायुधनाम। अरिष्टोऽहिंसितो नेमिर्यस्य। यद्वा—रथचक्रस्य धारा नेमिः। यत्सम्बन्धिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः। एवम्भूतस्ताक्ष्यस्तृक्षस्य पुत्र गरुत्मान् नोऽस्माकं स्वस्त्यविनाशं विदधातु। तथा बृहस्पतिर्बृहतां देवानां पालयिता नोऽस्माकं स्वस्त्यविनाशं विदधातु।[६]

[६] ( शु० य० सं० २५।१९ )—स्वस्ति स्वस्त्ययनम्।·········दधातु स्थापयतु।···वृद्धश्रवाः प्रभूतसाधनः महाशब्दो महाकीर्तिर्वा।···विश्ववेदाः सर्वज्ञो वा।·······अरिष्टनेमिः अनुपहिंसितासुः।—( उव्वटः )।

वृद्धश्रवाः बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। विश्ववेदाः। 'विद् ज्ञाने' 'विद्लृ लाभे'। आभ्यामसुन्प्रत्ययान्तो वेदस्शब्दः। 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा० ६।२।१०६) इति पूर्वपदान्तोदात्तत्वम्। तार्क्ष्यः तृक्षस्यापत्यम्। 'गर्गादिभ्यो यञ्' (पा० ४।१।१०५) ञित्वादाद्युदात्तत्वम्। अरिष्टनेमिः। न रिष्टारिष्टा। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। अरिष्टा नेमिर्यस्य तथोक्तः। बृहस्पतिः। 'तद् बृहतोः करपत्यो [श्चोरदेवतयोः]' ['सुट् तलोपश्च]' (पा० ६।१।१५७-गणसूत्रम्) इति सुट्-तलोपौ। 'उभे वनस्पत्यादिषु' (पा० ६।२।१४०) पूर्वोत्तरपदयोर्युगपत् प्रकृतिस्वरत्वम्।

## हिन्दीभाषान्तर

प्रभूत कीर्तिवाला इन्द्र हमारा कल्याण करे। समस्त धनो से युक्त पूषा हमारा कल्याण करे। अहिंसित चक्रपरिधि वाला तार्क्ष्य हमारा कल्याण करे। बृहस्पति हमारा कल्याण करे।

## टिप्पणियाँ

१. वृद्धश्रवाः—श्रूयते इति श्रवः, श्रु+असुन्, "सर्वधातुभ्योऽसुन" वृद्धं श्रवो यस्य सः। प्रभूत कीर्तिवाला, सायण इसका अर्थ प्रभूत अन्नवाला भी करते हैं। बहुव्रीहि समास के कारण पूर्वपद के अन्त में उदात्त हुआ है—'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा० ६।२।१)।

२. विश्ववेदाः—विश्वानि वेदांसि यस्य—ब० व्री०, दे० 'बहुव्रीहौ विश्वं संज्ञायाम्' (पा० ६।२।१०६) से पूर्वपद विश्व के 'श्व' को उदात्त हुआ है।

३. तार्क्ष्यः—तृक्ष+अपत्य अर्थ मे, अञ्। तृक्ष का पुत्र। ञित होने से आदि वर्ण में उदात्त है 'ञ्नित्यादिर्नित्यम्' (पा० ६।१।१९७)। पं० क्षे० च० चट्टोपाध्याय के मत से यह सूर्य है।

४. बृहस्पतिः—यह मन्त्रों का अधिदेवता है। इसका दूसरा नाम ब्रह्मणस्पति भी है। इसका शारीरिक वर्णन नगण्य-सा है। इन्द्र के साथ संयुक्त

---

**विराट् स्थाना। आदौ पादौ नववर्णौ तृतीयो दशकस्तुर्यो व्यूहेनैकादशकः—'नवको वैराजस्त्रैष्टुभश्च' इति वचनात्। इन्द्रो नोऽस्मभ्यं स्वस्ति अविनाशं शुभं दधातु। कीदृशः। वृद्धश्रवाः। वृद्धं महत् श्रवः कीर्तिर्यस्य सः। पूषा**

रहने के कारण उनके अनेक विशेषण—मघवन्, वज्री—इसे भी प्राप्त हैं। गुहा-गुप्त धेनुओं को मुक्त करने में बृहस्पति का भी हाथ था। पति शब्द जिन तत्पुरुष समासों में रहता है, उनमें दो उदात्त होते है।

छन्द परिमार्जन के निमित्त—'स्वस्ति' को 'सुअस्ति', 'इन्द्रो' को 'इन्दरो', 'विश्ववेदाः' को विश्वएदाः' पढ़ना चाहिए। विराट्स्थाना के प्रत्येक पाद में १० वर्ण होते हैं ॥ ६ ॥

**पृषदश्वा मरुतः पृश्निमातरः**
**शुभंयावानो विदथेषु जग्मयः ।**
**अग्निजिह्वा मनवः सूरचक्षसो**
**विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥**

## पदपाठः

**पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभम्ऽयावानः । विदथेषु । जग्मयः । अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः । देवाः । अवसा । आ । गमन् । इह ॥ ७ ॥**

## सायणभाष्यम् ७

पृषदश्वाः। पृषद्भिः श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ताः। पृश्निर्नानावर्णा गौर्माता येषाम्। शुभंयावानः। शुभं शोभनं यान्ति गच्छन्तीति शुभंयावानः। शोभनगतय इत्यर्थः। विदथेषु यज्ञेषु जग्मयो गन्तारः। अग्निजिह्वा अग्नेर्जिह्वायां वर्तमानाः। सर्वे हि देवा हविः स्वीकरणायाग्नेर्जिह्वाया वर्तन्ते। तात्स्थ्यात् ताच्छब्द्यम्। मनवः सर्वस्य मन्तारः। सूरचक्षसः सूर्यप्रकाश इव चक्षः

---

**नः स्वस्ति ददातु। कीदृशः। विश्ववेदाः। विश्वं सर्वं वेदो धनं यस्य विश्वं वेत्तीति वा विश्ववेदाः। तार्क्ष्यो रथो गरुडो वा नः स्वस्ति दधातु। कीदृशः अरिष्टनेमिः। अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः। बृहस्पतिर्देवगुरुर्नोऽस्मभ्यं ददातु—( महीधरः )।**

प्रकाशो येषा त एवम्भूता मरुतो मरुत्सञ्ज्ञका विश्वेदेवाः सर्वे देवाः नोऽस्मानिहास्मिन् कालेऽवसा रक्षणेन सह आगमन् । आगच्छन्तु ।[७]

शुभंयावानः । 'या प्रापणे' । 'आतो मनिन्…' ( पा० ३।२।७४ ) इति वनिप् । 'तत्पुरुषे कृति बहुलम्' ( पा० ६।३।१४ ) इति बहुलवचनाद् द्वितीयाया अप्यलुक् । गमन् । गमेः प्रार्थनाया लेट्यडागमः । 'इतश्च लोप. पर…' (पा० ३।४।९४) इतीकारलोपः । 'बहुलं छन्दसि' (पा०२।४।७३) इति शपो लुक् ॥

हिन्दीभाषान्तर

चितकबरी घोडियों वाले, पृश्नि नामिका मातावाले, शुभगंता (और) यज्ञों में गमनशील मरुद्गण, (तथा) सूर्यरूपी नेत्रो एवं अग्निरूपी जीभवाले वीर या मानने वाले विश्वेदेव (निखिल देव) यहाँ (यज्ञ में) हमारे लिए सहायता के साथ आएँ ।

टिप्पणियाँ

१. पृषदश्वाः—सायण 'पृषद्भिः युक्ता अश्वाः येषा ते तथोक्ताः'—श्वेत चित्तियो से युक्त घोड़ो वाले अर्थ करते हैं । उव्वट और महीधर भी इसी का अनुगमन करते हैं । महीधर ने एक अन्य अर्थ भी प्रस्तुत किया है—पृषत्यः अश्वा येषा ते, जिनके पास पृषती सञ्ज्ञक घोड़ियाँ हैं । निघण्टु में—'पृषत्यो मरुताम्'—मरुद्गण की घोड़ियाँ चितकबरी कही गयी हैं, अतः यही अर्थ ठीक लगता है । पृषदश्वा विशेषण प्रायः मरुतो के लिए प्रयुक्त हुआ है । ( ऋ० १।८७।४, १।६।८, ७।४०।३ )

२. मरुत —मरुतो का एक वर्ग है । इनका सम्बन्ध रुद्र से है । रुद्र के पुत्ररूप में इनका वर्णन हुआ है । इनकी माता 'पृश्नि' कही गयी है । कदाचित् यह गोरूपा है । इनकी पत्नी रोदसी देवी है जो सर्वदा इनके रथ पर आरूढ़

---

[७] ( शु० य० सं० २५।२० )—पृषदश्वा मरुतः । पृषन्तः शबला अश्वा येषां ते पृषदश्वाः । पृश्निमातरः । पृश्निर्द्यौर्माता येषां त एवमुच्यन्ते । शुभं कर्तुं जनान् प्रति ये यान्ति ते शुभंयावानः । 'आतो मनिन्-क्वनिप् वनिपश्च' इति वनिप् । विदथेषु यज्ञेषु जग्मयो गमनशीलाः । 'आद-गम-हन्…' इति किः । य इत्थम्भूताः । मरुतस्ते अन्सा अन्नेन हविर्लक्षणेन आहूताः सन्त आगमन् आगच्छन्तु । इहेत्यनुषङ्गः । ये च अवसा गमन्निह । ये च सूरचक्षस आदित्यदर्शना विश्वेदेवास्ते च नोऽस्माकमवसागमन्निह यज्ञे—( उव्वटः ) ।

रहती है। इन्द्र के सहचर के रूप मे वृत्रवध के अवसर पर मरुद्गण ने सहायता की थी। इनका मुख्य कार्य वृष्टि-प्रदान करना है।

३. पृश्निमातरः—सायण के अनुसार 'पृश्निर्माता येषा ते तथोक्ताः'—ब० व्री०। चितकबरी गौ जिनकी माता है वे मरुत्। पृश्नि का अर्थ चित्ती भी होता है—ऋ० १।१६०।३, ७।१०३।४। मैकडोनेल ने 'अर्चन्तो अर्क जनयन्त इन्द्रियम्, अधि श्रियो दधिरे पृश्निमातरः' ऋ० १।८५।२ की व्याख्या के समय, जिनकी माता पृश्नि है, अर्थ किया है। यह भी मरुतो के विरुद के रूप मे प्रयुक्त हुआ है। इसका अर्थ चितकबरी गायो वाले भी सम्भव है। पृश्नि = चितकबरी। 'नि' से अन्त होनेवाले शब्द उदात्त होते हैं 'वर्णाना तण-तिनितान्तानाम्' ( फि० सू० २।३३ ). अतः 'पृश्नि' का प्रथम वर्ण उदात्त है।

४. शुभंयावानः—शुभ + या + वनिप्, प्र० ब० व०। ग्रोदा के अनुसार यहाँ अर्थ करना चाहिए 'पाँत बाँधकर सुन्दरतापूर्वक गमन करनेवाले'।

५. विदथ—विध् पूजार्थक + थ = स० ब० व०। यज्ञ, दैवी पूजा। विद्वानो का मत है कि विदथ वि पूर्वक धा धातु से व्युत्पन्न हुआ है। 'विधा' का अर्थ है वितरण करना, व्यवस्थित करना, क्रमबद्ध करना, नियोजित करना, स्थापित करना, विहित करना, विधान बनाना। अतः इसका प्रारम्भिक अर्थ विधान, वितरण, नियम रहा होगा। वैदिक ऋषियो की विचारसरणि मे यज्ञ

---

जगती। मरुतो देवा अवसाऽन्नेन हविर्लक्षणेन हेतुना इह यज्ञे आगमन्ना-गच्छन्तु। पृषदश्वाः। पृषत्वा पृषतीसञ्ज्ञा अश्वा वडवा वाहनं येषां ते पृषदश्वाः। पुंवद्भावः। 'पृषत्यो मरुताम्' इति निघण्टुवचनात्। यद्वा पृषन्तः शबला अश्वा येषां ते पृश्निर्द्यौर्गौर्दितिः ( ? रदिति ? ) वा माता जननी येषां ते पृश्निमातरः। शुभं कल्याणं यन्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः। 'आतो मनिन्....' ( पा० ३।२।७४ ) इति वनिप् प्रत्ययः। विदथेषु यज्ञगृहेषु जग्मयो गमनशीलाः। 'आद्-गम-हन्....' ( पा० ।३।२।१७१ ) इति किः। अग्निजिह्वाः। अग्निर्जिह्वा भोजनसाधनं येषां ते—'अग्निमुखा वै देवाः' इति श्रुतेः। हुताद इत्यर्थः। मन्यन्ते जानन्ति मनवः सर्वज्ञाः। सूरः सूर्यश्चक्षुः चक्षुर्येषां ते, सूर्यं चक्षते पश्यन्ति वा सूर्यचक्षसः। किञ्च न केवलं मरुतः विश्वे सर्वे देवाश्च नोऽस्माकं यज्ञे आगमन्, आगच्छन्तु—( महीधरः )॥

'विहित' था, अतः विदथ एवं यज्ञ एकार्थक हो गये। स्थित्यन्तर में विदथ व्यापार की पूर्णता के निमित्त प्रयुक्त होने लगा और इस प्रकार विदथ सभा का भी पर्याय बन गया। सभा में प्रभविष्णु व्यक्ति को 'विदथ्य' और 'सभेय' कहते हैं ( पीटर्सन भा० १,पृ० १०० )।

सायण ने अग्निजिह्वाः, मनवः, सूरचक्षसः को मरुत् का विशेषण मानकर—अग्निरूपी जिह्वावाले, सबको माननेवाले और सूर्यप्रकाश ( मरुद्गण ) अर्थ स्वीकारा है ॥ ७ ॥

## अष्टमाद्यास्त्रिष्टुभः ( ८-१० )

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥८॥**

पदपाठः

भद्रम्। कर्णेभिः। शृणुयाम। देवाः। भद्रम्। पश्येम। अक्षऽभिः। यजत्राः। स्थिरैः। अङ्गैः। तुष्टुऽवांसः। तनूभिः। वि। अशेम। देवऽहितम्। यत्। आयुः ॥ ८ ॥

### सायणभाष्यम् ८

अस्ति सौम्यचरुस्तृतीयसवने। तेन चरुणा देवतामिष्ट्वा इष्टशेषे तस्मिन् बहुघृतमवनीय तस्मिन् वषट्कर्त्रा स्वकीया छाया द्रष्टव्या। सा यदि न दृश्येत तदानीं 'भद्रम्' इत्येका पठितव्या। 'त्वं सोम' इति खण्डे तथैव सूत्र्यते—"राज्ञा सोमेन तद्वयमस्मासु धारयामसि भद्रं कर्णेभिः शृणुयाम देवा इति च" ( आ० श्रौ० ५।१९ ) इति। महानाम्नी व्रतेऽप्येषा भूमिस्पर्शने जप्या। सूत्रितं च 'एतद्विदम्' इति खण्डे—'भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः" ( आश्व० श्रौ० ८।१४ ) इति ॥

हे देवता दानादिगुणयुक्ताः सर्वे देवाः कर्णेभिः अस्मदीयैः श्रोत्रैर्भद्रं भजनीयं कल्याणं वचनं शृणुयाम युष्मत्प्रसादाच्छ्रोतुं समर्थाः स्याम। अस्माकं बाधिर्यं कदाचिदपि मा भूत्। हे यजत्रा यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवा

अक्षभिरक्षिभिरात्मीयैश्चक्षुभिर्भद्रं शोभनं पश्येम द्रष्टुं समर्थाः स्याम। अस्माकं दृष्टिप्रतिघातो मा भूत्। स्थिरैर्दृढैरङ्गैर्हस्तपादादिभिरवयवैस्तनूभिः शरीरैश्च युक्ता वयं तुष्टुवांसो युष्मान् स्तुवन्तो यदायुः षोडशाधिकशतप्रमाण विंशत्यधिकशतप्रमाणं वा देवहितं देवेन प्रजापतिना स्थापित तद् व्यशेम प्राप्नुयाम।[८]

कर्णेभिः। 'बहुलं छन्दसि' (पा० ७।१।१०) इति भिस ऐस्भावः। अक्षभिः। 'छन्दस्यपि दृश्यते' (पा० ७।१।७६) इत्यनङ् स चोदात्त। यजत्राः। 'अमिनक्षि०' (उणा० ३।१०५) इत्यादिना यजेरत्रन्प्रत्ययः। तुष्टुवास.। 'ष्टुञ् स्तुतौ'। लिटः क्वसुः। 'शर्पूर्वाः खयः' (पा० ७।४।६१) इति तकारः शिष्यते। अशेम। 'अशू व्याप्तौ।' लिङ्याशिष्यङ्। यदि तु तत्र परिगणन-मन्यव्यावृत्त्यर्थं तदानीं लिङि व्यत्ययेन शप्। देवहितम्। 'तृतीया कर्मणि' (पा० ६।२।४८) इति पूर्वपदप्रकृतिस्वरत्वम्॥

## हिन्दीभाषान्तर

हे देव! हम (गोतम) कानों से अच्छा सुनें, यजनीय देवगण! हम (गोतम) आँखों से अच्छा देखें (और) हम (गोतम) दृढ़ाङ्ग—शरीर से तुम्हारी स्तुति करते हुए, देव स्थापित आयु प्राप्त करें।

---

८ (शु० य० सं० २५।२१)— "भद्रमनुकूलं कर्णेभिः कर्णाभ्याम्" अक्षभिरक्षिभ्याम्। हे यजत्रा यजनीयाः।"'स्थिरैः "अशिथिलैः,"'तुष्टुवांसो देवान् स्तुवन्तः। तनूभिः। भार्या—पुत्र—पौत्रादिकाभिस्तनूभि सहिताः। व्यशेमहि व्यश्नुवीमहि। देवहितं देवैर्यत् स्थापितं मनुष्याणामायुस्तद् व्यश्नुवीमहि—(उव्वटः)।

तिस्रस्त्रिष्टुभः। हे देवाः कर्णेभिः कर्णैर्भद्रं कल्याणमनुकूलं वयं शृणुयाम। हे यजत्राः। यजन्तं त्रायन्ते रक्षन्ति यजत्रा यजमानपालकाः। अक्षभिर्नेत्रै-र्भद्रं वयं पश्येम। 'बहुलं छन्दसि', 'छन्दस्यपि दृश्यते' (पा० ७।१।७६) इति हलादौ अक्षिशब्दस्यानङादेशः। किञ्च देवहितं देवैः स्थापितं देवानां हितं देवोपासनयोग्यं वा, यदायुर्जीवनं तद् वयं व्यशेमहि व्यश्नुवी-महि प्राप्नुयाम। कीदृशा वयम्। स्थिरैर्दृढैरङ्गैरवयवैः करचरणादिभिः, तनूभिः शरीरैश्च पुत्रादिभिर्वा युताः, तुष्टुवांसो भवतः स्तुवन्तः सन्तः—(महीधरः)।

## टिप्पणियाँ

१. कर्णेभिः—वेद में भिस् के स्थान पर अदन्त शब्दों को ऐस् होता भी है और नहीं भी होता, अतः कर्णैः, कर्णेभिः दोनों रूप मिलते हैं।

२. अक्षभिः—अक्षि + भिस्—'छन्दस्यपि दृश्यते' से 'अक्षि' के इकार को अनङ्। उसी अनङ् में उदात्त स्वर है। छन्द के परिमार्जनार्थ 'पश्येम अक्षभिः' पढ़ना चाहिए।

३. देवहितम्—देवैर्हितम्, तृ० तत्पु०, देव + धा + क्त, देवों द्वारा स्थापित या व्यवस्थित या निर्दिष्ट। तत्पुरुष में प्रायः द्वितीय पद में उदात्त होता है, पर क्तप्रत्ययान्त शब्दों के साथ समास होने पर पूर्वपद में उदात्त होता है, अतएव 'देव' के 'व' में उदात्त है—'तृतीया कर्मणि' (पा० ६।२।४८) ॥ ८ ॥

शतमिन्नु शरदो अन्ति देवा
यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति
मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥

### पदपाठः

शतम्। इत्। नु। शरदः। अन्ति। देवाः। यत्र। नः। चक्र। जरसम्। तनूनाम्। पुत्रासः। यत्र। पितरः। भवन्ति। मा। नः। मध्या। रिरिषत। आयुः। गन्तोः ॥ ९ ॥

### सायणभाष्यम् ९

हे देवा अन्त्यन्तिके मनुष्याणां समीपे आयुष्ट्वेन भवद्भिः कल्पिताः शरदः संवत्सराः शतमिन्नु शतं खलु। यस्मात् सृष्टिकाले मनुष्याणां शतं संवत्सरा आयुरिति युष्माभिः परिकल्पितं तस्मान्नोऽस्माकमायुर्गन्तोः कृत्स्नस्यायुषो गमनात् पूर्वं मध्या मध्ये मा रीरिषत मा हिंसीष्ट। कीदृशान्। नोऽस्माकं तनूनां शरीराणां

जरसं जरा यत्र यस्यामवस्थाया चक्र कृतवन्तो यूयम्। यत्र च पुत्रासः पुत्राः पितरोऽस्माकं रक्षितारो भवन्ति। ईदृग्दशापपन्नानित्यर्थः।[१]

अन्ति। अन्तिकशब्दस्य 'कादिलोपो बहुलमिति वक्तव्यम्' इति कलोपः। यत्र। 'ऋचि तुनुघमक्षुतङ्कुत्रो०' (पा० ६।३।१३३) इति संहितायां दीर्घः। चक्र। लिटि मध्यमबहुवचनस्य कित्त्वाद् गुणाभावे यणादेशः। द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति संहिताया दीर्घत्वम्। जरसम्। 'जराया जरसन्यतरस्याम्' (पा० ७।२।१०१) इति जरसादेशः। मध्या। 'सुपां सुलुक०'

---

[१] (शु० य० सं० २५।२२)—शतमित् शतमपि शरदः अन्ति अन्तिके समीपे भवथ हे देवाः। अल्पकालमित्यभिप्रायः। ऋषिभिरुदितमेतत्। यत्र यस्मिन् शरदां शते नोऽस्माकं यूयं चक्र कृतवन्तो जरसं जरां तनूनां जरानिमित्तां शक्तिमित्यभिप्रायः किञ्च पुत्रासो यत्र पितरो भवन्ति तदुक्तम्—'तत्र वै प्रजापति प्रजाः ससृजे' इत्युपक्रम्य 'तस्माज्जनयित्वा बिभृही'ति। यत्र पितरो भवन्ति—१ तदप्युक्तमेव—'स यत्र म्रियते यत्रैनमग्नावभ्यादधाति तदेषोऽग्नेरधि जायते स एष पुत्रः सन् पिता भवति'। अथवा—पुत्रा एव पितॄणामौर्ध्वदैहिकं कुर्वाणाः पितरो यत्र सम्पद्यन्ते तदपि शरदां शतमन्तिक एवेति। मा नो मध्या रीरिषतायुर्गन्तोः। मा रीरिषत मा हिंसीष्ट नोऽस्माकं मध्या मध्ये, अकाल एव, आयुः, गन्तोर्गन्तृ गमनशीलम्। उक्तं च—'सञ्छिन्नस्य सञ्छिन्नस्य तमुग्रदण्डं मृत्युं मनुष्यस्य विचक्षणस्य। वर्षासु सिक्ता इव चर्मबन्धाः सर्वे प्रयत्नाः शिथिलीभवन्ति॥' इति—(उव्वटः)।

हे देवाः शतमित् शतमपि शरदो वर्षाणि शतवर्षपर्यन्तं यूयमन्ति अन्तिके समीपे भवतेति शेषः। यत्र शरच्छते नोऽस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र कुरुथ। करोतेर्लिटि मध्यमबहुवचनम्। द्व्यचोऽतस्तिङः' (पा० ६।३।१३५) इति 'चक्रा' इत्यत्र संहितायां दीर्घः। 'निपातस्य च' (पा० ६।३।१३६) इति 'यत्रा' इत्यत्र दीर्घः। वार्धकावधि यूयं समीपे भवतेत्यर्थः। यत्रास्माकं जरायां पुत्रासोऽस्मत्पुत्राः पितरो भवन्ति। पुत्रवन्तो भवन्ति। यावदस्माकं पौत्रा भवन्तीत्यर्थः तावन्मध्या मध्ये नोऽस्माकमायुर्मा रीरिषत मा हिंसीष्ट। रिषतेर्हिंसार्थस्य णिजन्तस्य चङि रूपम्। कीदृशमायुः। गन्तोः। गन्तृ गमनशीलम्। तदुक्तम्—''सञ्छिन्नस्य…''॥ इति—(महीधरः)।

( पा० ७।१।३९ ) इति सप्तम्या डादेशः । 'रीरिषत । 'रीष् रुष् हिंसायाम्' । अस्माण्ण्यन्तान्माङि लुङि मध्यमबहुवचने च्लेश्चङि णिलोपोपधाह्रस्वद्विर्वचन-हलादिशेषसन्वद्भावेत्वदीर्घाः । छान्दसः पदकालीनो ह्रस्वः । गन्तोः । 'भावलक्षणे स्थेण०' ( पा० ३।४।१६ ) इति गमेस्तोसुन्प्रत्ययः ॥

## हिन्दीभाषान्तर

देवगण ! ( हमारे ) पास वर्ष के सौ ही हैं, जिसमें ( तुम लोग ) हमारे शरीरों की वृद्धावस्था कर देते हो, जिसमें पुत्र हो जाते हैं, ( उस ) जीवनगति के मध्य हमारी आयु को मत हिंसित करो ।

## टिप्पणियाँ

१. शरदः—संवत्सर, वर्ष । शरद् यद्यपि ऋतुवाचक है, तथापि शरद् से संवत्सर का प्रारम्भ होने से यह वर्ष का वाचक भी हो गया । यह शब्द इस बात को द्योतित करता है कि आर्यों का वर्ष पहले शरद् ऋतु से प्रारम्भ होता था ।

२. गन्तोः—गम् + तोसुन्—गमन करने वाले का, अतएव हि० भा० में 'जीवन गति' ॥ ९ ॥

**अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः ।**
**विश्वे॑ दे॒वा अदि॑तिः॒ पञ्च॒ जना॒ अदि॑तिर्जा॒तमदि॑ति॒र्जनि॑त्वम् ॥ १० ॥**

( इति षष्ठेऽध्याये षोडशो वर्गः )

## पदपाठः

अदि॑तिः । द्यौः । अदि॑तिः । अ॒न्तरि॑क्षम् । अदि॑तिः । मा॒ता । सः । पि॒ता । सः । पु॒त्रः । विश्वे॑ । दे॒वाः । अदि॑तिः । पञ्च॑ । जनाः॑ । अदि॑तिः । जा॒तम् । अदि॑तिः । जनि॑ऽत्वम् ॥ १० ॥

## सायणभाष्यम् १०

'अदितिर्द्यौरदितिः' इत्येषा अदितिदेवताके पशौ हविषो याज्या । सूत्रितं च—"अदितिर्द्यौरदितिरन्तरिक्षं न ते विष्णो जायमानो न जातः" (आश्व० श्रौ० ३।८) इति ।

अदितिरदीनाखण्डनीया वा पृथिवी देवमाता वा सैव द्यौर्द्योतनशीलो नाकः। सैव अन्तरिक्षमन्तरा द्यावापृथिव्योर्मध्य ईक्ष्यमाणं व्योम। सैव माता निर्मात्री जगतो जननी। सैव पितोत्पादक। ततश्च स पुत्रो मातापित्रोर्जातः पुत्रोऽपि सैव। विश्वेदेवाः सर्वेऽपि देवा अदितिरेव। पञ्च जना निषादपञ्चमाश्चत्वारो वर्णाः। यद्वा—गन्धर्वाः पितरो देवा असुरा रक्षांसि। तदुक्तं यास्केन—"गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके। चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः" (निरु० ३।८) इति। ब्राह्मणे त्वेवमाम्नातम्—"सर्वेषां वा एतत् पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां पितृणां च" (ऐ० ब्रा० ३।३१) इति। तत्र गन्धर्वाप्सरसामैक्यात् पञ्चजनत्वम्। एवंविधाः पञ्चजना अप्यदितिरेव जातं जननं प्रजानामुत्पत्तिः साप्यदितिरेव। जनित्वं जन्माधिकरणं तदप्यदितिरेव। एवं सकलजगदात्मनादितिः स्तूयते। उक्तं च यास्केन—'इत्यदितेर्विभूतिमाचष्टे' (निरु० ४।२३) इति।[१०]

---

१० (शु० य० सं० २५।२३)—सर्वात्मत्वेनादितिं मन्त्रदृक् स्तौति।...स च पिता स च पुत्रः। इति च्छान्दसो लिङ्गव्यत्ययः।...किं बहुनोक्तेन अदितिरेव जातं भूतम्। अदितिरेव जनित्वं जनिष्यमाणम्। अथवा नैवादितिरनेनोच्यते किं पुनरेतान्येव द्यौःप्रभृतीनि, अदीनानि महाभाग्ययुक्तानीति।—(उव्वटः)॥

मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति। द्यौः स्वर्गोऽदितिस्तदधिष्ठातृत्वात्। एवमग्रेऽपि। अन्तरिक्षमदितिः। माता पुत्रश्च स सादितिरेव। लिङ्गव्यत्ययः विश्वे सर्वे देवा अदितिः। पञ्चजना मनुष्या अदितिः। किं बहुना, जातमुत्पन्नं प्राणिजातं, जनित्वं जनिष्यमाणं च सर्वमदितिरेव। यद्वा अदितिर्मन्त्रेण नोच्यते, द्यौरित्यादीनि सर्वाणि जनित्वान्तान्यदितिरदितीन्यदीनानि महाभाग्ययुक्तानि सन्तु—(महीधरः)।

अदितिर्द्यौरदितिरन्तरिक्षम् इति। एषा वै द्यौः। एषा अन्तरिक्षम्। अदितिर्माता स पिता स पुत्रः इति। एषा वै माता। एषा पिता। एषा पुत्रः। विश्वेदेवा अदितिः पञ्चजना इति। ये देवा असुरेभ्यः पूर्वे पञ्चजना आसन्, य एवासावादित्ये पुरुषः, यश्चन्द्रमसि, यो विद्युति, योऽप्सु, योऽयमक्षन्नन्त एष एव ते। तदेषैवः। अदितिर्जातमदितिर्जनित्वम् इति। एषा ह्येव जातम्। एषा जनित्वम्॥ जै० उ० ब्रा० १.१३.५।

अदितिः। 'दो अवखण्डने'। अस्मात् कर्मणि क्तिनि 'द्यतिस्यतिमास्थाम्' ( पा० ७।४।४० ) इतीत्वम्। यास्कपक्षे तु 'दीङ् क्षये' इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वम्। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। स पिता। 'निर्दिश्यमान-प्रतिनिर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददते' इत्युद्देश्य लिङ्गतया पुँल्लिङ्गत्वम्। जनित्वम्। जनेरौणादिकस्त्वन्प्रत्ययः॥

## हिन्दी भाषान्तर

अदिति द्युलोक है। अदिति अन्तरिक्ष है, अदिति माता है। वही पिता ( एवं ) वही पुत्र है। अदिति विश्वेदेव ( सब देवता ) तथा सब मनुष्य हैं। अदिति जन्म और जन्म का कारण है।

## टिप्पणियाँ

१. पञ्च जनाः--आर्यों की पाँच जातियाँ। पंचजन के सम्बन्ध में यास्क के समय से मतभेद चला आ रहा है। यास्क के मत में गन्धर्व, पितर, देव, असुर एव राक्षस का पंचजन में ग्रहण करना चाहिए। औपमन्यव ब्राह्मण, क्षत्रिय, वैश्य, शूद्र एवं निषाद जाति को पाँच जनो मे स्वीकारते हैं। ऐतरेय ब्राह्मण पंचजनों मे देव, मनुष्य, गन्धर्व-अप्सरा, सर्प और पितरो को परिगणित करता है। पंचजन ( ऋ० ३।३७।९ ), पंचमानुष ( ऋ० ८।९।२ ), पंचकृष्टि (ऋ० २।२।१०, ३।५३।१६ ), पंचक्षिति (१।७।९ ऋ०), पंचचर्षणि (ऋ० ५।८६।२; ९।१०१।९) आदि के द्वारा पाँच जातियो का निर्देश उपलब्ध होता है। पाश्चात्य विद्वानो का अभिमत है कि इस शब्द से समस्त मानव अथवा प्राणियो का ज्ञापन होता है। वस्तुतः उपर्युक्त सकल मतवाद परिहेय हैं। उपरिनिर्दिष्ट निखिल शब्द आर्यों की पाँच जातियो के ख्यापक हैं। वक्ष्यमाण मन्त्र में इनका एकत्र उल्लेख इसकी पुष्टि करता है।

'यदिन्द्राग्नी यदुषु तुर्वशेषु यद् द्रुह्युष्वनुषु पूरुषु स्थः'।—ऋ० १।१०८।८

अत एव यह कथ्य समीचीन होगा कि 'पञ्चजनाः' से यदु, तुर्वश, द्रुह्यु, अनु और पुरु नामक आर्य-जातियाँ स्वीकर्तव्य हैं। नकारान्त संख्यावाचक शब्दो का आदि वर्ण उदात्त होता है—'ञ्नः सङ्ख्यायाम्' ( फि० सू० २।२८ ), अतः 'पञ्च' का प उदात्त है। [ पंचजन के लिए देखिए : बी० आर० शर्मा, पञ्चजन इन दि वेदाज; जर्नल आफ् दि एसियाटिक सो०, बम्बई। श्रद्धाशताब्दि १९५६-५७। दे० बृहद् देवता ७।६९ ]॥ १०॥



# विष्णुसूक्तम्

१ म० सू० १५४

प्रथममण्डले चतुःपञ्चाशदुत्तरशततमं ( एकविंशेऽनुवाके पञ्चदशं )

सूक्तम्

( द्वितीयाष्टके द्वितीयेऽध्याये चतुर्विंशो वर्गः )

उचथ्यपुत्रो दीर्घतमा ऋषिः । विष्णुर्देवता । त्रिष्टुप् छन्दः ।

**सायणभाष्यम्**

'विष्णोर्नुकम्' इति षड्-ऋचं पञ्चदशं सूक्तं दैर्घतमसं वैष्णवम् । अत्रानुक्रमणिका—"विष्णोः षड् वैष्णवं हि" इति । अभिप्लवषडहेषूक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थम् इदमादिसूक्तद्वयं विनियुक्तम् ।' 'स्तोमे वर्धमाने' इति खण्डे सूत्रितम्—"विष्णोर्नुकम् इति सूक्ते परो मात्रयेत्यच्छावाकः"—( आश्व० श्रौ० ७।९ ) इति । तथा तृतीयसवने सोमातिरेक उत्तरोत्तरसंस्थोपगन्तव्या आतिरात्रात् ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यम् । तत्रैतदेव सूक्तम् । 'सोमातिरेके' इति खण्डे सूत्रितम्—"महाँ इन्द्रो नृवद्विष्णोर्नुकम्" ( आश्व० श्रौ० ६।७ ) इति । आग्निमारुतशस्त्रे आद्या विनियुक्ता । 'अथ यथेतम्' इति खण्डे सूत्रितम्—"विष्णोर्नुकं वीर्याणि प्रवोचं तन्तुं तन्वन् रजसो भानुमन्विहि" ( आश्व० श्रौ० ५।२० ) इति ॥

विष्णोर्नु कं वीर्याणि प्र वोचं
यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं
विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥

पदपाठः

विष्णोः । नु । कम् । वीर्याणि । प्र । वोचम् । यः । पार्थिवानि । विऽममे । रजांसि । यः । अस्कभायत् । उत्ऽतरम् । सधऽस्थम् । विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥ १ ॥

## सायणभाष्यम् १

हे नरा विष्णोर्व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नुकमतिशीघ्रं प्रवोचम्। प्रब्रवीमि। अत्र यद्यपि नुकमिति पदद्वयं, तथापि यास्केन "नवोत्तराणि पदानि" ( निरु० ३।१३ ) इत्युक्तत्वात, शाखान्तर एकत्वेन पाठाच्च, नु इत्येतस्मिन्नेवार्थे नु कमिति पदद्वयम्। कानि तानीति तत्राह। यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि रञ्जनात्मकानि क्षित्यादिलोकत्रयाभिमानीनि अग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे। अत्र त्रयो लोका अपि पृथिवीशब्दवाच्या, तथा च मन्त्रान्तरम्—"यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः" ( ऋ० सं० १।१०८।९ ) इति। तैत्तिरीयेऽपि—"योऽस्यां पृथिव्यामस्यायुषा" इत्युपक्रम्य "यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्" (तै० सं० १।२।१२।१ ) इति। तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वम्। किञ्च यश्च विष्णुरुत्तरम् उद्गततरम् अतिविस्तीर्णं सधस्थं सहस्थानं लोकत्रयाश्रयभूतम् अन्तरिक्षम् अस्कभायत्। तेषामाधारत्वेन स्तम्भितवान्। निर्मितवानित्यर्थः। अनेनान्तरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति। यद्वा। यो विष्णुः पार्थिवानि पृथिवीसम्बन्धीनि रजांसि पृथिव्या अधस्तनसप्तलोकान् विममे विविधं निर्मितवान्। रजःशब्दो लोकवाची, "लोका रजांस्युच्यन्ते" ( निरुक्त ४।१९ ) इति यास्केनोक्तत्वात्। किञ्च यश्चोत्तरम् उद्गततरम् उत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यम् भूरादिलोकसप्तकमस्कभायत् स्कम्भितवान्। सृष्टवानित्यर्थः।

स्कम्भेः 'स्तम्भुस्तुम्भु' इति विहितस्य श्नः 'छन्दसि शायजपि' इति ( पा० ३।१।८४ ) व्यत्ययेन शायजादेशः। अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे। भूरादिलोकत्रयमित्यर्थः। भूम्याम् उपार्जितकर्मभोगत्वाद् इतरलोकानां तत्कारणत्वम्। किञ्च यश्चोत्तरमुत्कृष्टतरं सर्वेषां लोकानामुपरिभूतम्। अपुनरावृत्तेस्तस्योत्कृष्टत्वम्। सधस्थमुपासकानां सहस्थानं सत्यलोकमस्कभायत्। स्कम्भितवान्। ध्रुवं स्थापितवानित्यर्थः। किं कुर्वन् त्रेधा विचक्रमाणस्त्रिप्रकारं स्वसृष्टान् लोकान् विविधं क्रममाणः। विष्णोस्त्रेधा क्रमणम् "इदं विष्णुर्विचक्रमे" ( ऋ० सं० १।२२।१७ ) इत्यादि श्रुतिषु

प्रसिद्धम्। अतएव उरुगायः उरुभिर्महद्भिर्गीयमानः। अतिप्रभूतं गीयमानो वा। य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचम्॥[1]

## हिन्दीभाषान्तर

अब ( मैं उस ) विष्णु के वीर कर्मों को प्रख्यापित करूँगा, जिसने पृथ्वी-सम्बन्धी स्थानों को नाप लिया है, ( तथा ) तीन प्रकार से पादन्यास करते हुए विशालगतिशील जिसने ऊर्ध्वस्थ सहनिवासस्थान को स्थिर कर दिया है।

## टिप्पणियाँ

१. विष्णोः—विष्णु शब्द के निर्वचन में विद्वानों में वैमत्य है। ओल्देनबर्ग के मतानुसार विष्णु शब्द का अर्थ हे 'विशाल उद्यमो' वि + स्नु। ब्लूमफील्ड, वि + स्नु ( सानु-शिखर ) से 'उच्च शिखर' पर चढ़नेवाला। मैकदोनेल के अनुसार इस शब्द की निरुक्ति "विश् कर्मण्य होना, क्रियाशील होना, कर्मठ होना, सक्रिय होना आदि" से अधिक सम्भावित है और तब विष्णु का अर्थ होगा—कर्मण्य, कर्मठ, क्रियाशील आदि। सायण के अनुसार 'विष्लृ व्याप्तौ' धातु से विष्णु व्यापक। कौषीतकीब्राह्मण 'विश् प्रवेशने' से व्युत्पन्न मानता है। यास्क ने विष्णु को 'विषित' कहकर विश् या वि + अश् से स्वीकारा है। इस प्रकार विष्णु के व्यापक, सर्वत्र प्रविष्ट, सक्रिय, आदि अर्थ

---

[1] ( शु० य० सं० ५।१८ )—अन्ते "विष्णवे त्वा" इति यजुः। नुकमिति निपातसमुदायोऽवधारणार्थः— ( उव्वटः )॥ नुकमित्यव्ययमवधारणार्थम्। विष्णोरेव वीर्याणि कर्माण्यहं प्रवोचं प्रब्रवीमि। प्रपूर्वस्य वचेर्लुङि रूपं वचेरुम् अडभावः। कानि कर्माणीत्याह। यो विष्णुः पार्थिवानि रजांसि पृथिव्यन्तरिक्षद्युलोकस्थानानि विममे निर्ममे। "लोका रजांस्युच्यन्ते" ( निरु० ३।१९ ) इति यास्कोक्ते रजःशब्दो लोकवाचकः। यद्वा—यः पार्थिवानि रजांसि पार्थिवपरमाणून् विममे परिगणितवान्। यश्च विष्णुरुत्तरमुपरितनं सधस्थं देवानां सहवासस्थानं द्युलोकरूपमस्कभायत् यथाधो न पतति तथा स्तम्भितवान्। सह देवास्तिष्ठन्ति यस्मिंस्तत् सधस्थम्। 'सधमादस्थयोश्छन्दसि' ( पा० ६।३।९६ ) इति सहस्य सधादेशः। 'स्कम्भ रोधने'। 'क्र्यादिभ्यः श्ना' ( पा० ३।१।८१ ), 'हलः श्नः शानज्झौ' ( पा० ३।१।८३ )

होते हैं। ब्राह्मण-ग्रन्थों में सूर्य, यज्ञ, अन्न, सोम, वीर्य, पुरुष, यूप आदि अर्थों में इस शब्द का प्रयोग हुआ है।

२. वीर्याणि—वीर विक्रान्तौ + यत्—वीर्य—वीर कर्म, वीरशक्ति। इसमें 'र्या' का स्वरित प्रतीयमान स्वतन्त्र है। मैकदोनेल के अनुसार पहले सम्भवतः यहाँ परतन्त्र स्वरित था, क्योंकि छन्दोभंग के प्रतिरोध के निमित्त 'वीरि आणि' पाठ आज भी अनिवार्य है—'अपि माषं मषं कुर्यात् छन्दोभङ्गं न कारयेत्'। त्रिष्टुप् छन्द के प्रत्येक पाद में ११ वर्ण होते हैं, पर प्रथम पाद में केवल १० वर्ण हैं। अतः 'वीरि आणि' पाठ में स्वीकृत है। क्षैप्र सन्धि ( यण् ) होने पर उदात्त 'रि' तथा अनुदात्त 'आ' के संयुक्त होने से सम्भवतः यहाँ सामान्य स्वरित था। देखिए : 'शूर वीर विक्रान्तौ' 'ण्यन्तादचो यदि' ति यत् ( पा० ३।१।९७ ) 'णेरनिटीति' (पा० ६।४।५१) णिलोपः 'तित् स्वरितम्' इति ( पा० ६।१।१८५ ) स्वरितत्वम्। 'यतोऽनावः' ( पा० ६।१।२१३ ) इत्याद्युदात्तत्वं न भवति। आद्युदात्तत्वे हि सुशब्देन बहुव्रीहौ आद्युदात्तत्वं 'द्व्यच्छन्दसि' (पा० ६।२।१२०) इति पुनस्तद् विधानमनर्थकं स्यात्। अतोऽवगम्यते 'यतोऽनाव' (६।१।२१३) इत्याद्युदात्तत्वं वीर्यशब्देन न प्रवर्तत इति। अतः परिशेषात् 'तित् स्वरितम्' ( ६।१।१८५ ) इति प्रत्ययस्य स्वरितत्वमेव—सायणः, ऋ० सं० १।३२।१।

३. प्र वोचम्—वच् + लुङ्, उत्तमपुरुष, एकवचन। अड् आगम का लोप हो गया है। मैकदोनेल के अनुसार 'वच्' धातु का मूल रूप 'वोच्' है, जो सम्भवतः द्वित्वजन्य परिणत रूप है। भाषा ने मूल तत्त्व का विस्मरण कर इस धातु के अनेक द्वित्व-रूपों को प्रस्तुत किया है। 'वोच्' रूप वैदिक भाषा में धातु बनकर

---

**इति हेरनुवृत्तौ 'छन्दसि शायजपि' ( पा० ३।१।८४ ) इति यद्यपि हौ परे श्नाप्रत्ययस्य शायजादेशोऽविहितस्तथाप्यत्र 'व्यत्ययो बहुलम्' ( पा० ३।१।८५ ) इति लङ्यपि श्नः शायजादेशे। अस्कभायत् इति रूपम्। कीदृशो विष्णुः। त्रेधा विचक्रमाणस्त्रिषु लोकेष्वग्निवायुसूर्यरूपेण पदत्रयं निदधानः। विपूर्वस्य क्रमतेः। 'लिटः कानज्वा' ( पा० ३।२।१०६ ) इति कानचि रूपम्। तथा उरुगायः। उरुर्गायो गमनं यस्य। उरुभिर्महात्मभिर्गीयते इति वा। हे स्थूणे काष्ठविष्णवे हविर्धानशकटाभिमानिविष्णुप्रीत्यर्थं त्वा निहन्मि निखनामीतिशेषः—( महीधरः ) ॥**

अनेक प्रकारों में व्यवहृत दृष्टिगत होता है। इसके अतिरिक्त वोचा, वोचाति, वोचावहै, वोचे, वोचतु आदि रूप उपलब्ध होते हैं। आधुनिक प्रक्रिया के अनुसार यह निश्चयद्योतक लुङ् ( इंजंक्टिव मूड ) का रूप है। ऋग्वेद में इसका बहुल प्रयोग है। इसके रूपों को लेट् लकार ( सब्जंक्टिव मूड ) से अलग करना सरल नहीं है। गमत् लुङ् तथा लेट् दोनों हो सकता है। उत्तम पुरुष में इसका प्रयोग इच्छा-अभिव्यक्ति के निमित्त होता है। जैसे यहाँ— प्रवोचम्—में। देखिए, ह्विटनी, परिच्छेद ८४७ और ८५४। तुलनीय—इन्द्रस्य नु वीर्याणि प्रवोचम्, ऋ० सं० १।३२।१ × दे० 'सायण: 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३।१।५२) इति च्लेरङादेशः। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६।४।७५) इत्यडभावः। तु० लैटिन vocare, v^ox, voi। प्रधान वाक्य की क्रिया से उपसर्ग अलग लिखे जाते हैं। 'वोचम्' प्रधान वाक्य की क्रिया होने से उदात्तरहित है।

८. पार्थिवानि—पृथिव्या इमानि, पृथिवी + अण्। सायण के अनुसार ३ अर्थ हैं, ( १ ) पृथिवी, अन्तरिक्ष एवं द्युलोक के अभिमानी देवता—अग्नि, वायु तथा सूर्य, (२) पृथिवी, अन्तरिक्ष तथा द्युलोक, (३) पृथ्वी के नीचे स्थित सात लोक। उव्वट तथा महीधर के मत से पृथिवी आदि तीन लोक। महीधर ने वैकल्पिक अर्थ 'पार्थिव परमाणु' किया है। मैकदोनेल 'पृथिवी तथा तत्संसक्त वायुलोक' अर्थ करते हैं।

९. विममे—वि + माङ् + लिट् प्रथम पुरुष एकवचन। सायण, उव्वट, महीधर इसका अर्थ 'निर्माण करना' स्वीकारते हैं। मैकदोनेल आदि आधुनिक विद्वान् 'माङ्' धातु का यहाँ 'नापना' अर्थ मानते हैं। मैकदोनेल के मत में इसका संकेत सूर्य के ब्रह्माण्ड-परिभ्रमण की ओर है, यथा वरुण के सम्बन्ध में—'मानेनेव तस्थिवाँ अन्तरिक्षे वि यो ममे पृथिवीं सूर्येण' (ऋ० सं० ५।८५।५) जो ( वरुण ) अन्तरिक्ष में अवस्थित होकर मानदण्ड के सदृश सूर्य द्वारा पृथ्वी को नाप लेते हैं। तुलनीय—यः पार्थिवानि विममे....रजांसि देवः सविता महित्वना ( ऋ० सं० ५।८१।३ )। पीटर्सन के विचार से इसी सूक्त के 'वि ममे त्रिभिरित् पदेभिः' में कथित वक्तव्य के अनुसार विष्णु के तीन पदों से 'सधस्थ' का निर्माण सम्भव नहीं है। तु०—सायण ३।२६.२७ रजसो विमानः = अन्त०

रिक्षस्याधिष्ठाता । शतपथ ब्राह्मण ६।३।१।१८ में विवेच्यप्रसंगसम्बद्ध कथन है— यद्वै किंचास्या तत् पार्थिवं तदेष सर्वं विमिमीते रश्मिभिर्ह्येनदभ्यवतनोति । इससे भी उपर्युक्त अर्थ को सन्तोष मिलता है।

६. यो अस्कभायत्—स्कम + लङ् + प्र० पु०, ए० व० । अनुवर्ती संस्कृत में पदान्त ए, ओ के उत्तरस्थ अ को होनेवाला पूर्वरूप प्रायः वैदिक संस्कृत में नहीं उपलब्ध होता। ध्यातव्य है कि लिखित तथा व्यवहृत वेद-साहित्य के मध्य इस सम्बन्ध में एकरूपता नहीं है। अथर्ववेद में प्रायः एक तिहाई स्थलों में लिखते समय अ का परित्याग कर दिया गया है और पाठ के समय प्रायः पाँचवें भाग तक अ का उच्चारण नहीं किया जाता। विद्वानों के अनुसार जिन मन्त्रों में पूर्वरूप का प्रयोग है वे अर्वाचीन हैं तथा जिनमें पूर्वरूप योजित नहीं हुआ है वे प्राचीन हैं। आकाश के स्थिरीकरण का गुण सविता, अग्नि एवं अन्य देवताओं में भी परिलक्षित होता है। उपवाक्य की क्रिया होने से इसमें उदात्त है। लङ् में आगम ( अट् ) में उदात्तस्वर होता है।

७. सधस्थम्—सह देवाः तिष्ठन्ति यस्मिंस्तत्—सह + स्था । सधमादस्थयोश्छन्दसि । वेद में 'सह' के उत्तर 'स्थ' रहने पर 'सह' के स्थान पर 'सध' हो जाता है। मैकडोनेल के अनुसार इसका अर्थ द्युलोक है। सायण के विचार से इसका अर्थ अतिविस्तृत अन्तरिक्ष, पुण्यशील जनों के साथ रहने योग्य भू आदि सातलोक तथा सत्यलोक है। शतपथ ( ८।६।३।२३., ९।२।३।३५ ) के अनुसार द्यौस् है।

८. उरुगायः—उरु + गै + अच् । सायण—बहुस्तुत, प्रचुरकीर्ति । मैकडोनेल—विस्तृत पाद वाला। पीटर्सन—दूरंगम। एक अन्य स्थान पर सायण ने उपर्युक्त अर्थों के साथ शत्रुओं को रुलाने वाला एवं बहुत से देशों में गमन करनेवाला अर्थ भी किया है :—उरुगाय उरुभिर्बहुभिर्गातव्यः । यद्वा बहुषु देशेषु गन्ता। बहुकीर्तिर्वा। सर्वाञ्छत्रून् स्वसामर्थ्येन शब्दयस्याक्रन्दयतीति वोरुगायः—ऋ० सं० ८।२९।७। स्मर्तव्य है कि इस प्रसङ्ग में भी यह विरुद विष्णु का ही है—विचक्रम इति पदलिङ्गाद् विष्णुरुच्यते, सा० वही। विष्णु के 'त्रिविक्रम' की ऋग्वेद में लगभग १२ स्थानों पर चर्चा है। गेल्डनर के अनुसार यहाँ अर्थ होगा, तीन स्थानों में पद रख कर विस्तृत

गमन करता हुआ, (उद्धृत, खोंदा इपीथेट्स इन दि ऋग्वेद, पृ०, १०५)। तु०—विष्णुरुरुगायो नमस्यः, ऋ० २।१।३, दे० ६।८६।१० प०, ४।३।७; ७।१००।१, ८।७७।१ आदि। विष्णु को 'उरुक्रम' भी कहा गया है, शंनो विष्णुरुरुक्रमः, १।९०।९; दे० ५।८७।४; इसी सूक्त का ५वाँ मन्त्र ॥ १ ॥

**प्र तद्विष्णुः स्तवते वीर्येण**
**मृगो न भीमः कुचरो गिरिष्ठाः ।**
**यस्योरुषु त्रिषु विक्रमणे-**
**ष्वधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥**

### पदपाठः

प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः । यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियन्ति । भुवनानि । विश्वा ॥ २ ॥

### सायणभाष्यम् २

तृतीयसवने सोमातिरेक एक शस्त्रमुपनितव्यम्। तत्र 'प्र तत्' इत्ययमनुरूपस्तृचः। 'सोमातिरेके' इति खण्डे सूत्रितम्—"प्र तद् विष्णुः स्तवते वीर्येण स्तोत्रियानुरूपौ" (आश्व० श्रौ० ६।७) इति। 'वाजपेयेनाधिपत्यकामः' इति खण्डे सूत्रितम्—"प्र यत्ते अद्य शिपिविष्ट नाम (ऋ० ७।१००।५) प्र तद् विष्णुः स्तवते वीर्येण" (आश्व० श्रौ० ९।९) इति ॥

यस्येति वक्ष्यमाणत्वात् स इत्यवगम्यते। स महानुभावो वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते स्तूयते सर्वैः। कर्मणि व्यत्ययेन शप्। वीर्येण स्तूयमानत्वे दृष्टान्तः। मृगो न सिंहादिरिव। यथा स्वविरोधिनो मृगयिता सिंहो भीमो भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगन्ता व गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते। अस्मिन्नर्थे निरुक्तम्—"मृगो न भीमः कुचरो गिरिष्ठाः। मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद् भीष्मोऽप्येतस्मादेव। कुचर इति चरति कर्म कुत्सितमथ चेद्

देवताभिधानं कार्यं न चरतीति वा। गिरिष्ठा गिरिस्थायी गिरिः "पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा" (निरु० १।२०) इति। तद्वदयमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्युपादानभूतः। परमेश्वराद् भीतिः "भीषास्माद् वातः पवते" (तै० आ० ८।८।१) इत्यादिश्रुतिषु प्रसिद्धा। किञ्च कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये सञ्चारी वा तथा गिरिवदुच्छ्रितलोकस्थायी। यद्वा। गिरि मन्त्रादिरूपायां वाचि सर्वदा वर्तमानः। ईदृशोऽयं स्वमहिम्ना स्तूयते। किञ्च यस्य विष्णोरुरुषु विस्तीर्णेषु त्रिसङ्ख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातान्यधिक्षियन्त्याश्रित्य निवसन्ति स विष्णुः स्तूयते।

## हिन्दीभाषान्तर

भयंकर, विषम स्थानों में विचरण करनेवाले (और) पर्वतवासी मृग सदृश भयानक, सर्वत्र विचरिष्णु पर्वतसमान उन्नत स्थान पर या वेदवाणी-स्थित वह विष्णु, (अपने) वीर कर्म के कारण स्तुत किया जाता है, जिसके तीन विशाल पदक्रमों में निखिल भुवन निवास करते हैं।

## टिप्पणियाँ[१]

१. तत्—"व्यत्ययो बहुलम्" पर आधृत हो यहाँ पुँल्लिङ्ग के स्थान पर नपुंसक मे प्रयोग किया गया है। रॉथ ने 'साइवेनजिग लाइडर' में इसे वीर्येण का विशेषण माना है। उनके मत में यह तृतीयान्त पद है। यह स्वीकारने पर अर्थ होता है—'इस वीर-कर्म के लिए विष्णु प्रशंसित होता है'। इस मन्त्र पर टिप्पणी करते हुए रॉथ का कथन है कि प्राचीन ऋचाएँ विष्णु के एक ही वीर-कर्म से परिचित हैं—वह तीन पदों से ब्रह्माण्ड का क्रमण, द्युलोक का स्थिरीकरण तथा उसके तृतीयपद में निखिल प्राणि-समूह के निवास हेतु

[१] (शु० य० सं० ५।२०)...उत्तरोऽर्धर्चः प्रथमं व्याख्यायते यद्-वृत्तयोगात्। यस्य विष्णोरुरुषु महत्सु विक्रमणेषु लोकेष्वधिक्षियन्त्युपरि निवसन्ति भुवनानि भूतजातानि विश्वा विश्वानि सर्वाणि। इदानीं प्रथमोऽर्धर्चः। प्र तद् विष्णु स्तवते स विष्णुः स्तूयते। यकः स्थाने शप् छान्दसः। वीर्येण वीरकर्मणा। कथं स्तूयते?—मृगो न भीमः। यथा मृगः सिंहः स्तूयते।

विशाल स्थान की स्थिति का धारण करना है (ऋ० ६।६९।५)। वह स्वयं वहाँ रहता है, जहाँ उसने ऊर्ध्वतम पद को स्थापित किया था। उसके साथ उस उच्चतम लोक मे पुण्यपूत आत्माएँ निवास करती हैं (सा० ला०, पृ० ५४, उद्धृत, पीटर्सन, प्रथम संग्रह) सेट पीटर्सबर्ग कोश में रॉथ-प्रस्तुत प्रसंग के प्र + स्तु, के प्रथम अर्थ के रूप मे बिना किसी टिप्पणी के उद्धृत करते हैं। ग्रॉसमान अपने कोश मे इसे स्तवते का कर्म मानकर—'इस वीर कर्म को करना स्वीकारता है'— अर्थ करते हैं। ग्रॉसमान के अनुसार वीर्य का अर्थ सामर्थ्य है। लुडविग—'अपनी बल-शक्ति के कारण विष्णु प्रशंसित होता है'—अर्थ मानते हैं। मैकदोनेल इसे प्रथम मन्त्र मे प्रयुक्त 'वीर्याणि' का निर्देशक स्वीकारते हैं। पीटर्सन वीर्येण को क्रियाविशेषण तथा स्तवते को कर्तृवाच्य स्वीकार अर्थ करते हैं—'विष्णु प्रशंसा करता है और इसका उद्घोषपूर्वक विकत्थन करता है'।

२. मृगो न भीमः—मैकदोनेल का अभिमत है कि सायण के अनुसार यद्यपि मृग का अर्थ सिंह है और भीम विशेषण सिंह एवं वृषभ दोनो के लिए प्रयुक्त हुआ है तथापि गिरिष्ठा वृषभ के विशेषण के रूप में तीन-चार बार प्रयुक्त हुआ है, जब कि सिंह के विशेषण के रूप में कभी नही आया है। अग्रिम मन्त्र में विष्णु को 'गिरिक्षित् वृषभ' कहा गया है, अतएव यह उपमा सिंह की अपेक्षा वृषभ की ओर संकेत करती है।

पीटर्सन का कथन है कि सामान्यतः यह उपमा विष्णु के लिए प्रयोज्य नहीं स्वीकारी जा सकती। यहाँ द्युलोक के शिखर पर पादक्षेप करनेवाले तथा स्व-वीर्य के उद्घोषक विष्णु के साथ इस उपमा का प्रयोग हुआ है। वह पर्वतों पर परिभ्रमण करनेवाले सिंह के समान भयानक गर्जना करता है। तु०—१०।१८०।२ मे पूरी पंक्ति समरोद्यत इन्द्र के वर्णन में दृष्टिगत होती है। सायण ने वहाँ लिखा है :—कुचरः कुत्सितचरणः गिरिष्ठः पर्वतनिवासी मृगो न हिंस इव हे इन्द्र त्वं भीमो भयंकरोऽसि। मान्त शब्दो का 'म' उदात्तस्वर-युक्त होता है—अतः 'भीम' का 'म' उदात्त है।

मृग शब्द का प्राचीनतम अर्थ हिंसक या आरण्यक पशु है। संस्कृत के मृगेन्द्र, मृगया शब्द इसकी पुष्टि करते हैं। तु० पीटर्सन, पृ० १५३-१५४, (पीटर्सन, इसमे अनुवर्ती नृसिंहावतार का संकेत देखते हैं)

सायण का सिंह अर्थ स्वीकार्य नहीं हो सकता। जिस समय इस मन्त्र की रचना हुई थी, उस समय तक आर्य सिंहों के प्रदेश में नहीं पहुँच पाये थे। प० चट्टोपाध्याय के मत से यह हिंसक पशु व्याघ्र हो सकता है।

३. कुचरः—यह शब्द ऋग्वेद में केवल दो स्थानों पर आया है, यहाँ और १०।१८०।२ मन्त्र में। दूसरे स्थान पर इसका प्रयोग इन्द्र के विशेषण के रूप में हुआ है। यास्क इसके दो अर्थ प्रस्तुत करते हैं—( १ ) कुत्सित कर्म करनेवाला और ( २ ) यह कहाँ नहीं विचरता ( कु अथवा क्व + चर् + ट् )। सायण में इन अर्थों के अतिरिक्त 'तीनों लोकों में भ्रमण करनेवाला' भी मिलता है ( कु = पृथिवी )। मैकडोनेल के मत से सम्भवतः कु स्वतन्त्र पद नहीं है, अन्यथा वह अवगृहीत होता।

४. गिरिष्ठाः—सायण के अनुसार इस शब्द के दो अर्थ हैं—( १ ) उन्नत लोकों में निवास करने वाला, ( २ ) मन्त्ररूप वाणी में स्थित। उव्वट तथा महीधर ने भी इस अर्थ का अनुगमन है।

५. विश्वा—वैदिक भाषा में अनेकशः नपुंसकलिङ्ग की प्रथमा और द्वितीया के ब० व० में 'नि' ( इ ) का लोप हो जाता है। संस्कृत में इसका रूप होगा—विश्वानि।

ध्यातव्य है कि उव्वट सिंह को हीन उपमान मान कर 'मृगो न' आदि का अन्यथा व्याख्यान करते हैं। इन सब पदों से इन्द्र का विशेषण मानकर उसे विष्णु का उपमान बनाया गया है ( दे० उ० भा० ) ॥ २ ॥

**प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे।**
**य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभिः ॥ ३ ॥**

## पदपाठः

प्र। विष्णवे। शूषम्। एतु। मन्म। गिरिऽक्षिते। उरुऽगायाय। वृष्णे। यः। इदम्। दीर्घम्। प्रऽयतम्। सधऽस्थम्। एकः। विऽममे। त्रिऽभिः। इत्। पदेभिः ॥ ३ ॥

## सायणभाष्यम् ३

विष्णवे सर्वव्यापकाय शूषमस्मत्कृत्यादिजन्यं बलं महत्त्वं मन्म मननं स्तोत्र मननीयं शूषं बलं वा विष्णुमेतु। प्राप्नोतु। कर्मणः सम्प्रदानत्वाच्चतुर्थी। कीदृशाय। गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते। उरुगायाय बहुभिर्गीयमानाय। वृष्णे वर्षित्रे कामानाम्। एवम् महानुभावं शूषं प्राप्नोतु। कोऽस्य विशेष इत्युच्यते। यो विष्णुरिदं प्रसिद्ध दृश्यमानं दीर्घमतिविस्तृतं प्रयतं नियतं सधस्थ सहस्थानं लोकत्रयमेक इदेक एवाद्वितीयः सन् त्रिभिः पदेभिः पादैर्विममे विशेषेण निर्मितवान्।

## हिन्दीभाषान्तर

पर्वतवासी, विशाल गतिशील तथा बली विष्णु के निमित्त भलीभाँति उच्चारित स्तोत्र पहुँचे। अकेले ही जिस (देव) ने इस लम्बे-चौडे सहनिवासस्थान को तीन पदो से नाप लिया है।

## टिप्पणियाँ

१. शूषम्—श्वस् + अच्। छन्दोभंग के निवारणार्थ 'शुऊषम्' पठितव्य है। रॉथ इसे श्वस् से व्युत्पन्न स्वीकार विशेषण मानते हैं। प्रमाण रूप में चार ऋचाओं को भी उद्धृत करते हैं, अध प्रियं शूषमिन्द्राय मन्म***अवाचि; १०।९४।६ (सायण—अध संप्रति तस्मा इन्द्राय प्रियं प्रीतिजनकं शूषं बलं शत्रूणा शोषकत्वाद् बलकरं मन्म मननीयं स्तोत्रम्); शूषेभिर्वृधो जुषाणो अर्कैः, १०।६।४ (सायण—वृधो वर्धितोऽग्निः शूषेभिर्हविर्लक्षणबलैः। बलनिमित्तैर्हविभिरित्यर्थः। अर्कैः स्तोत्रैश्च जुषाणः सेव्यमानः सन्), पीटर्सन के अनुसार 'शूषेभिः' का विशेषण होना संदिग्ध है। उतो पितृभ्यां प्रविदानु घोषं महो महद्भ्यामनयन्त शूषम्, ३।७।६ (सायण—उतो अपि च महो महतो महद्भ्या पितृभ्या द्यावापृथिवीभ्या प्रविदा प्रवेदनेन अनुघोषमनुघुष्यमाणं शूषं सुखम्। शूषं शुनमिति सुखनामसु पाठात्। तत् सुखं यजमाना अग्निमनयन्त अग्निं प्रापितवन्तः)। स्तोमं यमस्मै ममतेव शूषम्, ६।१०।२ (सायण—ये स्तोम स्तोत्रं शूषं सुखकरम्)। इन पर आधृत हो रॉथ अर्थ करते हैं—घन घन शब्द करना; बुदबुदाना, सीटी बजाना, गायन, शब्द करना, टनटनाना, ठनठनाना, झनझनाना,

झन-झन शब्द करना। अन्य दो स्थानों पर; रॉथ के मत से, 'शूष' विशेषण के रूप में खर्राटे लेने, फुफकारने, फुनफुनाने. नाक फुलाकर फुनफुनाते हुए बोलने तथा आत्मवान्, सप्राण, जीवन्त, वीर्यवान्, तेजस्वी, ससत्त्व, सोत्साह, उत्कट, जीवटवाले, जानदार, दिलेर आदि के अर्थ मे प्रयुक्त हुआ है। इनतमः सत्वभिर्यो ह शूषै पृथुज्रया अमिनादायुर्दस्योः, ३।४९।२ ( सायण–स इन्द्र इनतमोऽतिशयेन सेनास्वामी सत्त्वभिः परितः सीदद्भिर्मरुद्भिः सह यो यान् गच्छन् शूषैः। शोषयन्ति परबलानीति शूषाणि बलानि )। प्र क्षद्धि हेव शूष एति रोरुवत्, १।७१।२, ( सायण—शूषः शत्रूणां शोषको बलवान्। निघण्टु २।९ में बलवाचक शब्दों मे शूष का उल्लेख है। ३।६ सुखार्थक शब्दसमूह मे भी यह उपलब्ध है। सायण इसका अनुसरण करते हैं। लुडविग के अनुसार इस पंक्ति का अर्थ—"विष्णु के निकट उसकी 'शक्ति के निमित्त' स्तोत्र पहुँचे"। वस्तुतः यहाँ 'शूष' 'मन्म' का विशेषण है। स्तोत्र के उच्चारण के महत्त्व की युक्तिशालिता से वैदिक अध्येता अपरिचित नही है; अतः इस प्रसङ्ग मे अर्थ होगा 'भलीभाँति उच्चारण किया गया'—तु०, 'दुष्टः शब्दः स्वरतो वा मिथ्याप्रयुक्तो न तमर्थमाह'। मैकदोनेल के मत से इसका अर्थ 'उत्साहप्रद' है। अवेस्ता में इसके समान 'हुस्क' शब्द मिलता है।

२. उरुगायाय—मैकदोनेल के अनुसार 'मृगो न भीमः कुचरो गिरिष्ठाः' के साथ 'गिरिक्षित उरुगायाय' का साम्य है—गिरिक्षित् = गिरिष्ठाः, उरुगायः = कुचरः, वृषन् = मृगो भीमः। विष्णु का अन्यत्र 'उरुक्रम'—निरुक्त, महागति, विशेषण मिलता है अतएव उरु + गा ( जाना ) से इस शब्द की निष्पत्ति होगी तथा अर्थ होगा 'लम्बे डग भरनेवाला'।

३. वृष्णे—वृष् + न्। मैक्समूलर ( वैदिक हिम्स, भा० १, पृ० १३८-१५३ ) वृषन् शब्द का युक्तियुक्त अर्थ करना असम्भव-सा है। वेदमन्त्रों में इसका अनेकशः प्रयोग उपलब्ध होता है। यदि एक बार उन सब विचारधाराओं को जान लिया जाय तो कदाचित् इसके अर्थ का एक अस्पष्ट चित्र उपस्थित हो सके। वृषन् शब्द वृष—वीर्यसेचन करने से निष्पन्न हुआ है। इसका मूल अर्थ नर था। इसका प्रयोग प्रधानता, श्रेष्ठता, विशिष्टता, प्रतिष्ठा, शक्ति के द्योतक रूप में हुआ है। ध्यातव्य है कि प्रायः इसका प्रयोग मानव

के काम चरित्र के ख्यापनार्थ मिलता है। स्थित्यन्तर में इसका अर्थ उर्वर, बली तथा अमोघवीर्य हो गया। वीर, बली अर्थ में विशेषण होकर तथा देवताओं के नाम और प्रशंसावाचक रूप में भी इसका प्रयोग किया गया है।

सायण ने इसका अर्थ 'कामनावर्षी' किया है। प्रस्तुत प्रसंग में बली अर्थ अधिक युक्तिसंगत प्रतीत होता है। विष्णु के वीर-कर्म-प्रशंसन के वर्णनपरिप्रेक्ष्य में अन्य अर्थ की कल्पना विभ्रान्त मानी जायगी॥ ३॥

यस्य॒ त्री पू॒र्णा मधु॑ना प॒दा-
न्यक्षी॑यमाणा स्व॒धया॒ मद॑न्ति।
य उ॑ त्रि॒धातु॑ पृथि॒वीमु॒त द्या-
मेको॑ दा॒धार॒ भुव॑नानि॒ विश्वा॑॥ ४॥

### पदपाठः

यस्य॑। त्री। पू॒र्णा। मधु॑ना। प॒दानि॑। अक्षी॑यमाणा। स्व॒धया॑। मद॑न्ति। यः। ऊँ इति॑। त्रि॒ऽधातु॑। पृ॒थि॒वीम्। उ॒त। द्याम्। एकः॑। दा॒धार॑। भुव॑नानि। विश्वा॑॥ ४॥

### सायणभाष्यम् ४

यस्य विष्णोर्मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्रीणि पदानि पादप्रक्षेपणान्यक्षीयमाणाक्षीयमाणानि स्वधयान्नेन मदन्ति मादयन्ति तदाश्रितजनान्। य उ य एव पृथिवीं प्रख्याता भूमिं द्यामुत द्योतनात्मकमन्तरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दशलोकांश्च। यद्वा। पृथिवीशब्देनाधोवर्तीन्यतलवितलादिसप्तभुवनान्युपात्तानि। द्युशब्देन तदवान्तररूपाणि भूरादिसप्तभुवनानि। एवं चतुर्दशलोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि। त्रिधातु। त्रयाणां धातूनां समाहारस्त्रिधातु। पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार धृतवान्। तुजादित्वादभ्यासस्य दीर्घत्वम्। उत्पादितवानित्यर्थः। छन्दोगारण्यके—"तत् तेजोऽसृज्यत तदन्नमसृजत ता आप ऐक्षन्त" इति भूतत्रयसृष्टिमुक्त्वा "हन्ताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणि"

( छा० उ० ६।२।३–४ ) इत्यादिना त्रिवृत्करणसृष्टिरुपपादिता । यद्वा । त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः ॥

## हिन्दीभाषान्तर

जिस ( विष्णु ) के मधु भरे तीन पद, क्षीण न होते हुए, स्वतन्त्रतापूर्वक मदयुक्त बनाते हैं। अकेले ही जिस ( देव ) ने पृथिवी, द्युलोक तथा सकल भुवनों को तीन प्रकार से धारण किया है।

## टिप्पणियाँ

१. अक्षीयमाणा—अ + क्षी + शानच् अक्षीयमाणनि के लिए प्रयुक्त हुआ है। छन्दोगति की दृष्टि से 'पदानि अक्षीयमाणा' पठितव्य है। यह कर्मधारय समास है। इसमें नञ् का 'अ' सर्वदा उदात्त होता है। इस प्रकार के समास पदपाठ में अवगृहीत नहीं होते ( दे० मैकदोनेल, रीडर, पृ० ३४, ग्रामरः पृ० ४५६)।

२. स्वधा—लौकिक संस्कृत में 'स्वधा' शब्द का उच्चारण पितरों को कव्य देते समय मन्त्र के अन्त में होता है, जिस प्रकार देवताओं को हव्य या आहुतिदान के समय मन्त्रान्त में 'स्वाहा' का प्रयोग किया जाता है। इसका प्रयोग माया के मानवीकृत नाम या सासारिक भ्रम तथा एक अप्सरा के अभिधान में भी हुआ है। जब पाश्चात्य सुधी-जगत् वैदिक स्वधा शब्द से अपरिचित था तभी १८४२ ई० में प्रो० बैनफी ने ग्रीक सेथोस्, जर्मन सित्ते, ओल्ड हाई जर्मन सित्-उ, गॉथिक सिद्-उ शब्दों पर आधृत हो स्वधा शब्द की कल्पना कर ली थी। मैक्समूलर के अनुसार इसका अर्थ पहले 'अपना स्थान' था, तदनन्तर 'स्वभाव' हो गया। मैक्समूलर—'स्वधया मदन्ति' का अर्थ 'अन्न से आनन्दित होते हैं, प्रसन्नता का अनुभव करते हैं' करते हैं।

रॉथ का मत है कि भारत वैदिक स्वधा शब्द का अर्थ पूर्णतया विस्मृत कर चुका है। उनके मत में इस शब्द का प्रथम अर्थ है–रीति-रिवाज, विधि, नियम, व्यवस्था। वे इस अर्थ की सिद्धि के निमित्त वक्ष्यमाण मन्त्रांशों को उद्धृत करते हैं।

अनु स्वधामृभवो जग्मुरेताम्, ऋ० ४।३३।६।

( सायण—अनु चतुर्धाकरणानन्तरमेतां तृतीयसवनगतां स्वधां सोमाख्यममृतमृभवो जग्मुः। मैक्समूलकर–इस प्रसङ्ग में 'स्वभाव, प्रकृति' अर्थ करते हैं)।

उषो अनु स्वधामव, ऋ० ४।५२।६

( सायण—अनु पश्चात् स्वधा हविर्लक्षणमन्नमव रक्ष )।

कया याति स्वधया, ऋ० ४।१३।५

( सायण—कया स्वधया केन बलेन याति गच्छति स्वधाशब्दोऽन्नवाच्यत्र तत्कार्यं बलं लक्षयति )।

ऋ० ९।१०३।५; ६।२।८; ८।३२।६; ९।८६।१०; १०।१२९।५ में प्रयुक्त स्वधा शब्द का रॉथ परिचित स्थान, गृह अर्थ करते हैं।

वक्ष्यमाण तीन स्थलों को प्रस्तुत करते हुए रॉथ तृतीय अर्थ—सामान्य अवस्था, कल्याण, हित, सन्तोष—मानते हैं।

कया नो अग्ने वि वसः सुवृक्तिं कामु स्वधामृणवः शस्यमानः, ऋ० ७।८।३।

( सायण—हे अग्ने त्वं कया स्वधया हविषा नोऽस्माकं सुवृक्तिं स्तुतिं वि वसः व्याप्नुषे आच्छादयसि वा। कामु का च स्वधा शस्यमानः स्तूयमानस्त्वमृणवः प्राप्नुयाः )।

क्व स्या वो मरुतः स्वधासीत्, ऋ० १।१६५।५

( सायण—स्या सा स्वधा तदुदकं बलं वा )।

इससे पूर्व के मन्त्र १।१६५।५ में भी सायण यही अर्थ करते हैं।

स्वधा च यत्र तृप्तिश्च, ऋ० ९।११३।१०

( सा० ला०, भा० ३, जहाँ आनन्द तथा पूर्णता है; सायण—स्वधान्नं स्वधाकारेण वा दत्तमन्नम् )।

रॉथ वेद मे स्वधा की प्रयोगप्रायता को द्रष्टव्य बताते हुए ऋ० १।६।४; १।३३।११; १।१६५।५ आदि तथा प्रस्तुत मन्त्र में सामान्यतया, आनन्दपूर्वक, इच्छानुरूप, निर्विघ्न, स्वाभाविक रूप में अर्थ करते हैं।

मदन्ति के साथ स्वधा शब्द १।१०८।१२; ३।४।७; ५।३२।४; ७।४७।३; १०।१४।७ में भी आया है। रॉथ के अभिमत मे पेय, हविष्, पितृ-कव्य सम्बद्ध स्वधा इससे भिन्न है। निघण्टु १।१२ में उदक तथा निरुक्त ७।२५ में अन्नार्थ मे पठित स्वधा भी प्रस्तुत स्वधा से व्यतिरिक्त है। रॉथ का यह भी कथ्य है कि 'स्वधयाऽन्ये मदन्ति' १०।१४।३ से प्रकृत स्वधा का कोई सम्बन्ध नहीं है। पीटर्सन का मत है कि प्रकृत प्रसंग मे स्वधा क्रिया-विशेषण है और इसका अर्थ है प्रसन्नता से, स्वाधीनता से तथा उपर्युक्त १०।१४।३ में संज्ञा है,

और उसका अर्थ है— हविष् से । अब यदि रॉथ की कल्पना स्वीकारी जाय तो यह भी स्वीकर्त्तव्य होगा कि दोनों मन्त्रों के रचनाकाल के मध्य सुदीर्घ अन्तर रहा होगा ।

सायण इसका अर्थ अन्न करते हैं । स्वधा के लिए दे०, मै० मू० वै० हि०, १,३२ आदि ।

३. उ–मै०–भी । सा०–ही, यहाँ 'उ' को समुच्चयार्थक मानना चाहिए । पदपाठ में 'उ' के आगे इति लगाकर इसे सानुनासिक किया जाता है ।

४. त्रिधातु—रॉथ इसकी तुलना 'उत त्रिधातु प्रथयद् वि भूम' ४।४२।४ ऋ० से करते हैं । मै० इसे मन्त्र में आये त्रेधा के समान क्रिया विशेषण मानते हैं और अर्थ करते हैं—तीन डग भरने के कारण 'तीन प्रकार से' । पीटर्सन त्रिधातु को 'पृथिवीमुत द्याम्' का समानाधिकरण स्वीकारते हैं और सबका एक ही अर्थ करते हैं । सायण भी इसे क्रियाविशेषण मान 'पृथ्वी, जल, वायु—तीनों से विशिष्ट' अर्थ करते है, तदनन्तर त्रिकाल एवं त्रिगुण का विकल्प भी प्रस्तुत करते हैं । इस अर्थ की सगति के लिए दे०—तै० स० ब्रा० २।४।१२ ।

५. दाधार–धृञ् + लिट् + प्र० पु०, ए० व० । ह्विटनी के अनुसार ( अनुच्छेद ७८६ ) प्रायः धातु के द्वित्व रूप में प्रथम अक्षर को दीर्घ हो जाता है । दाधार रूप ब्राह्मण एवं अनुवर्ती ग्रन्थो में भी उपलब्ध होता है । पदपाठ में यह ह्रस्व भी नहीं होता ॥ ४ ॥

तद॑स्य प्रि॒यम॒भि पाथो॑ अश्यां
नरो॒ यत्र॑ देव॒यवो॒ मद॑न्ति ।
उ॒रु॒क्र॒मस्य॒ स हि बन्धु॑रि॒त्था
विष्णोः॑ प॒दे प॑र॒मे मध्व॒ उत्सः॑ ॥ ५ ॥

पदपाठः

तत् । अ॒स्य॒ । प्रि॒यम् । अ॒भि । पाथः॑ । अ॒श्या॒म् । नरः॑ । यत्र॑ । दे॒व॒ऽयवः॑ । मद॑न्ति । उ॒रु॒ऽक्र॒मस्य॑ । सः । हि । बन्धुः॑ । इ॒त्था । विष्णोः॑ । प॒दे । प॒र॒मे । मध्वः॑ । उत्सः॑ ॥ ५ ॥

## सायणभाष्यम् ५

आतिथ्यायां, तदस्य, इत्येषा प्रधानस्य याज्या। 'अथातिथ्या' इति खण्डे सूत्रितम्—'इदं विष्णुर्विचक्रमे, तदस्य प्रियमभि पाथो अश्याम्' ( आश्व० श्रौ० ४।५ ) इति।

अस्य महतो विष्णोः प्रियभूतं तत् सर्वैः सेव्यत्वेन प्रसिद्धं पाथः। अन्तरिक्षनामैतत्, "पाथोऽन्तरिक्षं पथा ( नि० २।२८ ) व्याख्यातम्" ( निरु० ६।७ ) इति यास्केनोक्तत्वात्। अविनश्वरं ब्रह्मलोकमित्यर्थः। अश्याम् व्याप्नुयाम्। तदेव विशिष्यते। यत्र स्थाने देवयवो देव द्योतनस्वभावं विष्णुमात्मन इच्छन्तो यज्ञदानादिभिः प्राप्तुमिच्छन्तो नरो मदन्ति तृप्तिमनुभवन्ति। तदश्यामित्यन्वयः। पुनरपि तदेव विशिष्यते। उरुक्रमस्यात्यधिकं सर्वं जगदाक्रममाणस्य तत् तदात्मना, अतएव विष्णोर्व्यापकस्य परमेश्वरस्य परम उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वो मधुरस्योत्सो निष्यन्दो वर्तते। तदश्याम्। यत्र क्षुत्-तृष्णा-जरा-मरण-पुनरावृत्त्यादिभयं नास्ति सङ्कल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यन्ते तादृशमित्यर्थः। ततोऽधिकं नास्तीत्याह। इत्थमुक्तप्रकारेण स हि बन्धुः स खलु सर्वेषां सुकृतिनां बन्धुभूतो हितकरो वा, तस्य पदं प्राप्तवतां न पुनरावृत्तेः। 'न च पुनरावर्तते' ( छा० उ० ९।१५ अन्ते ) इति श्रुतेस्तस्य बन्धुत्वम्। हि शब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः॥

## हिन्दीभाषान्तर

इस ( विष्णु ) के उस प्रिय स्थान को मैं प्राप्त करूँ, जहाँ देवकामी जन प्रसन्नता प्राप्त करते हैं। विशाल गतिशील विष्णु के परम पद में मधु का स्रोत है, इस प्रकार वह ( विष्णु ) ( हमारा ) हितेच्छु है।

## टिप्पणियाँ

१. उरुक्रमस्य स हि बन्धुरित्था—सायण—स हि बन्धुरित्था—इस प्रकार वह विष्णु, निश्चय ही, 'सबका बन्धु है' अर्थ कर इसे निक्षिप्त वाक्य के रूप में प्रस्तुत करते हैं। इनके अनुसार 'विष्णोः पदे परमे मध्व उत्सः' प्रधान वाक्य है। इसमें 'तद् अश्याम्' की अनुवृत्ति करते हैं।

रॉथ और उनके अनुगन्ता ग्रॉसमान उपर्युक्त दोनों वाक्यों को अलग-अलग मानते हैं। इस प्रकार वाक्य-संयोजन करने पर, 'वहाँ शक्तिशाली गन्ता के

दृंहिताः शम्बरस्य नव पुरो नवतिं च ।

इतना सब होने पर भी इन्द्र ने द्युलोक की सानु को प्रकम्पित कर उसे विनष्ट कर दिया। बृहत् पर्वत का निवासी शम्बर दस्यु एवं कौलीतर दास है।

निघण्टु (१।१०।१४) में शम्बर मेघ के अभिधान के रूप में प्रस्तुत किया गया है। इसकी अनेकधा व्युत्पत्ति की जा सकती है।

( १ ) शम् ( उपशमन करना ) + बन् ( उणा० ४।९४ ) शाम्यतीति शम्बरः—शान्त करने वाला।

( २ ) शम्बः ( वज्र। शमयति असुरानिति शम्बः ) अस्यास्ति, इति + रः, मत्वर्थीय। ( शम्ब की दूसरी व्युत्पत्ति भी है शातयति असुरान्–शो तनूकरणे + बन्, पृषोदरादि से शमादेश = शम्ब )। ( वज्र ) के लिए देखिए ऋ० १०।४२।७।

( ३ ) सम् + वृ + अप् 'ग्रहवृदृनिश्चिगमश्च' (पा० ३।३।५८)—वर्णव्यत्यय से श। सम्व्रियतेऽनेनेति।

( ४ ) शम्बर का निघण्टु ( १।१२।८८ ) में उदक् नामों में पाठ है—शम्बरमस्यास्तीति। मत्वर्थीय य का लोप। निघण्टु २।९।२८ में इसे बलवाचक कहा गया है।

( ५ ) चत्वारिंश्यां शरदि—प्रायः इसका अर्थ चालीसवें वर्ष अथवा चालीसवीं शरद् ऋतु किया जाता है। तिलक ने इसका अर्थ 'शरद् ऋतु' की चालीसवीं तिथि किया है ( आर्कटिक होम इन वेद् )। शरद्–शॄ हिंसायाम् + अद् ( उणा० १।१३० )।

( ६ ) दानुम्—दानव या दानवी। यहाँ इसका प्रयोग दानु (दानवी) के पुत्र के अर्थ में हुआ है। तुलनीयः दानुः शये सहवत्सा न धेनुः ( ऋ० १।३२।९ )। ( दानु गाय के समान अपने वत्स के साथ गिर पड़ी ) ॥ ११ ॥

यः सप्तरश्मिर्वृषभस्तुविष्मान्-
वासृजत्सर्तवे सप्त सिन्धून्।
यो रौहिणमस्फुरद् वज्रबाहुर्-
द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥

## पदपाठः

यः । सप्तऽरश्मिः । वृषभः । तुविष्मान् । अवऽअसृजत् । सर्तवे । सप्त । सिन्धून् । यः । रौहिणम् । अस्फुरत् । वज्रऽबाहुः । द्याम् । आऽरोहन्तम् । सः । जनासः । इन्द्रः ॥ १२ ॥

## सायणभाष्यम् १२

यः सप्तरश्मिः सप्तसङ्ख्याकाः पर्जन्या रश्मयो यस्य । ते च रश्मयो "वराहवः स्वतपसो विद्युन्महसो धूपयः श्वापयो गृहमेधाश्च—इत्येते ये चेमेऽशिमिविद्विषः पर्जन्याः सप्त पृथिवीमभिवर्षन्ति वृष्टिभिः" ( तै० आ० १।९।४-५ ) इति तैत्तिरीयारण्यके ह्याम्नाताः । वृषभो वर्षकस्तुविष्मान् वृद्धिमान् बलवान् या सप्त सर्पणस्वभावान् सिन्धूनपः सर्तवे सरणायावासृजद् अवसृष्टवान् । यद्वा । गङ्गाद्याः सप्त मुख्या नदीरसृजत् । यश्च वज्रबाहुः सन् द्या दिवमारोहन्तं रौहिणमस्फुरज्जघान । 'स्फुर' स्फुरणे तुदादिः ॥

## हिन्दीभाषान्तर

सात रज्जुओं से निबद्ध जिस बलवान् वृषभ ने सात धाराओं को बहने के लिए मुक्त कर दिया, जिस वज्रपाणि ने द्युलोक पर आरोहण करते हुए रोहिण-सुत ( =राहु ? ) को मार डाला, लोगो ! वह इन्द्र है ।

## टिप्पणियाँ

१. वाङ्मय, मनोमय, चक्षुर्मय, श्रोत्रमय, प्राणमय, असुमय, अन्नमय । दे०, १२ वें मन्त्र के लिए—जै० उ० ब्रा० १।९।१-२ ।

२. सप्तरश्मिः—सायण—सात रश्मियों वाला । तै० आ० में सात पर्जन्य कहे गये हैं—वराहु, स्वतपस, विद्युत् , महस् , धूपि, श्वापि तथा गृहमेधस् । मैकदोनेल के अनुसार इसका अर्थ है, सात नाथों वाला । उनके मत में इसका सम्भाव्य अर्थ—दुर्धर्ष, दुर्घट, अप्रतिहत, अव्याहत—हैं । पीटर्सन—उन सात रज्जुओं से युक्त, जो उसे नेतृत्व प्रदान करती हैं । प्रकाशित करती हैं ।

रश्मिः—अश् व्याप्तौ + मिः—धातु को रश् ( उणा० ४।४६ ) । रश्मि का अर्थ किरण एवं रज्जु—दोनों हैं ।

३. वृषभः—ऋषी गतौ + अभच्, वृषु सेचने + अभच् (उणा० ३।१२३)। सायण, वेंकटमाधव—वर्षक। मैकदोनेल के अनुसार इसका अर्थ बैल है। यह पद देवताओं के लिए, विशेषतः इन्द्र के लिए, अनेक बार प्रयोजित हुआ है। यह महती शक्ति, उर्वरता, अमोघवीर्यता का निर्देशक है। १।१५।४।३—में वृष्णे पर टिप्पणी देखिए।

४. तुविष्मान्- तुविष् + मतुप्—तु (वृध्यर्थक) + इः (उणा० ४।१३८)। सायण—वृद्धिमान्। वेंकटमाधव–बलवान्। तुवि शब्द का अर्थ है शक्तिशाली। निघण्टु (३।१।२) में तुवि का बहु-नामो में पाठ है। मैकदोनेल के अनुसार 'तु' धातु का अर्थ शक्तिशाली, बलवन्, समर्थ होना है (वै० री० पृ० २३४)। इस शब्द का प्रयोग प्रायः समास-पदो में होता है—तुविबाध्र, तुविजात, तुविद्युम्न, तुविमन्यु, तुविप्रति आदि—मैकदोनेल का कथन है कि मान्त प्रत्यय को मात्र अजन्त प्रकृति के उत्तर पर रहते ही अवगृहीत किया जाता है। यथा, गोऽमान्।

५. सर्तवे—सृ (गतौ) तुमर्थ में + तवेन्। नित्व होने से आद्युदात्त।

६. रौहिणम्—सायण—असुर। हिलब्रान्त ने इसे रोहिणी नक्षत्र का अभिधान माना है। निघण्टु (१।१०।१५) इसे मेघनामों मे परिगणित करता है। ऋ० १।१०३।२—अहन्नहिमभिनद् रौहिणम्, अ० वे०—त्वं रौहिणं व्यास्यो—मे रौहिण का उल्लेख उपलब्ध होता है। मैकदोनेल इसे 'रोहिणी' का पुत्र मानते हैं (वै० री०, पृ० २४६)।

पं० क्षेत्रेशचन्द्र चट्टोपाध्याय इसे रोहिण-सुत राहु का आदि रूप मानने के पक्ष में हैं। इसकी अनेक व्युत्पत्तियाँ की गई हैं—

(१) रुह् + घञ् (पा० ३।३।१८) = रोहः, आरोहण। रोह + इनि (पा० ५।२।११५) रोहि, अन्तरिक्ष–तत्र भवः–रोहि + अण् (पा० ४।३।५३)।

(२) रुह् + इनच्–रोहिणः, इन्द्र, तस्य–रोहिण + अ (पा० ४।३।१२०)।

(३) रुह् + इनच् (उणा० २।५५)—रोहति बीजेन जायते प्रादुर्भवति वा।

(४) अस्फुरत्–सायण–मार डाला। स्फुर् + लङ्, प्र०पु०,ए०व० ॥१२॥

द्यावा चिदस्मै पृथिवी नमेते
शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुर्
यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥

### पदपाठः

द्यावा । चित् । अस्मै । पृथिवी इति । नमेते इति । शुष्मात् । चित् । अस्य । पर्वताः । भयन्ते । यः । सोमऽपाः । निऽचितः । वज्रऽबाहुः । यः । वज्रऽहस्तः । सः । जनासः । इन्द्रः ॥ १३ ॥

### सायणभाष्यम् १३

अस्मै इन्द्राय द्यावापृथिवी । इतरेतरापेक्षया द्विवचनं "प्र मित्रयोर्वरुणयोः" ( ऋ०७।६६।१ ) इतिवत् । नमेते स्वयमेव प्रह्वीभवतः । 'णमु प्रह्वत्वे' । कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ' ( पा० ३।१।८९ ) इति यकः प्रतिषेधः । चिद् अपि च अस्येन्द्रस्य शुष्माद् बलात् पर्वता भयन्ते बिभ्यति । यः सोमपाः सोमस्य पाता निचितः सर्वैः । यद्वा । अन्येभ्योऽपि [ देवेभ्यो ] दृढाङ्गः । वज्रबाहुर्वज्रसदृश-बाहुः । यश्च वज्रहस्तो वज्रयुक्तः स इन्द्र इत्यादि प्रसिद्धम् ॥

### हिन्दीभाषान्तर

इसके प्रति द्युलोक तथा पृथिवीलोक झुक जाते हैं, इसके दम से पर्वत भी डरते हैं, जो वज्रसमान बाहुवाला सोमपायी प्रसिद्ध है ( तथा ) जो वज्रपाणि है, लोगो ! वह इन्द्र है ।

### टिप्पणियाँ

१. द्यावा...पृथिवी—देवतावाचक दो पदों के द्वन्द्व समास के पदों के मध्य में प्रायः अन्य पदों का व्यवधान भी रहता है । इस प्रकार के समासों में पदों का अपना स्वर सुरक्षित रहता है; अतएव इनमें दो उदात्त स्वरयुक्त वर्ण रहते हैं । सायण के विचार में यहाँ द्यावा एवं पृथिवी—दोनों पद

सापेक्ष हैं। यथा, 'प्रमित्रयोर्वरुणयोः' ( ऋ० ७।६६।१ ) में, अतएव दोनों द्विवचनान्त हैं ॥ १३ ॥

यः सुन्वन्तमवति यः पचन्तं
यः शंसन्तं यः शशमानमूती।
यस्य ब्रह्म वर्धनं यस्य सोमो
यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥

पदपाठः

यः। सुन्वन्तम्। अवति। यः। पचन्तम्। यः। शंसन्तम्। यः। शशमानम्। ऊती। यस्य। ब्रह्म। वर्धनम्। यस्य। सोमः। यस्य। इदम्। राधः। सः। जनासः। इन्द्रः ॥ १४ ॥

सायणभाष्यम् १४

यः सुन्वन्तं सोमाभिषवं कुर्वंतं यजमानमवति रक्षति। यश्च पुरोडाशादीनि हवींषि पचन्तं यश्च ऊती ऊतये। 'सुपां सुलुक्' (पा० ७।१।३९) इति चतुर्थ्याः पूर्वसवर्णदीर्घः। स्वरक्षार्थं शस्त्राणि शंसन्तं यश्च शशमानमवति स्तोत्रं कुर्वाणं रक्षति। ब्रह्म परिवृढं स्तोत्रं यस्य वर्धनं वृद्धिकरं भवति। तथा यस्य सोमो वृद्धिहेतुर्भवति। यस्य चेदमस्मदीयं राधः पुरोडाशादिलक्षणमन्नं वृद्धिकरं भवति। स इन्द्र इत्यादि प्रसिद्धम् ॥

हिन्दीभाषान्तर

जो सोम निचोड़ते हुए ( यजमान ) को, जो पकाते हुए ( यजमान ) को, जो शस्त्र उच्चारण करते हुए ( यजमान ) को ( तथा ) जो स्तोत्र पाठ करते हुए ( यजमान ) को सहायता के द्वारा बचाता है। मन्त्र जिसकी वृद्धि करता है, ( सोम जिसकी वृद्धि करता है ) (और) वह धन जिसकी (वृद्धि करता है ), लोगो! वह इन्द्र है।

## टिप्पणियाँ

१. शंसन्तम्—शस + शतृ, द्वि०, ए० व० । सायण—शस्त्रपाठ करते हुए। मैकदोनेल—देवताओं की प्रशंसा करने वाला। पीटर्सन—गायक, स्तोता। शस्त्रपाठ में मन्त्रो का गान नहीं किया जाता। मन्त्रों का इसमें बिना रुके हुए पाठ करना पड़ता है। इन मन्त्रों में देवता के गुण का कथन रहता है। तुलनीयः अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्।

२. शशमानम्—शश् या शम् = शानच्, द्वि०, ए० व०। सायण—स्तोत्रगान करने वाला। 'प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्'। मैकदोनेल—यज्ञनिष्पादक। शम् धातु का मूल अर्थ—कार्य करना, श्रम करना, कर्मठ होना था। अनुवर्ती अर्थ-श्रान्त होना, विश्राम करना—इसी के विकसित रूप हैं। तुलनीय—ग्रीक, कमूनो, के अर्थ का विकास। इतर अर्थों के साथ—देवताओं की सेवा में रत रहना, श्रद्धालु हो प्रार्थना करना—अर्थ का निर्देशक है (पीटर्सन, भा० १, पृ० १२६)। निघण्टु (६।८) में 'प्रशंसा करते हुए' अर्थ किया गया है एवं ३।१४।२२ में अर्चा करते हुए।

३. राधः—राध् (सिद्ध करना, प्रसन्न करना) से यह शब्द निष्पन्न हुआ है। सायण—पुरोडाशादि अन्न। मैकदोनेल—उपहार। तुलनीय: अवेस्ता, रादस; दाता राधः स्तुवते काम्यं वसु—ऋ० २।२२।३, तव राधः सोमपीथाय हर्षते-२।२१।७, मादयस्व सुते सचा शवसे शूर राधसे-१।८१।८ आदि ॥ १४ ॥

यः सुन्वते पचते दुध्र आ चिद्
वाजं दर्दर्षि स किलासि सत्यः।
वयं त इन्द्र विश्वह प्रियासः
सुवीरासो विदथमा वदेम ॥ १५ ॥

### पदपाठः

यः। सुन्वते। पचते। दुध्रः। आ। चित्। वाजम्। दर्दर्षि। सः। किल। असि। सत्यः। वयम्। ते। इन्द्र। विश्वह। प्रियासः। सुवीरासः। विदथम्। आ। वदेम ॥ १५ ॥

## सायणभाष्यम् १५

इदानीमृषिः साक्षात्कृतमिन्द्रं प्रति ब्रूते। हे इन्द्र यो दुध्रो दुर्धरः सन् सुन्वते सोमाभिषवं कुर्वते पुरोडाशादिहवींषि पचते यजमानाय वाजमन्नं बलं वा दर्दर्षि भृशं प्रापयसि स तादृशस्त्वं सत्यो यथार्थभूतोऽसि। न पुनर्नास्तीति बुद्धियोग्योऽसि। किलेति प्रसिद्धौ। ते तव प्रियासः सुवीरासः कल्याणपुत्रपौत्राः सन्तो वयं विश्वह सर्वेष्वहःसु विदथं स्तोत्रम् आ वदेम ब्रूयाम्॥ ( इति नवमो वर्गः )।

[ इदं सूक्तमथर्ववेदसंहितायां शस्त्रकाण्डनाम्नि विंशे काण्डे चतुस्त्रिंशत्तमम्। तत्र पाठभेदोऽपि दृश्यते। ]

## हिन्दीभाषान्तर

जो दुर्धर ( देव ) तुम सोम निचोड़ते हुए तथा पकाते हुए भी (यजमान) को बलपूर्वक लाकर प्रदान करते हो, वह तुम निश्चय ही यथार्थ हो। हे इन्द्र! हमलोग तुम्हारे प्रिय एवं शोभन पुत्रों से युक्त होकर प्रतिदिन स्तुति करें।

## टिप्पणियाँ

१. वाजम्—सायण—अन्न, बल। निघण्टु ( २।७।२ ) में अन्न तथा ( २।९।१ ) बल नामों में परिगणित है। मैकदोनेल—लूट का माल।

मैक्समूलर वाज शब्द को वेजेओ, विजेओ, विजिल एवं वाकर से सम्बद्ध करते हैं। उनके विचार में यह वेद के उन कठिन पदों में से है, जिनके साधारण अर्थ की आकल्पना तो सम्भाव्य है, पर सर्वत्र निश्चित अर्थ का ज्ञान होना अशक्य है।

सेण्टपीटर्सवर्गकोष में—तीव्रता, दौड़, दौड़ का विजयधन, लाभ, निधि, घुड़दौड का घोड़ा आदि अर्थ दिये गये हैं। यद्यपि इन समग्र अर्थों के मूल का अन्वेषण अशक्य है; तथापि बल, कलह, संघर्ष, दौड़ आदि अर्थ सम्भव हैं। इस प्रकार दौड़ या समर में विजित पदार्थ आदि अधिक व्यापक अर्थों की प्राप्ति हो सकती है (इण्डिया ह्वॉट कैन इट टीच अस, पृ० १६४)। 'वाज' में आदि स्वर उदात्त होता है—'वृषादीनां च' ( पा० ६।१।२०३ )।

२. आदर्दर्षि—भृशं विदार्य आनयसि इति दर्दर्षि। आ + दृ + यङ् + लट्, म० पु०, ए० व०। सायण—प्रचुर रूप में प्राप्त कराते हो। मैकडोनेल—छीन कर देते हो।

३. विदथम्—ओल्डेनबर्ग इसकी निष्पत्ति वि + धा से करते हैं। वि + धा का अर्थ 'विभाजन करना, बाँटना, प्रबन्ध करना, विधान करना' है, अतएव इस पद का अर्थ 'विभाजन, प्रबन्ध, नियम, विधान' हुआ। 'बृहद् वदेम विदथे सुवीराः' जैसे सन्दर्भों से प्रतीत होता है कि इसका अर्थ 'किसी कार्य को पूर्ण करना' है। इस प्रकार 'विदथ्य' एवं 'सभेय' जैसे पद विदथ और सभा को समान अर्थ-स्तर पर प्रस्तुत करते हैं।

मैकदोनेल के अनुसार यह पद 'विध्'—पूजा से व्युत्पन्न हुआ है।

नि० ६।७ में इसे 'विद्' जानना से निष्पन्न किया गया है। विदथ की तुलना गॉथिक शब्द 'द्रुइदिस्' से की जा सकती है। इसका मूल भारोपीय शब्द 'द्रुइद' है।

देखिए विदथ के लिए इस संग्रह के प्रथम सूक्त के मन्त्र ७ की टिप्पणी।

४. यः सुन्वते—यह अन्तिम मन्त्र 'जनास इन्द्रः' से नहीं समाप्त किया गया है। मन्त्र के अन्त में आहित 'बृहद् वदेम सुवीराः' गृत्समद का अत्यन्त प्रिय वाक्य है, जो उनके प्रत्येक सूक्त के अन्त में आता है॥ १९॥



# प्रजापतिसूक्तम्

१० म०　　　　　　　　　　　　　　　　　　　१२१ सू०

दशममण्डल एकविंशत्यधिकशततमं (दशमेऽनुवाके नवमं) सूक्तम्।

(अष्टमाष्टके सप्तमाध्याये तृतीयचतुर्थवर्गौ)

प्रजापतिपुत्रो हिरण्यगर्भ ऋषिः। कशब्दाभिधेयः प्रजापतिर्देवता। त्रिष्टुप् छन्द।

सायणः—

हिरण्यगर्भ इति दशर्चं नवमं सूक्तं प्रजापतिपुत्रस्य हिरण्यगर्भाख्यमार्षं त्रैष्टुभम्। कशब्दाभिधेयः प्रजापतिर्देवता तथा चानुक्रान्तम्। "हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायम्" इति। गतः सूक्तविनियोगः। प्राजापत्यस्य पशोर्वपापुरोडाशहविषां क्रमेणादितस्तिस्रोऽनुवाक्यास्ततस्तिस्रो याज्याः। सूत्रितं च—"हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्या" इति (आश्व० श्रौ० ३।८)। वरुणप्रवासेषु कायस्य हविषो हिरण्यगर्भ इत्येषा याज्या। सूत्रितं च। "कया-नश्चित्र आ भुवद्धिरण्यगर्भः समवर्तताग्र इति प्रतिप्रस्थाता वाजिने तृतीयः" (आश्व० श्रौ० २।१७) इति॥

हिरण्यगर्भः समवर्तताग्रे<br>
भूतस्य जातः पतिरेक आसीत्।<br>
स दाधार पृथिवीं द्यामुतेमां<br>
कस्मै देवाय हविषा विधेम॥ १॥

पदपाठः

हिरण्यऽगर्भः। सम्। अवर्तत। अग्रे। भूतस्य। जातः। पतिः। एकः। आसीत्। सः। दाधार। पृथिवीम्। द्याम्। उत। इमाम्। कस्मै। देवाय। हविषा। विधेम॥ १॥

## सायणभाष्यम् १

हिरण्यगर्भः। हिरण्यमयस्याण्डस्य गर्भभूतः प्रजापतिर्हिरण्यगर्भः। तथा चात्र तैत्तिरीयकम्—"प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय" (तै० सं० ५।५।१।२) इति। यद्वा—हिरण्मयोऽण्डो गर्भवद् यस्योदरे वर्तते सोऽसौ सूत्रामा हिरण्यगर्भ इत्युच्यते। अग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत। मायाध्यक्षात् सिसृक्षोः परमात्मनः समजायत। यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीना ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते। स जातो जातमात्र एव एकोऽद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य जगतः पतिरीश्वर आसीत्। न केवलं पतिरासीदेव, अपि तर्हि स हिरण्यगर्भः पृथिवीं विस्तीर्णां द्यां दिवमुतापि च इमामस्माभिर्दृश्यमाना पुरोवर्तिनीमिमां भूमिम्। यद्वा पृथिवीत्यन्तरिक्षनाम। अन्तरिक्षं दिवं भूमिञ्च दाधार धारयति। 'छन्दसि लुङ्लङ्लिटः' (पा० ३।४।६) इति सर्वकालिको लिट्। तुजादित्वादभ्यासदीर्घः (पा० ६।१।७)।

कस्मै अत्र किंशब्दोऽनिर्ज्ञातस्वरूपत्वात् प्रजापतौ वर्तते। यद्वा सृष्ट्यर्थं कामयत इति कः कमेर्डप्रत्ययः। यद्वा कं सुखम् तद्रूपत्वात् क इत्युच्यते। अथवा इन्द्रेण पृष्टः प्रजापतिर्मदीयं महत्त्वं तुभ्यं प्रदायाहं कः कीदृशः स्यामित्युक्तवान्। स इन्द्रः प्रत्यूचे यदिदं ब्रवीष्यहं कः स्यामिति तदेव त्वं भवेति। अतः कारणात् क इति प्रजापतिराख्यायते। 'इन्द्रो वै वृत्रं हत्वा सर्वा विजितीर्विजित्याब्रवीत्' (ऐ० ब्रा० ३।२१) इत्यादिकं ब्राह्मणमत्रानुसन्धेयम्। यदासौ किंशब्दस्तदा सर्वनामत्वात् स्मैभावः सिद्धः। यदा तु यौगिकस्तदा व्यत्ययेनेति द्रष्टव्यम्। 'सावेकाचः' (पा० ६।१।१६८) इति प्राप्तस्य 'न गोश्वन्साववर्ण...' (पा० ६।१।१८२) इति प्रतिषेधः। 'क्रिया ग्रहणं कर्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। कं प्रजापति देवाय देवं दानादिगुणयुक्तं हविषा प्राजापत्यस्य पशोर्वपारूपेणैककपालात्मकेन पुरोडाशेन वा विधेम वयमृत्विजः परिचरेम। विधतिः परिचरणकर्मा ॥[1]

---

१. (शु० य० सं० १३।४, २३।१, २५।१०)—...हिरण्यगर्भो यो हिरण्यगर्भाख्यः पुरुषः। समवर्तताग्रे समभवदग्रे प्रथम शरीरी। यश्च भूतस्योत्पन्नस्य प्राणिजातस्य जातो जातमात्र एव सन् पतिरीश्वर एक एवासीदभूत्। स दाधार। तदः स्थाने यदो वृत्तिरर्थसम्भवात्। यश्च दाधार धारयति।

## हिन्दीभाषान्तर

हिरण्यगर्भ सर्वप्रथम उत्पन्न हुआ, उत्पन्न होते ही वह प्राणियों का अद्वितीय स्वामी हो गया, ( एवं ) उसने इस पृथ्वी और द्युलोक को धारण किया, ( उसके अतिरिक्त ) किस देवता के लिए हवि से विधान करें ।

## टिप्पणियाँ

१. हिरण्यगर्भ—सायण—( १ ) सौवर्ण अण्डे का गर्भ बना हुआ प्रजापति । ( २ ) जिसकी कुक्षि में सौवर्ण अण्डा गर्भ के समान स्थित है, वह सूत्रात्मा प्रजापति । ( ३ ) ब्रह्माण्डरूप हिरण्य में गर्भरूप से स्थित प्रजापति ( हिरण्ये ब्रह्माण्डरूपे गर्भरूपेणावस्थितः प्रजापतिः, तै० सं० ४।१।८।३ ) ।

उव्वट—हिरण्यगर्भ अभिधानवाला पुरुष प्रजापति ।

महीधर—हिरण्यपुरुष के रूप में विद्यमान ब्रह्माण्ड में गर्भरूप से विराजमान प्रजापति । पीटर्सन के अनुसार हिरण्यगर्भ का अर्थ 'सुवर्णबीज' है ।

वालेस के विचार से हिरण्यगर्भ से सुवर्णबीज एवं कनकप्रभ प्रकाश की योनि से सूर्य का ज्ञापन होता है । इस सूक्त में सूर्य को ब्रह्माण्ड की उदात्त एवं महती शक्ति में उपन्यस्त किया गया है । सूर्य से ही समस्त देव एवं मानुष रूप का उद्भव होता है । ( कॉस्मोलॉजी ऑफ दि वेद, पृ० ५०,

---

पृथिवीमन्तरिक्षमप्युच्यते । पृथिवी भूः स्वयम्भूरित्यादेरन्तरिक्षनामसु पठितत्वात् । द्यां द्युलोकं च । उतापीमां पृथिवीम् । तस्मै कस्मै काय इति प्राप्ते 'स्मै'-आदेशश्छान्दसः । प्रजापतये देवाय हविषा विधेम हविर्दद्म इति विभक्तिव्यत्ययः ।—( उव्वटः ) ॥

'''हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेणावस्थितः प्रजापतिर्हिरण्यगर्भः । भूतस्य प्राणिजातस्याग्रे समवर्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च जात उत्पन्नमात्र एक एवोत्पत्स्यमानस्य सर्वस्य जगतः पतिरीश्वरः आसीत् । स एव पृथिवीमन्तरिक्षं द्यां द्युलोकमुतापि चेमां भूमिं लोकत्रयं दाधार धारयति । 'तुजादीनां दीर्घोऽभ्यासस्य' ( पा० ६।१।७ ) इत्यभ्यासदीर्घः । पृथिवी भूः स्वयम्भुरित्यन्तरिक्षनामसु पठितत्वात् पृथिवीशब्देनान्तरिक्षलोकोऽत्रोच्यते । कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः । विभक्तिव्यत्ययः ।—( महीधरः ) ॥

ग्रिफिथ, हिम्स ऑफ दि अथर्ववेद में उद्धृत )। इस प्रसङ्ग में ध्यातव्य है कि हिरण्य का सूर्य से घना सम्बन्ध है। प्रधानतया वह सौवर्ण देवता है (खोदा, ऋ० इ०; पृ० १४१ ) हिरण्याक्ष, हिरण्यपाणि, हिरण्यजिह्व, हिरण्यकेश, हिरण्यहस्त आदि सूर्य के विशेषण उपर्युदित कथ्य की सिद्धि करते हैं। सूर्य के वस्त्र भी सुनहरे हैं (ऋ० ४।५३।२)। सौवर्ण रथ पर वह आरूढ कहा गया है [ सूर्य के रूपवर्णन के लिए देखिए—डी० पी० पाण्डेय, सूर्य, शोध-प्रबन्ध, लॉइडेन, १९३९ ]। जीवनदायी सूर्य की अर्चा विश्व में सार्वभौम है। ( एम्० आर० काक्स, ऐन इण्ट्रोडक्शन टू फॉकलोर, पृ० २० ) अतएव इस प्रकार के औद्धौम ( ब्रह्माण्डीय ) अण्डे का वर्णन फ़िनीसी, बाबुली तथा ईरानी विश्वासों में भी उपलब्ध होता है ( कासटेंली, दि फ़िलासफी ऑफ़ मज़्दीनियन रिलीजन अण्डर दि ससानिड्स, पृ० १०७ )। सूर्य की महनीयता निर्विवाद है, तुलनीय, 'सूर्य आत्मा जगतस्तस्थुषश्च' ( ऋ० १।११५।१ ) एकः सूर्यो विश्व-मनुप्रभूतः ( ऋ० ८।५८।२ )। सूर्य के व्यापक रूप विष्णु के परम पद को सूरि द्युलोक में आतत नयन के समान सदैव दर्शन करता है ( ऋ० १।२२।२० )। सूर्य वस्तुतः प्रजापति है; उसके अनेक रूप हैं, सविता, विष्णु, भग, वरुण, पूषा, मित्र, अर्यमा, दक्ष, अंश ( २।२७।१ )। मूलतः, पूर्वकथित सूर्य के समस्त रूप वैदिक जातियों के सूर्यदेवता हैं, जिनका समीकरण ऋग्वेदीय परम्परा में हुआ है ( ग्रिसवोल्ड, दि रिलीजन ऑफ़ दि ऋग्वेद, पृ० २७० )। इस प्रसङ्ग में मार्तण्ड पदाभिधेय सूर्य (ऋ० २।३८।८, १०।७२।८-९, श० ब्रा० ३।१।३।३ आदि ) तथा हिरण्याण्ड का साम्य भी उपेक्षणीय नहीं है। विद्वानों का अभिमत है कि आग्नेय जाति में भी एवंविध सौवर्ण अण्डे से सृष्टि-रचना की गाथा उपलब्ध होती है। सम्भवतः सांस्कृतिक मानों में आर्य या आग्नेय अनुकार का वशंवद है। अनुवर्ती भारतीय साहित्य में यह सृष्टि-कथा अनेकधा अभिहित है।

२. अग्रे—सायण—नामरूपात्मक जागतिक प्रपञ्च के उद्भव के पूर्व। महीधर अग्रे का अन्वय भूतस्य के साथ कर अर्थ उपन्यस्त करते हैं—'प्राणि-

**टिप्पणी—यह मन्त्र शु० य० सं० १३।४, २३।१, २५।१०; अ० वे० ४।२।७; तै० सं० ४।१।८।३, २।८।२; का० य० १४।४; २५।१, २७।२४ में भी उपलब्ध है।**

समुदाय की उत्पत्ति के पहिले'। पीटर्सन—प्रारम्भ, सृष्टि की प्राथमिक स्थिति में। आदित्य शब्द का अर्थ 'आदिदेवता' है ( मॉरिस ब्लूमफील्ड, दि रिलीजन ऑफ् वेद, पृ० १३०-१३१ ), अतएव 'अग्रे' का अर्थ सर्वप्रथम, प्रारम्भ में करना युक्तिसंगत है।

३. समवर्तत—सम् + वृत् + लङ्, प्र० पु०, ए० व०। सायण—उत्पन्न हुआ ( माया के अध्यक्ष सृष्टि-काम परमात्मा से )। उव्वट—हुआ—सर्वप्रथम शरीर धारण किया। महीधर—स्वयं शरीरधारी हुआ। पीटर्सन—सत्ता में आया, उत्पन्न हुआ। मैकदोनेल ने 'वृत्' धातु का अर्थ आन्दोलित होना, दोलायित होना, लुढ़कना आदि किया है—'नीचा वर्तन्त उपरि स्फुरन्ति'—ऋ० १०।३४।९, देखिए १।८५।९; १०।१३५।४ ऋ० १०।९०।१४–शीर्ष्णो द्यौः समवर्तत—में विकसित होना, विस्तृत होना, होना स्वीकारा गया है। जल में हिरण्मय अण्डा आन्दोलित अथवा दोलायित था। इधर उधर लुढ़क रहा था। सत्ता में स्थित था, विद्यमान था। विद्यमान होने एवं सत्ता में आने में परस्पर वैसादृश्य नहीं है। विद् धातु का अर्थ सत्ता में आना भी है। एतदर्थ उत्पन्न हुआ, सत्ता में आया आदि अर्थ करना समुचित है।

४. पृथिवीं द्यामुतेमाम्—सायण—( १ ) विस्तीर्ण द्युलोक और इस पृथ्वी को, ( २ ) अन्तरिक्ष, द्युलोक और भूमि को—इस अर्थ में सायण पृथिवी से अन्तरिक्ष, तथा 'इमाम्' से पृथ्वी का ग्रहण करते हैं। निघण्टु ( १।३।९ ) में पृथिवी का परिगणन अन्तरिक्ष-वाचक पदों में किया गया है। पीटर्सन—पृथिवी तथा आकाश को।

५. कस्मै—सायण के अनुसार इसके अनेक व्याख्यान सम्भव हैं—( १ ) किम् शब्द का प्रयोग अनिर्ज्ञात स्वरूप होने से प्रजापति के लिए हुआ है। ( २ ) सृष्ट्यर्थं कामयते इति कः ( सृष्टि के लिए कामना 'करने वाला क' है–कम् ( इच्छायाम् ) + ड. = कः। ( ३ ) कं सुखं तद्रूपत्वात् कः—'क' सुख को कहते हैं, सुखस्वरूप होने से प्रजापति 'क' है। निघण्टु ( ३।६।२० ) में 'कम्' का सुख नामों में पाठ है। हरदत्त ने सुखवाचक 'कम्' को अव्यय स्वीकारा है। ( उद्धृत, देवराज यज्वा, निघण्टु, ३।६।२० )। ( ४ ) ऐ० ब्रा० ( ३।२१ ) के अनुसार प्रजापति ने इन्द्र से कहा कि मैं अपनी महत्ता देकर

'कौन' बनूँगा, इन्द्र ने उत्तर दिया कि तुम जो यह कह रहे हो कि मै 'कौन' होऊँगा ( कः स्याम् ) अतएव 'क' बनो। इस प्रकार 'क' नाम से प्रजापति प्रसिद्ध हुआ। किम् शब्द सर्वनाम है अतएव 'स्मै' चतुर्थी में हुआ है। अन्य व्याख्यानो में 'स्मै' व्यत्यय से स्वीकारा गया है।

आधुनिक विद्वान् 'किम्' को प्रश्नवाचक सर्वनाम मानते हैं। प्रजापति अर्थ अभिप्रेत होने पर कस्मै के स्थान पर 'काय' का ही प्रयोग किया जाता। ऋग्वेदीय धर्म बहु देवतावादी है। प्राकृत युग मे किसी एक सत्ता की आकल्पना सम्भव ही नही थी। प्रकृति के विस्मयावह व्यापारो को देख वैदिक मेधा में उत्कट विचिकित्सा का प्रादुर्भाव होता है। श्रोदर का अभिमत है कि ऋषि अदन्य लालसा एवं उत्कट अनुसन्धित्सा से उस ईश्वर का अन्वेषण करता है, जो जगत् एवं सृष्टि के प्रथम मूलतत्त्व के प्रारम्भ में विद्यमान रह कर सकल जीवन को आकारायित करता है, एवं समग्र प्रकृति में अपने-आपको अभिव्यक्त करता है। ऋषि देवता को उसकी प्रव्यंजना में कभी यहाँ, कभी वहाँ, कभी अन्यत्र बारम्बार देखता है तथा वह उसके सम्बन्ध मे सन्देह, अनुसन्धित्सा एवं लालसा से सदैव जिज्ञासा करता है। वह कौन देवता है जिसके लिए हम अपनी हवि प्रदान करें ? ( इन्दियन्स लितरातुर उंद कुल्तूर, पृ० ८० )। इस परिसर में 'कस्मै' का अर्थ 'किसके लिए' समुचित एवं विवेकपूर्ण है ( देखिए, मैक्समूलर, वैदिक हिम्स १, पृ० ११–१३; हॉपकिन्स, रिलीजन्स ऑफ इण्डिया, पृ० २८२, मैकदोनेल का लेख, भाण्डारकर कमेमोरेशन वॉल्यूम, पूना, १९१७, ब्लूमफील्ड, रिलीजन ऑफ दि वेद, पृ० २४०, लॉनमन, संस्कृत रीडर, पृ० ३९१, म्योर, संस्कृत टेक्सट्स, ४, १६–७ )॥ १॥

[ इस सूक्त के रचना-विधान एवं प्राचीन सूक्तो से अनुवर्तिता के लिए देखिए, लॉनमन, संस्कृत रीडर, पृ० ३९२। ]

**य आत्मदा बलदा यस्य विश्व**

**उपासते प्रशिषं यस्य देवाः।**

**यस्य च्छायामृतं यस्य मृत्युः**

**कस्मै देवाय हविषा विधेम ॥ २ ॥**

## पदपाठः

यः । आत्मऽदाः । बलऽदाः । यस्य । विश्वे । उपऽआसते । प्रऽशिषम् । यस्य । देवाः । यस्य । छाया । अमृतम् । यस्य । मृत्युः । कस्मै । देवाय । हविषा । विधेम ॥ २ ॥

## सायणभाष्यम् २

यः प्रजापतिः आत्मनां दाता । आत्मनो हि सर्वे तस्मात् परमात्मन उत्पद्यन्ते । यथाग्नेः सकाशाद् विस्फुलिङ्गा जायन्ते तद्वत् । यद्वा आत्मना शोधयिता । 'दैप् शोधने', 'आतो मनिन्' (पा० ३।२।७४) इति विच् । बलदाः बलस्य च दाता शोधयिता वा । यस्य च प्रशिषं प्रकृष्टं शासनमाज्ञां विश्वे सर्वे प्राणिन उपासते प्रार्थयन्ते सेवन्ते वा । 'शासु अनुशिष्टौ', 'शास इत्' ( पा० ६।४।३४ ) इत्युपधाया इत्वम् । 'शासिवसिघसीनां च' (पा० ८।२।६०) इति षत्वम् । कृदुत्तरपदप्रकृतिस्वरत्वम् ( पा० ६।२।१३९ ) आसेरनुदात्तेत्त्वाल्ल-सार्वधातुकानुदात्तत्वे धातुस्वरः । 'तिङि चोदात्तवति' ( पा० ८।१।७१ ) इति गतिरनुदात्ता । तथा देवा अपि यस्य प्रशासनमुपासते । अपि च अमृतममृतत्वम् । भावप्रधानो निर्देशः । यद्वा मृतं मरणं नास्त्यस्मिन्निति, अमृतं सुधा । बहुव्रीहौ 'नञो जरमरमित्रमृताः ( पा० ६।२।११६ ) इत्युत्तरपदाद्युदात्तत्वम् । तदपि यस्य प्रजापतेश्छाया छायेव वर्ति भवति । मृत्युर्यमश्च प्राणापहारी छायेव भवति । तस्मै कस्मै देवायेत्यादि समानं पूर्वेण । हविषा पुरोडाशात्मनेति तु विशेषः ॥[1]

---

१. ( शु० य० सं० २५।१३ )...आत्मानं ददात्यात्मदाः । उपासकानां सायुज्यप्रदः । बलं सामर्थ्यं ददाति बलदाः । भुक्तिमुक्तिप्रद इत्यर्थः । विश्वे सर्वे मनुष्या यस्य प्रशिषं शासनमुपासते । देवाश्च यस्य प्रशिषमुपासते । तदुक्तम्—"यस्य ज्ञेयावधिज्ञानं शिक्षावधि च शासनम् । कार्यावधि च कर्तृत्वं स स्वयम्भूः पुनातु वः" ॥ इति । किञ्च यस्य च्छायाश्रयो ज्ञानपूर्वमुपासन-ममृतं मुक्तिहेतुः । यस्य । अज्ञानमिति शेषः । मृत्युः संसारहेतुः । तदुक्तम्— "य एतद् विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति" । ( श्वेताश्व० उप० ३।१० ) इति ॥—( उव्वटमहीधरौ ) ।

टिप्पणी—यह मन्त्र शु० य०सं०२५।१३; अ० वे० ४।२।१, १३।३। २४, का०य० २७।१७, तै० सं०४।१।८।४, ७।५।१७।१ स्थलों में भी उपलब्ध होता है ।

## हिन्दीभाषान्तर

जो आत्मा को देने वाला है, जो बल को देने वाला है, जिसके अनुशासन की समस्त (प्राणी एवं) देव उपासना करते हैं, जिसकी छाया अमृत है, जिसकी छाया मृत्यु है, ( उसके अतिरिक्त ) किस देवता के लिए हवि से विधान करें।

## टिप्पणियाँ

१. आत्मदाः—आत्मनः ददाति—आत्मन् + दा + विच्—सायण—( १ ) ( सभी आत्माओं का उद्भव परमात्मा से होता है अतएव ) आत्माओं को देने वाला। ( २ ) आत्मनः दायति—आत्मन् + दैप् शोधने + विच्—आत्माओं को शुद्ध बनाने वाला। उव्वट महीधर—स्वयं को देने वाला = उपासकों को सायुज्य प्रदान करने वाला। पीटर्सन—प्राण या श्वास का देने वाला।

वस्तुतः यहाँ आत्मा का अर्थ शरीर मानना उचित प्रतीत होता है। ब्राह्मण-ग्रन्थों के युग तक आत्मा शब्द का प्रयोग प्रायः इसी अर्थ में हुआ है। अध्यात्म शीर्षक से उपन्यस्त व्याख्यान शारीरिक रूपक की अभिव्यक्ति करते हैं ( दे०, श० ब्रा० ६।६।१।१९, ६।७।१।२०, १०।५।२।७ आदि। आत्मा का शरीर-अर्थ में प्रयोग—६।६।३।१५-१६,७।२।२।८, १४, २०, ८।३।४।१५, ९।१।२।९, १०।५।१।३ श० ब्रा०, सायणभाष्य भी देखिए। श० ब्रा० ७।३।१।१२ में आत्मा का अग्नि के पर्याय रूप में उद्धरण नितान्त भ्रामक एवं अशुद्ध है। ८।७।२।१४ श० ब्रा० में प्राण एवं आत्मा के पृथक्त्व का प्रदर्शन करते हुए ध्यातव्य है कि यहाँ आत्मा का शरीर के अर्थ में प्रयोग का संकेत भी कर्तव्य है। स्वपक्ष के संपोष में अर्द्ध उद्धरण देना भी अक्षमता एवं दौर्बल्य का परिचायक है। ऋग्वेद के कतिपय मन्त्रों से यह सिद्ध होता कि सूर्य शारीरिक रोगों का विनाशक है ( १।५०।११-१३ ऋ० )। हेरोडोटस के अनुसार कुष्ठ रोग से पीड़ित पारसी को सूर्य का अपराधी माना जाता था ( १३८ अनुच्छेद )। इस प्रकार के मनुष्यों को 'मिथ्रोद्रूख्श' ( मित्रद्रुघ् ) कहते थे ( मॉर्टिन हॉग, एसेस ऑन दि रिलीजन ऑफ दि पारसीस्, पाद-टिप्पणी, पृ० ७ )। इन प्रमाणों के परिसर में 'आत्मदाः' का अर्थ शरीर देने वाला, शरीर का शोधक उपयुक्ततम है। इस सूक्त के अन्यथा अर्थों के रचनहार जन इन प्रमाणों की उपेक्षा कर देते हैं।

२. बलदाः—सायण—बलदाता या बलशोधक, सामर्थ्यप्रद (तै० सं० ४।१।८।४)। उव्वट-महीधर—भुक्ति-मुक्ति का प्रदाता। पीटर्सन—बल को देने वाला, शक्तिदायी।

३. यस्य विश्व उपासते प्रशिषं यस्य देवाः—सायण-उव्वट-महीधर जिसका प्रशासन या आज्ञा समस्त प्राणी एवं देव स्वीकारते हैं। विश्वे–विश्व + जस्, समस्त प्राणी। वस्तुतः यहाँ वक्ष्यमाण वाक्ययोजना करणीय है—यस्य प्रशिषं विश्वे उपासते, यस्य प्रशिषं देवाः उपासते—प्रशिषम्—प्र + शासु (अनुशिष्टौ) + क्विप् = प्रशासन, अनुशासन। तुलनीय: न यस्येन्द्रो वरुणो न मित्रो व्रतमर्यमा न मिनन्ति रुद्रः, ऋ० २०।३८।९।

४. यस्य च्छायामृतं यस्य मृत्युः—अमृतम्—सायण—(१) अमृतत्व, (२) अमृत, सुधा। उव्वट-महीधर—जिसका आश्रय अमृत रूप मोक्षहेतु है तथा जिसकी अकृपा आवागमनरूप मृत्यु है। पीटर्सन—जिसकी छाया अमरता एवं मृत्यु है॥ २॥

सायण ने यहाँ हवि का अर्थ केवल पुरोडाश किया है।

यः प्राणतो निमिषतो महित्वै-
क इद्राजा जगतो बभूव।
य ईशे अस्य द्विपदश्चतुष्पदः
कस्मै देवाय हविषा विधेम॥ ३॥

पदपाठः

यः। प्राणतः। निऽमिषतः। महिऽत्वा। एकः। इत्। राजा। जगतः। बभूव। यः। ईशे। अस्य। द्विऽपदः। चतुःऽपदः। कस्मै। देवाय। हविषा। विधेम॥ ३॥

सायणभाष्यम् ३

यो हिरण्यगर्भः प्राणतः [प्र] श्वसतः। 'अन प्राणने' आदादिकः। 'शतुरनुमः' (पा० ६।१।१७३) इति विभक्तेरुदात्तत्वम्। निमिषतः।

अक्षिपक्ष्मचलनं कुर्वतः। अत्रापि पूर्ववद् विभक्तिरुदात्ता। जगतो जङ्गमस्य प्राणिजातस्य महित्वा महत्त्वेन। 'सुपां सुलुक्' ( पा० ७।१।३९ ) इति तृतीयाया आकारः। माहात्म्येन। एक इद् अद्वितीय एव सन् राजा बभूव ईश्वरो भवति। भवतेर्णलि 'लिति' ( पा० ६।१।१९३ ) इति प्रत्ययात् पूर्वस्योदात्तत्वम्। अस्य परिदृश्यमानस्य द्विपदः पादद्वययुक्तस्य मनुष्यादेः चतुष्पादो गवाश्वादेश्च यः प्रजापतिरीशे ईष्टे। 'ईश ऐश्वर्ये' आदादिकोऽनुदात्तेत्। 'लोपस्त आत्मनेपदेषु' ( पा० ७।१।४१ ) इति तलोपः। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः ( पा० ६।१।१८६ )। अस्य 'ऊडिदम्' ( पा० ६।१।१७१ ) इतीदमो विभक्तिरुदात्ता। द्वौ पादौ यस्य स द्विपात्। 'सङ्ख्यासुपूर्वस्य' ( पा० ५।४।१४० ) इति पादशब्दस्यान्त्यलोपः समासान्तः। भसञ्ज्ञाया 'पादः पत्' ( पा० ६।४।१३० ) इति पद्भावः। 'द्वित्रिभ्यां पाद्दन्'' ....' ( पा० ६।२।१९७ ) इत्येकदेशविकृतस्यानन्यत्वादुत्तरपदान्तोदात्तत्वम्। स्वरवर्जमेषैव चतुष्पद इत्यत्रापि प्रक्रिया। 'बहुव्रीहौ प्रकृत्या' ( पा० ६।२।१ ) इति पूर्वपद-प्रकृतिस्वरः। पूर्वपदस्य च 'त्रेः सङ्ख्यायाः' ( फि० सू० २।५ ) इत्याद्युदात्तत्वम्। 'इदुदुपधस्य चाप्रत्ययस्य' ( पा० ८।३।४१ ) इति विसर्जनीयस्य षत्वम्। ईदृशो यः प्रजापतिस्तस्मै कस्मा इत्यादि सुबोधम्। हविषा हृदयाद्यात्मनेत्ययमत्र विशेषः ॥[1]

१.(शु० य०सं० २३।३, २५।११) '' यः कः प्रजापतिः प्राणतः प्राणनं कुर्वतो भूतग्रामस्य निमिषतो निमेषणं कुर्वतः। क्रियावत इत्यर्थान्तरम्। महित्वा स्वकीयेन माहाभाग्येन। एक इत्। इच्छब्द एवार्थे। एक एव। समस्तस्य जगतो राजा बभूव संवृत्तः। यश्च ईशे ईष्टे अस्य द्विपदः प्राणिजातस्य यश्च चतुष्पद ईष्टे प्राणिजातस्य। तस्मै कस्मै देवाय प्रजापतये हविषा विधेम। विधतिर्दानकर्मा। हविरिति विभक्तिव्यत्ययो द्वितीयान्तः। हविर्दद्मः। ( उव्वटः ) ॥

'' तस्मै कस्मै प्रजापतये देवाय वयं हविर्विधेम हविर्दद्मः। विधृ ( ध ) विदानार्थः। तृतीया द्वितीयार्थे। तस्मै कस्मै ? यः प्रजापतिः प्राणनं जीवनं कुर्वतो निमिषतो निमेषतो निमेषणं कुर्वतः। उपलक्षणमेतत्। दृगादीन्द्रियव्यापारं कुर्वतः सचेतनस्य जगतः। विश्वस्य एक एव राजा बभूव। केन ? महित्वा महेर्महिम्नो भावो महित्वं तेन महित्वेन। विभक्तेः पूर्वसवर्णः। महाभाग्येनेत्यर्थः। यश्चास्य द्विपदो द्वौ पादौ यस्य स द्विपात् तस्य। 'पादः

## हिन्दी भाषान्तर

जो साँस लेते हुए (तथा) पलक झँपाते हुए जगत् का, अपनी महिमा से अकेला ही राजा हो गया, जो इस दो पैर वाले (और) चार पैर वाले (जगत्) का स्वामित्व करता है, (उसके अतिरिक्त) किसके लिए हवि से विधान करें।

## टिप्पणियाँ

१. प्राणतः = प्र + अन् (प्राणने) + शतृ 'षष्ठी' ए० व०। 'शतुरनुमो नद्यजादी' (पा० ६।१।१७३) से विभक्ति को उदात्त हुआ है। सायण–श्वास लेते हुए (जगत्) का। उव्वट—श्वास लेते हुए (प्राणिसमुदाय) का अथवा क्रियावान् (प्राणिसमूह) का। महीधर–जीवधारी। पीटर्सन–श्वास लेने वाले (जगत्) का।

२. निमिषतः = नि + मिष् (स्फुरित होना, चलना) + शतृ, षष्ठी, ए० व०। प्राणतः के समान यहाँ भी विभक्ति उदात्त है। सायण–पलक झँपाने वाले का। महीधर—नेत्र आदि इन्द्रियों के व्यापार में व्यापृत सचेतन जगत् का, पलक झँपाने वाले का। पीटर्सन—सोने वाले (जगत्) का।

ध्यातव्य है कि सूर्योदय के साथ प्राणिवर्ग कार्यव्यापृत होता है, जीवन्त बनता है; एवं उसके अस्तमन के अनन्तर समस्त जगत् पलक झँपाता है, सोने के लिए सचेष्ट होता है। तुलनीय : सूर्य आत्मा जगतस्तस्थुषश्च ऋ०।

३. द्विपदः, चतुष्पदः–दो पैर वाले प्राणी, चार पैर वाले प्राणी। द्वौ पादौ यस्य तत्, द्विपात् तस्य। चत्वारः पादाः अस्य तत् चतुष्पात्, तस्य। 'द्विपदः' में 'द्वित्रिभ्या पादन्…' (पा० ६।२।१९७) से उत्तर पद को उदात्त। 'चतुष्पदः'

---

पत्' (पा० ६।४।१३०) इति पदादेशः। द्विपादस्य मनुष्यपक्ष्यादेश्चतुष्पदो हस्तिगवादेः प्राणिजातस्य ईशे ईष्टे ऐश्वर्यं करोति। 'लोपस्त आत्मनेपदेषु' (पा० ७।१।४१) इति तकारलोपे 'ईशे' इति रूपम्। 'अधीगर्थदयेशां कर्मणि' (पा० २।३।५२) इति कर्मणि षष्ठी।—(महीधरः)॥

टिप्पणी—यह मन्त्र शु० य० सं० २३।३, २५।११; का० सं० ४०।२; मै० सं० २।१३।१११; अ० वे० ४।२।२; का० य० २५।३, २७।१५; तै० सं० ४।१।८।४, ७।५।१६।१ स्थलों में भी है।

में 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' ( पा० ६।२।१ ) से पूर्व पद में स्थित स्वर होने से 'त्रः सङ्ख्यायाः' ( फि० सू० २।५ ) आदि वर्ण को उदात्त ।

सायण यहाँ 'हविषा' का अर्थ (पशु के) हृदयादि की हवि करते हैं ॥ ३ ॥

यस्येमे हिमवन्तो महित्वा
यस्य समुद्रं रसया सहाहुः ।
यस्येमाः प्रदिशो यस्य बाहू
कस्मै देवाय हविषा विधेम ॥ ४ ॥

## पदपाठः

यस्य । इमे । हिमऽवन्तः । महिऽत्वा । यस्य । समुद्रम् । रसया । सह । आहुः । यस्य । इमाः । प्रऽदिशः । यस्य । बाहू इति । कस्मै । देवाय । हविषा । विधेम ॥ ४ ॥

## सायणभाष्यम् ४

हिमा अस्मिन् सन्तीति हिमवान् । तेन बहुवचनान्तेन सर्वे पर्वता लक्ष्यन्ते यथा छत्रिणो गच्छन्तीति । हिमवन्तो हिमवदुपलक्षिता इमे दृश्यमानाः सर्वे पर्वता यस्य प्रजापतेर्महित्वा महत्त्वं माहात्म्यमैश्वर्यमित्याहुः । तेन सृष्टत्वात् तद्रूपेणावस्थानाद् वा । तथा रसया । रसो जलम् । तद्वती रसा नदी । अर्श-आदित्वादच् ( पा० ५।२।१२७ ) । जातावेकवचनम् । रसाभिर्नदीभिः सह समुद्रम् । पूर्ववदेकवचनम् । सर्वान् समुद्रान् यस्य महाभाग्यमित्याहुः कथयन्ति सृष्टयभिज्ञाः । यस्य चेमाः प्रदिशः प्राच्यारम्भा आग्नेय्याद्याः कोणदिश ईशितव्याः । तथा बाहू । वचनव्यत्ययः । बाहवो भुजाः । भुजवत् प्राधान्ययुक्ताः प्रदिशश्च यस्य स्वभूताः । तस्मै कस्मा इत्यादि समानं पूर्वेण ॥[1]

[1] ( शु० य० सं० २५।१२ )—वयं कस्मै प्रजापतये देवाय हविषा विधेम हविर्दद्मः । विभक्तिव्यत्ययः । कशब्दस्य सर्वनामत्वमार्षम् । इमे हिमवन्तो बहुवचनादन्येऽपि हिमाचलप्रभृतयः पर्वताः । प्रथमा द्वितीयार्थे । 'सुपां सुपो भवन्ति' इति वचनात् । इमान् हिमवत्प्रभृत्यद्रीन् यस्य प्रजा-

## हिन्दीभाषान्तर

जिसकी महिमा से ये पर्वत हैं, नदियों के साथ समुद्रों को जिसका बताया जाता है, जिसकी ये दिशाएँ हैं (एवं) जिसकी भुजाएँ (रक्षिका) हैं, (उसके अतिरिक्त) किस देव के लिए हवि से विधान करें।

## टिप्पणियाँ

१. हिमवन्तः—हिमा अस्मिन् सन्तीति हिमवान् ते। हिम+मतुप्, प्रथमा, ब० व०। सायण—हिमाचल आदि समस्त पर्वत। उव्वट-महीधर—'हिमवन्तः' को द्वितीया, ब० व०। 'हिमवतः' के स्थान पर प्रयुक्त मानकर 'आहुः' के साथ अन्वित करते हैं। तदनुसार अर्थ होगा—जिसकी महिमा ये हिमाचल आदि पर्वत हैं, ऐसा विद्वान् कहते हैं। पीटर्सन—वे हिमयुक्त पर्वत उसके हैं। 'इमे' तथा 'यस्य' का क्रमशः वे और उसका अर्थ करना उचित नहीं माना जा सकता। वस्तुतः यहाँ अन्वय करना चाहिए—'यस्य महित्वा' इमे हिमवन्त (सन्ति, इति शेषः)—जिसकी महिमा से ये पर्वत हैं; अर्थात् जिसकी महिमा के कारण ही समस्त पर्वतों की स्थिति है। पं० क्षे० चं० चट्टोपाध्याय का मत है कि हिमवत् 'कई जगह पर पर्वत-सामान्य के अर्थ में आया है' (वही, पृ० ४०–४१)।

२. महित्वा—इसे सायण, उव्वट और महीधर द्वितीया का एकवचन स्वीकारते हैं और अर्थ करते हैं—महत्त्व को, महिमा को। वस्तुतः महित्वा तृतीयान्त है। ध्यातव्य है कि 'महित्वा' का ऋग्वेद में ३० बार प्रयोग हुआ।

पतेर्महित्वं महिमानमाहुर्बुधाः। महित्वेति विभक्तेराकारः। "रसा नदी रसतेः शब्दकर्मण." (निरु० ११।२५) इति [निरुक्ते] यास्कः। रसया नद्या सह समुद्रं यस्य महित्वमाहुः। इमाः प्रदिशः पूर्वाद्याः प्रकृष्टा आशा यस्य महित्वमाहुः। यस्य बाहू भुजौ जगद्रक्षणाविति शेषः सर्वं जगद् यस्य प्रजापतेर्विभूतिरित्यर्थः।—(उव्वटमहीधरौ)

टिप्पणी—यह मन्त्र, शु० य० सं० २५।१२; का० य० २७।१६; तै० सं० ४।१।८।४; का० सं० ४०।६; मै० सं० २।१३।११३; अ० वे ४।२।५, में भी उपलब्ध होता है।

इस स्थल को छोड़कर अन्यत्र प्रायः सर्वत्र सायण ने इसे तृतीयान्त स्वीकारा है—दे०, सायण, ऋ० २।१५।६; ३।१।४, ५४।१५; ४।१६।५, ४२।३; ५।२।९, ५८।२; ६।२९।५, ६७।३, १०; ७।१३।२, २०।४, २३।३, ५८।१, ६१।४, ९७।८, १०७।३; ८।२५।१८; १०।५४।१, ५५।५, ५६।७, ८८।९, ८९।१, ९६।११, १२१।३ आदि।

३. प्रदिशः—सायण—आग्नेय आदि कोण। उव्वट-महीधर—पूर्व आदि दिशाएँ। पीटर्सन—आकाश के क्षेत्र।

पीटर्सन के विचार सायण के भाष्य में उल्लिखित–प्रदिशः प्राच्यारम्भाः··· स्वभूताः—अंश ने एक कठिन समस्या उत्पन्न कर दी है। दिशाओं के कोणों को 'विदिश्' कहा जाता है। सायण 'प्रदिशः' का इसी अर्थ में निर्वचन प्रस्तुत करते हैं। 'आग्नेय्याद्याः' आदि के द्वारा इनका संकेत है एवं 'ईशितव्याः' से प्रजापति एवं प्रदिशों का स्वस्वामिसम्बन्ध द्योतित होता है।

'बाहू' के द्वारा मुख्य दिशाओं की अभिव्यक्ति की गयी है, एवं 'स्वभूताः' का प्रयोग 'ईशितव्याः' के लिए किया गया है।

इस प्रकार उनका विचार है कि सा० भा० में 'प्रदिशः' के स्थान पर 'दिशः' पाठ होना चाहिए तथा 'प्राच्यारम्भाः' के स्थान पर 'प्रारम्भाः' का (पीटर्सन को इस मत का मूल आर० जी० भाण्डारकर से उपलब्ध हुआ)।

मैक्समूलर ने भी सा० भा० को शुद्ध करने का प्रयास किया है–'यस्य चेमाः प्रदिशः आग्नेय्याद्याः कोणदिश ईशानान्ता वा'+परन्तु वे दोनों अनुमान (मैक्समूलर एवं पीटर्सन के) विद्वानों को स्वीकार नहीं हुए। पूना के ऋग्वेद के संस्करण में इस प्रकार का पाठ नहीं स्वीकारा गया। वस्तुतः 'प्रदिशः' से समस्त दिशाओं का बोध होता है अतः दिशाविदिशा आदि का आग्रह उचित नहीं होगा ॥ ४ ॥

येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ळ्हा
येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑।
यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒
कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ५ ॥

पदपाठः

येन॑ । द्यौः । उ॒ग्रा । पृ॒थि॒वी । च॒ । दृ॒ळ्हा । येन॑ । स्व१॒रिति॑ स्वः॑ । स्त॒भि॒तम् । येन॑ । नाकः॑ । यः । अ॒न्तरि॑क्षे । रज॑सः । वि॒ऽमानः॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धे॒म ॥ ५ ॥

सायणभाष्यम् ३

येन प्रजापतिना द्यौरन्तरिक्षम् उग्रा उद्गूर्णविशेषा गहनरूपा वा पृथिवी भूमिश्च दृळ्हा येन स्थिरीकृता । स्वः स्वर्गश्च येन स्तभितं कृतम् । यथाधो न पतति तथोपर्यवस्थापितमित्यर्थः । 'ग्रसितस्कभितस्तभित...' (पा०७।२।३४) इति निपात्यते । तथा नाक आदित्यश्च येनान्तरिक्षे स्तभितः । यश्चान्तरिक्षे रजस उदकस्य विमानो निर्माता । तस्मै कस्मा इत्यादि गतम् ॥[1]

( इत्यष्टमाष्टके सप्तमाध्याये तृतीयो वर्गः )

हिन्दीभाषान्तर

जिसने भयावह द्युलोक तथा पृथिवीलोक को दृढ़ किया, जिसने ऊपर स्वर्लोक और नाक लोक को स्तब्ध कर दिया, तथा जिसने अन्तरिक्ष में लोकों को नाप लिया, ( उसके अतिरिक्त ) किस देव के लिए हवि से विधान करें।

---

[1] (शु० य० सं० ३२।६—येन पुरुषेण द्यौरुग्रा उद्गूर्णा वृष्टिदायिनी कृता । पृथिवी च दृढा स्थिरा प्राणधारणाय वृष्टिग्रहणाय चान्ननिष्पादनाय च कृता । येन च स्व आदित्यमण्डलं स्तभितं स्तम्भितम् । येन च नाकः स्वर्गो लोकः स्तम्भितः । यश्चान्तरिक्षे रजस उदकस्य वृष्टिलक्षणस्य विमानो निर्माता । तं परित्यज्य कस्मै अन्यस्मै देवाय हविषा विधेम हविर्दद्म इति समञ्जसम् ।—( उव्वटः ) ॥

येन पुरुषेण द्यौरुग्रा उद्गूर्णा । वृष्टिदा कृतेति शेषः । पृथिवी च येन दृढा कृता । सर्वप्राणिधारणं वृष्टिग्रहणमन्नादिनिष्पादनं चेति भूमेर्दार्ढ्यम् । येन स्व आदित्यमण्डलं स्तभितं स्तम्भितम् । येन नाकः स्वर्गोऽपि स्तम्भितः योऽन्तरिक्षे नभसि रजसो जलस्य वृष्टिरूपस्य विमानो विमिमीते । निर्माता । तं विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः । न कस्मैचिदित्यर्थः ॥ ( महीधर ) ॥

टिप्पणी—यह मन्त्र शु० य० सं० ३२।६; का० य० २९।३२, तै० सं० ४।१।८।५; अ० वे० ४।२।४ स्थलों में उपलब्ध होता है ।

## टिप्पणियाँ

१. उग्रा—सायण के विचार में 'पृथिवी' के विशेषण रूप में उग्रा का प्रयोग हुआ है—उठी हुई, गहन। प्रतीत होता है कि सायण 'उग्रा' को 'द्यौः' का विधेय मानने के पक्ष मे हैं, जैसे 'पृथिवी' का विधेय 'दृळ्हा' है। यह मानने पर सायण-अभिप्रेत अर्थ होगा—जिसने अन्तरिक्ष को उठाकर ऊपर कर दिया। उव्वट—महीधर ने 'उग्रा' को 'द्यौः' का विधेय ही माना है। इन दोनो के मतानुसार अर्थ है—वृष्टिदायिनी। पीटर्सन—'उग्रा' को 'द्यौः' का विशेषण मानकर 'महान्' अर्थ करते हैं। उच—मिलना + रन् ( उणा० २।२८ )।

२. स्वः—सायण—स्वर्ग। उव्वट—महीधर—आदित्यमण्डल। पीटर्सन—'स्वः' तथा 'नाकः' को एकत्र कर—आकाश का विस्तृत क्षेत्र। वस्तुतः 'स्वः' एवं 'नाकः' दोनो विभिन्न लोको के ज्ञापक हैं। 'स्वः' का विसर्ग र् से उद्भूत हुआ है, अतएव पदपाठ में इति लगाकर 'स्वः' आवृत हुआ है। यह स्वतन्त्रस्वरितों में जात्य स्वरित है। जिस स्वरित के पूर्व उदात्त न हो उसे जात्य स्वरित कहते हैं—'येन स्वः'—में 'स्वः' का पूर्ववर्ती 'न' उदात्त नहीं है। स्वतन्त्र स्वरित के अनन्तर यदि उदात्त आता है तो कम्प होता है। जहाँ जात्य स्वरित ह्रस्व स्वर पर होता है वहाँ कम्प को स्वरित एवं अनुदात्त युक्त १ चिह्न से व्यक्त करते हैं। पदपाठ से 'स्वऽ १ रिति' पद में जात्य स्वरित युक्त 'स्वः' के आगे 'इति' का 'इ' उदात्त है, अतएव कम्प हुआ और उसकी अभिव्यक्ति के लिए १ चिह्न का उपन्यास किया गया। ध्यातव्य है कि ऐसी स्थिति में जात्य स्वरितयुक्त वर्ण के ऊपर से स्वरित का चिह्न हटा दिया जाता है।

३. अन्तरिक्षे रजसो विमानः—सायण—अन्तरिक्ष में जल का निर्माता है। पीटर्सन—मध्य आकाश को नापा। वस्तुतः लोकों को नापना सूर्य का एक विशिष्ट कर्म है, तुलनीय : 'एको विममे त्रिभिरित् पदेभिः' १।१५४।३ ऋ०। रजसो विमानः, १०।१३९।५, १।१५४।१, ३।१६०।४, २।१२।२ ऋ० भी देखिए। टिप्पणी देखिए, विष्णुसूक्त १ मन्त्र में विममे पर ॥ ५ ॥

यं क्रन्दसी अवसा तस्तभाने

अभ्यैक्षेतां मनसा रेजमाने ।

यत्राधि सूर उदितो विभाति
कस्मै देवाय हविषा विधेम ॥ ६ ॥

### पदपाठः

यम् । क्रन्दसी इति । अवसा । तस्तभाने इति । अभि । ऐक्षेताम् । मनसा । रेजमाने इति । यत्र । अधि । सूरः । उत्ऽइतः । विभाति । कस्मै । देवाय । हविषा । विधेम ॥ ६ ॥

### सायणभाष्यम् ६

क्रन्दिवान् रोदितवाननयोः प्रजापतिरिति क्रन्दसी द्यावापृथिव्यौ । श्रूयते हि—'यदरोदीत्तदनयो रोदस्त्वम्' ( तै० ब्रा० २।२।९।४ ) इति । ते अवसा रक्षणेन हेतुना लोकस्य रक्षणार्थं तस्तभाने प्रजापतिना सृष्टे लब्धस्थैर्ये सत्यौ यं प्रजापतिं मनसा बुद्ध्याभ्यैक्षेताम् आवयोर्महत्त्वमनेन इत्यभ्यपश्येताम् । 'ईक्ष दर्शने' । लङ्यडादित्वादाद्युदात्तः । कीदृश्यौ द्यावापृथिव्यौ । रेजमाने राजमाने दीप्यमाने । आकारस्य व्यत्ययेनैत्वम् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वा लिटः कानच् । 'फणां च सप्तानाम्' (पा० ६।४।१२५) इत्येत्त्वाभ्यासलोपौ । 'छन्दस्युभयथा' ( पा० ३।४।११७ ) इति सार्वधातुकत्वाच्छप [ अतएव ] 'अभ्यस्तानामादिः' ( पा० ६।१।१८९ ) इत्याद्युदात्तत्वम् । यत्राधि यस्मिन्नाधारभूते प्रजापतौ सूरः सूर्य उदित उदयं प्राप्तः सन् विभाति प्रकाशते । उत्पूर्वादेतेः कर्मणि निष्ठा । 'गतिरनन्तरः' ( पा० ६।२।४९ ) इति गतेः प्रकृतिस्वरत्वम् । 'तस्मै कस्मा इति सुज्ञानम् ॥'[१]

---

[१] ( शु० य० सं० ३२।७ )—"अवसान्नेन हविर्लक्षणेन वृष्टिधारणाद्युपकारजनितेन । तस्तभाने संस्तम्भमाने सर्वप्राणिजातम् । अभ्यैक्षेतां मनसा साध्वेतत्कृतमनेनेति । रेजमाने कम्पमाने । यत्र चाध्युपरिस्थितो यदाधार इत्यभिप्रायः । सूरः सूर्य उदितः सन् विभाति । तं देवं परित्यज्य कस्मै देवाय हविषा विधेम इति समञ्जसम् ।—( उव्वटः ) ॥

क्रन्दसी द्यावापृथिव्यौ यं पुरुषं मनसाभ्यैक्षेतां साधु कृतमित्यपश्यताम् । कीदृश्यौ क्रन्दसी । अवसा हविर्लक्षणेनान्नेन वृष्टिजनकत्वेन तस्तभाने प्राणि-

## हिन्दीभाषान्तर

सहायता के द्वारा स्थिर बनाये गये ( तथा ) मन से डरते हुए द्युलोक और पृथिवी लोक जिसकी ओर देखते हैं, जहाँ पर सूर्य उदित होकर दीप्तिमान् होता है, ( उसके अतिरिक्त ) किस देवता के लिए हवि से विधान करें।

## टिप्पणियाँ

१. क्रन्दसी—( प्रजापति के रोदन के स्थान ) द्युलोक और पृथिवीलोक; [ तै० सं० में—प्रजापति के रोदन से उत्पन्न द्युलोक और पृथिवीलोक (तै० सं० भा० ४, पृ० १०३) ]। उव्वट एवं महीधर भी इस अर्थ से सहमत हैं। मैक्स-मूलर का कथन है कि यहाँ 'क्रन्दसी' के स्थान पर रोदसी पाठ स्वीकारना चाहिए। विभिन्न पाठों के परिसर में यह मान्य नहीं हो सकता। अ० वे० ४।२।३ भी इसी पाठ की ओर इंगित करता है ( उद्धृत, पीटर्सन, भाग १, पृ० २८८ )। निघण्टु ( ३।३०।४ ) में रोदसी द्यावापृथिवी नामों में पठित है। क्रन्दसी भी रोदसी के पर्याय रूप में प्रयुक्त होता है। विरुद के अभिव्यंजक शब्दों का, प्रभविष्णुता के निमित्त, विशेषण के रूप में भी प्रयोग उपलब्ध होता है ( आर० एम्० मेयर, डूइत्शे स्ताइलिस्तिक, म्युनिख, १९१३, अनु० ५०; खोंदा, इं० ऋ०, पृ० १५७ आदि )। अथर्ववेद के ४।२।३ मन्त्र में क्रन्दसी का रोदसी के विशेषण रूप में ही प्रयोग हुआ है, अतएव मैक्समूलर का सुझाव नहीं माना जा सकता।

२. तस्तभाने—स्तम्भ् - स्तब्ध करना, सीमित करना, स्थिर करना—+कानच्; स्त्रीलिंग, प्रथमा, द्वि० व०। सायण—प्रजापति द्वारा निर्मित एवं स्थिर किये गये ( तै० सं०—देवों एवं मनुष्यों के अवस्थान के लिए स्थिर किये गये )। स्तभ या स्तम्भ धातु के प्रयोग के लिए देखिए—२।१२।२

---

**जातं स्तम्भयन्त्यौ। व्यत्ययेन स्तभो ह्वादित्वम्। रेजमाने शोभमाने। सूरः सूर्यो यत्र द्यावापृथिव्योरुदितः सन् अधिविभाति, अधिकं शोभते विभासयति वा। तं विहाय कस्मै हविर्दद्मः।—( महीधरः )॥**

**टिप्पणी—यह मन्त्र ३२।७; का० य० २९।३४; तै० सं० ४।१।८।५; का० सं० ४०।५०; मै० सं० २।१३।११५; अ० वे० ४।२।३ में उपलब्ध होता है।**

पर मैकदोनेल की टिप्पणी। तुलनीय: यस्तस्तम्भ रोदसी चिदुर्वी, ऋ० ७।८६।१; यस्तस्तम्भ रोदसी, ऋ० ९।१०१।१५; तस्तम्भ पृथिवीमुत द्याम्, १०।८९।४; विरोदसी तस्तभुर्मरुतः, ऋ० ८।९४।११ आदि। उव्वट-महीधर—समस्त प्राणियों को स्तब्ध करती हुई ( द्यावापृथिवी )।

३. मनसा—सायण—बुद्धि से। सायण 'मनसा' का अन्वय अभ्यैक्षेता'से कर—बुद्धि से समीक्षण किया—अर्थ करते हैं। वस्तुतः 'मनसा' का सम्बन्ध 'रेजमाने' से होना चाहिए, जैसे 'अवसा' का अन्वय 'तस्तभाने' से किया गया है।

४. रेजमाने—रेज् + कानच्, प्रथमा, द्वि०व०। सायण—राजमान, दीप्यमान। उव्वट—काँपती हुई। महीधर—शोभित होती है। भ्यस् एवं रेज धातु—दोनों भय एवं कम्पन के अर्थ को व्यक्त करती हैं ( देवराज यज्वा—नैघण्टुकटीका परिशिष्ट २५ ) तुलनीय: रेजन्ते अध्वनि प्रविक्ते, ऋ० ६।५०।५; रेजन्ते विश्वा कृत्रिमाणि भीषा, ऋ० ७।२१।३, रेजन्ते कृष्टयः, ऋ० ८।१०३।३, भूमिर्यामेषु रेजते, ऋ० ८।२०।५; क्रवणस्य रेजरे, ऋ० ५।४४।९; वो भिया पृथिवी चिद्रेजते पर्वतश्चित्, ऋ० ५।६०।२, रेजते अग्ने पृथिवी मखेभ्यः, ऋ० ६।६६।९; भिया वृषणो रेजमानाः, ७।६२।१० ऋ०, आदि। इन निदर्शकों के परिसर में रेज धातु का अर्थ काँपना ही उचित लगता है ( इन स्थलों पर सायणभाष्य भी देखिए)। अभ्यस्त होने पर आदि वर्ण में उदात्त स्वर है 'अभ्यस्तानामादिः' ( पा० ६।१।१८९ )।

५. यत्र अधि—जिस पर आधृत होकर। सायण—जिस आधारभूत प्रजापति में। उव्वट—जिसके ऊपर स्थित होकर, जिस आधार को ग्रहण कर। तु०—वयो न सीदन्नधि बर्हिषि प्रिये; ऋ० १।८५।७; यत् किंच पृथिव्यामधि, ५।८३।९ ऋ०; यत् सुवाचो वदथनाध्यप्सु, ७।१०३।५ ऋ०; विराजोऽधि पूरुषः, १०।९०।५ ऋ० आदि। यह आधिक्य के अर्थ में उपसर्ग है। इसके योग में सप्तमी होती है। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' ( पा० २।३।९ )

६. सूर उदितो विभाति—सायण, उव्वट, महीधर—सूर्य उदित होकर दीप्तिमान् होता है। भौतिक सूर्य एवं उसके अभिमानी देवता में विभिन्नता है। यहाँ सूर्य दृश्यमान सूर्य के लिए आया है। यह नयनप्रेक्ष्य सूर्य उस देवता के कारण ही प्रकाशित होने में समर्थ होता है॥ ६॥

आपो ह यद् बृहतीर्विश्वमायन्
गर्भं दधाना जनयन्तीरग्निम् ।
ततो देवानां समवर्ततासुरेकः
कस्मै देवाय हविषा विधेम ॥ ७ ॥

## पदपाठः

आपः । ह । यत् । बृहतीः । विश्वम् । आयन् । गर्भम् । दधानाः । जनयन्तीः । अग्निम् । ततः । देवानाम् । सम् । अवर्तत । असुः । एकः । कस्मै । देवाय । हविषा । विधेम ॥ ७ ॥

## सायणभाष्यम् ७

बृहतीर्बृहत्यो महत्यः । 'जसि वा छन्दसि' (पा० ६।१।१०६) इति पूर्वसवर्णदीर्घः । बृहन्महतोरुपसङ्ख्यानम्' ( पा० ६।१।१७३ वा० ) इति ङीप् उदात्तत्वम् । अग्निम् । उपलक्षणमेतत् । अग्न्युपलक्षितं सर्वं वियदादिभूतजातं जनयन्तीर्जनयन्त्यस्तदर्थं गर्भं हिरण्मयाण्डस्य गर्भभूतं प्रजापतिं दधानाः धारयन्त्य आपो ह आप एव विश्वमायन् सर्वं जगद् व्याप्नुवन् ( यद् यस्मात् ततस्तस्माद् हेतोर्देवानां देवादीनां सर्वेषा प्राणिनामसुः प्राणभूत एकः प्रजापतिः समवर्तत समजायत । यद्वा ) यद् यं गर्भं दधाना आपो विश्वात्मनावस्थितास्ततो गर्भभूतात् प्रजापतेर्देवादीना प्राणात्मको वायुरजायत । अथवा । यत् । लिङ्गवचनयोर्व्यत्ययः । उक्तलक्षणा या आपो विश्वमावृत्य स्थिता ततस्ताभ्योऽद्भ्यः सकाशादेकोऽद्वितीयोऽसुः प्राणात्मकः प्रजापतिः समवर्तत निश्चक्राम । तस्मै कस्मा इत्यादि गतम् ।[1]

---

[1] ( शु० य० सं० २७।२५ )—'''आपः । पुराकल्पद्योतको 'ह' इति निपातः । यत् । बृहतीर्बृहत्यो महत्यः । विश्वं सर्वमात्मत्वेन । आयन् प्रापुः । ...हिरण्यगर्भवचनो वाग्निशब्दः । ततो गर्भात् संवत्सरोषिताद् देवानां मध्ये

## हिन्दीभाषान्तर

प्रसिद्ध है कि जब गर्भ धारण करती हुई तथा अग्नि को उत्पन्न करती हुई विशाल जलराशि विश्व में आयी, तब देवों का अद्वितीय प्राण (हिरण्यगर्भ) उत्पन्न हुआ, ( उसके अतिरिक्त ) किस देव के लिए हवि से विधान करें।

## टिप्पणियाँ

१. आपः—सायण—जल। उव्वट-महीधर—सलिल (सृष्टि के आरम्भ में।)

आपो ह वा इदमग्रे सलिलमेवास······तासु तपस्तप्यमानासु हिरण्मय-माण्डं सम्बभूव······।—श० ब्रा० ११।१।६।१। सृष्टि के प्रारम्भ में सर्वत्र सलिल ही था। यह जल 'अप्रकेत' ( अप्रज्ञात ) रूप में स्थित था। 'तम आसीत् तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्'—ऋ० १०।१२९।३, १०।१२९।४ भी देखिए। इस जल में सौवर्ण अण्डा ही 'पर्यप्लवन' कर रहा था। वैज्ञानिकों के विचार से भी सृष्टि के आरम्भ में सर्वत्र जल व्याप्त था। सूर्य की जल में पड़ती हुई छाया सौवर्ण अण्डे के रूप में प्रतीत हुई, जिसे प्राकृत युग का मानव सोने का अण्डा समझ नाना भाव से अपनी युग-कथाओं में ख्यापित करता है।

२. जनयन्तीरग्निम्—जन् + णिच् + शतृ + ङीप्। सायण—अग्नि से उप-लक्षित आकाश आदि समस्त भूतों को उत्पन्न करता हुआ। उव्वट-महीधर—

---

समवर्तत समभवदसुः प्राणात्मक एको देवानाम्। स हि लिङ्गशरीरो य इत्थम्भूतो हिरण्यगर्भः······।—( उव्वटः ) ॥

ह प्रसिद्धौ। यद् यदा पुरापो जलानि विश्वमायन् प्रापुः। कीदृश्य आपः। बृहतीर्बृहत्यो महत्यो बहुलाः। तथा गर्भं हिरण्यगर्भलक्षणं दधाना धारयन्त्यः। अत एवाग्निं जनयन्तीरग्निरूपं हिरण्यगर्भं जनयन्त्यः उत्पादयिष्यन्त्यः। ततो गर्भाद् संवत्सरोषिताद् देवानामसुः प्राणरूप आत्मा लिङ्गशरीररूपो हिरण्य-गर्भः समवर्ततोदपद्यत। कस्मै प्रजापतिरूपाय देवाय हिरण्यगर्भाय हविषा विधेम हविर्दद्मः। विभक्तिव्यत्ययः। विधतिर्दानार्थ।—( महीधरः ) ॥

टिप्पणी—यह मन्त्र शु० य० सं० २७।२५; का० य० २९।३५; तै० सं० २।२।१२।१, ४।१।८।५; अ० वे० ४।२।६, तै० आ० १।२३।८ में है।

अग्निरूप हिरण्यगर्भ या हिरण्यगर्भ को उत्पन्न करता हुआ। पीटर्सन—अग्नि को उत्पन्न करता हुआ। सौवर्ण अण्डे का प्रकाश अग्नि से भी अधिक तेजः-पुञ्ज से युक्त था, अतः उसे अग्नि कहा गया। सृष्टि के आरम्भ में सूर्य का वर्तुल तेजःपिण्ड अत्यधिक गति से भ्रमणशील था, ऐसा वैज्ञानिक भी स्वीकारते हैं। छन्द की दृष्टि से 'जनयन्तिरग्निम्' पढ़ना चाहिए।

३. ततः—सायण—गर्भभूत प्रजापति से। उव्वट महीधर—संवत्सर तक जल में स्थित गर्भ से—यह व्याख्यान श० ब्रा० के—जातो ह तर्हि संवत्सर आस......ततः संवत्सरे पुरुषः समभवत् ११।१।६।१-२ पर आधृत है। पीटर्सन—तब ( जब जलराशि विस्तृत हुई )।

४. असुः—सायण—प्राणात्मक वायु। उव्वट-महीधर—प्राणरूप आत्मा, लिङ्गशरीररूप हिरण्यगर्भ। पीटर्सन—आत्मा। तुलनीय—एष उ एव प्राणः। एष हीमाः सर्वाः प्रजाः प्राणयति तस्यैते प्राणाः...श० ब्रा०....१०।२।१।१४। सूर्य से ही समस्त प्राणी प्राणवान् हैं। अस्यति वायुमित्यसुः—असु ( फेंकना ) + उण् ( उणा० १।१० ) निरुक्त ३।८।१०।३४ भी देखिए।

इस ऋक् में छन्दोविधान की दृष्टि से 'एकः' पद अधिक है अतएव आर्नाल्ड ने इसे 'अधिकाक्षर' ऋक् स्वीकारा है ( अनु० २२४, पृ० १०८, अनुच्छेद १५७, पृ० १०२, वैदिक मीटर )। रॉथ का मत है कि यदि ऋक् को शुद्ध करने की दृष्टि से 'एकः' को निकाल दिया जाय तो भाव या अर्थ की कोई हानि नहीं है। वस्तुस्थिति का अनुरोध भी यही है ॥ ७ ॥

यश्चिदापो महिना पर्यपश्यद्
दक्षं दधाना जनयन्तीर्यज्ञम्।
यो देवेष्वधि देव एक आसीत्
कस्मै देवाय हविषा विधेम ॥ ८ ॥

पदपाठः

यः। चित्। आपः। महिना। परिऽअपश्यत्। दक्षम्। दधानाः। जनयन्तीः। यज्ञम्। यः। देवेषु। अधि। देवः। एकः। आसीत्। कस्मै। देवाय। हविषा। विधेम ॥ ८ ॥

## सायणभाष्यम् ८

यज्ञं यज्ञोपलक्षितं विकारजातं जनयन्तीरुत्पादयन्तीस्तदर्थं दक्षं प्रपञ्चात्मना वर्धिष्णुं प्रजापतिमात्मनि दधाना धारयित्रीः। 'दधातेर्हैतौ' (पा० ३।२।१२६) शानच्। 'अभ्यस्तानामादिः' (पा० ६।१।१८९) इत्याद्युदात्तत्वम्। ईदृशीरापः। व्यत्ययेन प्रथमा। अपः प्रलयकालीनाः। महिना महिम्ना। छान्दसो मलोपः। स्वमाहात्म्येन यश्चित् यश्च प्रजापतिः पर्यपश्यत् परितो दृष्टवान्। यश्च देवेष्वधि देवेषु मध्ये देवस्तेषामीश्वरः सन् एकोऽद्वितीय आसीद् भवति। अस्तेश्छान्दसो लुङ्। 'अस्ति सिचोऽपृक्ते' (पा० ७।३।९६) इतीडागमः। तस्मै कस्मा इत्यादि गतम्॥[1]

## हिन्दीभाषान्तर

जिसने अपनी महिमा से दक्ष को धारण करती हुई, (तथा) यज्ञ को उत्पन्न करती हुई जलराशि को चारों ओर देखा, जो देवों में अद्वितीय देव हो गया, (उसके अतिरिक्त) किस देव के लिए हवि से विधान करें।

## टिप्पणियाँ

१. दक्षम्—सायण—प्रपञ्च रूप से वृद्धि के निमित्त समुद्यत प्रजापति को। महीधर—कुशल प्रजापति को। पीटर्सन—शक्ति, बल। दक्ष वस्तुतः सूर्य का एक रूप है (देखिए—इस संग्रह के प्रथम सूक्त, मन्त्र ३ पर टिप्पणी)। इस सूक्त के १ मन्त्र में हिरण्यगर्भ पर भी टिप्पणी देखिए।

निघण्टु (२।९।१४) में दक्ष बल-नामों में पठित हैं। यास्क ने दक्षिण (हस्त) को दक्ष् उत्साह करना एवं दाश् दान देना से सिद्ध किया है (निरु० १।७)। डॉ० सिद्धेश्वर ने भारोपीय मूल धातु + देक्स—लेना तथा + देक्—

[1] (शु० य० सं० २७।२६)–...महिना महाभाग्येन। पर्यपश्यत् परितो दृष्टवान्।...यज्ञं सृष्टियज्ञम्...—(उव्वट)॥

चिदप्यर्थः। यो [ऽपि] देवोऽन्तर्यामी महिना महिम्ना। आपः। विभक्तिव्यत्ययः अपः पूर्वोक्ताः पर्यपश्यत् सर्वतो ददर्श। कीदृशीः। दक्षं कुशलं प्रजापतिं दधानाः। यज्ञं जनयन्तीः। यज्ञशब्देन यज्ञकर्त्री प्रजोच्यते। सृष्टिकर्त्रीरित्यर्थः। यश्च देवेष्वधि अधिक एको मुख्यो देव आसीत्। तस्मै देवाय हविर्दद्मः॥ (महीधरः)॥

आदर दिखाना, स्वीकार करना—की कल्पना दक्ष् धातु से की है। उनके अनुसार दाश् से की गयी व्युत्पत्ति लोक-व्यवहार के कारण है। दक्ष् शैघ्र्ये, दक्ष् गति-हिंसनयोः, से भी इस शब्द की व्युत्पत्ति की जा सकती है—स्कन्दस्वामी।

२. यज्ञम्—सायण—यज्ञोपलक्षित विकार-समूह। उव्वट—सृष्टियज्ञ। पीटर्सन—यज्ञ। छन्द की दृष्टि से 'जनयन्तिः यज्ञम्' पढ़ना चाहिए।

मैक्समूलर का कथन है कि इस ऋक् में प्रयुक्त 'आपः' से सृष्टि के आरम्भ में स्थित जल को समझना चाहिए, जैसा कि (ऋ० १०।१२९।३) में कहा गया है कि सब कुछ समुद्र के समान प्रकाशहीन था (पीटर्सन, भा० १, पृ० २८९)।

मैक्समूलर के अनुसार ग्रॉसमन 'एकः' को इस ऋक् से हटाना चाहते हैं; क्योंकि मैत्रायणी शाखा में यह उपलब्ध नहीं होता। छन्दोविधान से भी यही प्रतीत होता है। पर यह सुझाव मान्य नहीं है ॥ ८ ॥

**मा नो॑ हिंसीज्जनि॒ता यः पृ॑थि॒व्या**
**यो वा॑ दिवं॑ स॒त्यध॑र्मा ज॒जान॑ ।**
**यश्चा॒पश्च॒न्द्रा बृ॑ह॒तीर्ज॒जान॒**
**कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ९ ॥**

पदपाठः

मा । नः॒ । हिं॒सी॒त् । ज॒नि॒ता । यः । पृ॒थि॒व्याः । यः । वा॒ । दिव॑म् । स॒त्यऽध॑र्मा । ज॒जान॑ । यः । च॒ । अ॒पः । च॒न्द्राः । बृ॒ह॒तीः । ज॒जान॑ । कस्मै॑ । दे॒वाय॑ । ह॒विषा॑ । वि॒धे॒म ॥ ९ ॥

सायणभाष्यम् ९

स प्रजापतिर्नोऽस्मान् मा हिंसीत् मा बाधताम्। यः पृथिव्या भूमेर्जनिता जनयिता स्रष्टा। 'जनिता मन्त्रे' (पा० ६।४।५३) इति णिलोपो निपात्यते। 'उदात्तयणो हल्पूर्वात्' (पा० ६।१।१७४) इति पृथिवीशब्दाद् विभक्तेरुदात्तत्वम्। यो वा यश्च सत्यधर्मा सत्यमवितथधर्मो जगतो धारणं यस्य स तादृशः प्रजापतिर्दिवमन्तरिक्षोपलक्षितान् सर्वांल्लोकान् जजान जनयामास। 'जनी प्रादुर्भावे'। णिचि

वृद्धौ 'जनीजृष्क्नसुरञ्जः' (भ्वा० धातुपा० ग० सू०) इति मित्त्वात् 'मिता ह्रस्वः' (पा० ६।४।९२) इति ह्रस्वत्वम्। ततो लिटि '…अमन्त्र०' (पा० ३।१।३५) इति निषेधादाम्प्रत्ययाभावे तिपो णलि वृद्धौ 'लिति' (पा० ६।१।१९३) इति प्रत्ययात् पूर्वस्योदात्तत्वम्। यश्च बृहतीर्महतीश्चन्द्रा आह्लादिनीरपः उदकानि जजान जनयामास। 'ऊडिदम्' (पा० ६।१।१७१) इत्यादिना अप्शब्दादुत्तरस्य शस उदात्तत्वम्। तस्मै कस्मा इत्यादि गतम्[1]॥

## हिन्दीभाषान्तर

जो पृथ्वी को उत्पन्न करने वाला है एवं जो सत्य धर्म वाला (देव) द्युलोक को उत्पन्न करता है, (तथा) जो आह्लाददायिनी, विशाल जलराशि को उत्पन्न करता है, वह हमें हिंसित न करे, (उसके अतिरिक्त) किस देव के लिए हवि से विधान करें।

## टिप्पणियाँ

१. सत्यधर्मा—सायण—सत्यमवितथो धर्मो जगतो धारणं यस्य सः, जगद् को धारण करना जिसका सत्य धर्म है। उव्वट—सत्य का धारक। महीधर—

[1] (शु० य० सं० १२।१०२)……मा मा हिंसीत्। पूर्वः प्रतिषेधार्थीय उत्तरोऽस्मदादेशः।…'जनिता मन्त्रे' (पा० ६।४।५३) इति णिचो लोपः…—(उव्वटः)॥

…वा चार्थे। यो वा यश्च दिवं व्यानड् द्युलोकमसृजत्। व्यानडिति व्याप्तिकर्मा। श्रुतौ तु सृजतेरर्थे व्याख्यातः।……यश्च चन्द्रा आह्लादिका जगत्कारणभूता अपो जलानि प्रथम आदिभूतः सन् जजानोत्पादितवान्। तद्द्वारा मनुष्यानुत्पादितवानित्यर्थः।……कीदृशः। प्रथमः शरीरी सत्यधर्मा सत्यं धरतीति सत्यस्य धारयिता स प्रजापतिर्मा हिंसीन्मा हन्तु। यतः कस्मै काय प्रजापतये हविषा हविः वयं विधेम दद्मः। हविर्दानान्मा हन्तु। क शब्दस्य सर्वनामत्वाभावात् 'स्मै' आदेशश्छान्दसः। हविषा इति विभक्तिव्यत्ययः। विधतिर्धातुर्दानार्थः।—(महीधरः)॥

टिप्पणी—यह मन्त्र शु० य० सं० १२।१०२; का० य० १३।१०१; तै० सं० ४।२।७।१ में भी मिलता है।

सत्य को धारण करने वाला या सत्य को धारण कराने वाला। पीटर्सन—सच्चा और विश्वस्त। सत्य + धर्म + अनिच् , प्रथमा, ए० व०, पुल्लिङ्ग। यह विरुद अग्नि (१।१२।७), सवितृ ( १०।३४।८ ), मित्रावरुण के लिए भी प्रयुक्त हुआ है। धर्म शब्द—धृ-धारण करना, वहन करना, कसकर पकड़ना—से बना है। तुलनीय : लैटिन-फेरो, एंग्लोसैक्सन-फेरेन-यात्रा करना, घटित होना)। इस प्रकार 'सत्यधर्मम्' का अर्थ-जो अपने चरित्र, अपनी प्रकृति में सत्य हो। ( तुलनीय : हेनरिख जिमर, फ़िलासफ़ीज ऑफ़ इण्डिया, १९५१, पृ० १६३; राधाकृष्णन्, दि हिन्दू व्यू ऑफ़ लाइफ़ १९४८, पृ० ७८; खोदा, इ० ऋ०, पृ० १९० )।

२. आपश्चन्द्राः—चन्द्राः आपः—चन्द्राः—चदि ( आह्लादन ) + रक ( उणा० २।१३ )। सायण—आह्लादक सलिल। उव्वट—( १ ) मनुष्य, ( २ ) काम्य जल। महीधर-जगत् के कारण आह्लादक जल। पीटर्सन-देदीप्यमान जल। शतपथ में 'मनुष्या वा आपश्चन्द्राः'-७।३।१।२०-मनुष्य ही आह्लादक जल हैं—कहा गया है। वहीं इसका निर्देश भी किया गया है कि मनुष्यों को 'आपश्चन्द्राः' क्यो कहा गया है। जागतिक सृष्टिरचना में मनुष्य श्रेष्ठ है अतएव वह जल के समान सृष्टि का अग्रज है—यो मनुष्यान् प्रथमोऽसृजतेत्येतत् , श० वही।

उव्वट के अनुसार पितृमार्ग का अनुसरण करने वाले मनुष्य यज्ञ के द्वारा चन्द्रलोक में पहुँचते हैं, अतः श० ब्रा० में मनुष्यो को 'आपश्चन्द्राः' कहा गया है-'मनुष्या एव हि यज्ञेनाप्नुवन्ति चन्द्रलोकं पितृमार्गानुसारिणः'। उव्वट का एक अन्य विचार भी है—मनुष्य की रचना जल से होती है, अतएव जो कारण में है वही कार्य में भी है। लक्षणा से 'आपश्चन्द्राः' कहने से मनुष्य का बोध हो जाता है। महीधर ने भी इन विचारों में उव्वट का अनुसरण किया है ॥ ९ ॥

प्रजा॑पते॒ न त्वदे॒तान्य॒न्यो विश्वा॑

जा॒ता॒नि॒ परि॒ ता ब॑भूव।

यत्का॑मास्ते जुहु॒मस्तन्नो॑ अस्तु

व॒यं स्या॑म॒ पत॑यो र॒यी॒णाम् ॥ १० ॥

## पदपाठः

प्रजाऽपते । न । त्वत् । एतानि । अन्यः । विश्वा । जातानि । परि । ता । बभूव । यत्ऽकामाः । ते । जुहुमः । तत् । नः । अस्तु । वयम् । स्याम । पतयः । रयीणाम् ॥ १० ॥

## सायणभाष्यम् १०

इळादधाख्य इष्टययने प्राजापत्यस्य हविषः 'प्रजापते' इत्येषानुवाक्या । सूत्रितं च—"प्राजापत्य इळादधः प्रजापते न त्वदेतान्यन्यः" ( आश्वा० श्रौ० २।१४ ) इति । केशनखकीटादिभिर्दुष्टानि हवींष्यनयैवाप्सु प्रक्षिपेत् । सूत्रितं च—"अपोऽभ्यवहरेयुः प्रजापते न त्वदेतान्यन्यः" ( आश्व० श्रौ० ३।१० ) इति । चौलादिकर्मस्वप्येषा होमार्था । सूत्रितं च—"तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयादग्न आयूँषि पवस इति तिसृभिः प्रजापते न त्वदेतान्यन्य इति च" ( आ० गृ० १।४।४ ) इति ।

हे प्रजापते त्वत् त्वत्तोऽन्यः कश्चिद् एतानि इदानीं वर्तमानानि विश्वा विश्वानि सर्वाणि । 'शेश्छन्दसि बहुलम्' ( पा० ६।१।७० ) इति शेर्लोपः । जातानि प्रथमविकारभाञ्जि ता तानि सर्वाणि भूतजातानि न परि बभूव न परिगृह्णाति न व्याप्नोति । त्वमेवैतानि परिगृह्य स्रष्टुं शक्नोषि, इति भावः । परिपूर्वो भवतिः परिग्रहार्थः । वयं च यत्कामा यत्फलं कामयमानास्ते तुभ्यं जुहुमो हवींषि प्रयच्छामस्तत्फलं नोऽस्माकमस्तु भवतु । तथा वयं रयीणां धनानां पतय ईश्वराः स्याम भवेम । 'नामन्यतरस्याम्' ( पा० ६।१।१७७ ) इति नाम उदात्तत्वम् ॥[1]

---

[1] ( शु० य० सं० १०।२०, २३।६५ )······'अयममुष्य पितासावस्य पिता' इति यजुः ॥ हे प्रजापते न त्वदेतान्यन्यो विश्वरूपाणि परि ता बभूव । त्वत्तोऽन्यो देवताविशेष एतानि सर्वाणि नानाजातीयानि वर्तमानकालसम्बन्धीनि रूपाणि परि समन्ततः । ता तानि च यान्युत्पन्नानि, उत्पत्स्यन्ते वा । बभूव । अत्र नकारः सम्बध्यते । न बभूव न भवत्यात्मरूपत्वेन यस्मादतो ब्रवीमि यत्कामास्ते जुहुमस्तन्नो अस्तु येन कामेन ते तव जुहुमस्तत्कामरूपमस्माकमस्तु······वयमेव स्याम भवेम पतयो रयीणां धनानाम्···—( उव्वटः )॥

( इत्यष्टमाष्टके सप्तमाध्याये चतुर्थो वर्गः )

## हिन्दीभाषान्तर

हे प्रजापति ! तुम्हारे अतिरिक्त कोई दूसरा, प्रसिद्ध इन सकल उत्पन्न (पदार्थों) के चारों ओर, अवस्थित नहीं हुआ; जिस कामना से युक्त होकर हम लोग तुम्हें पुकारते हैं, हमारी वह (कामना) पूरी हो, हमलोग धनों के स्वामी हो जायँ।

## टिप्पणी

इस मन्त्र तथा अन्य पाँच मन्त्रों–७।५२।१२, १०।२०।१, १०।१९०।१–३, का पदपाठ नहीं उपलब्ध होता (पीटर्सन, भा० १, पृ० २९०, पा० टि० भी देखिए)। अन्यत्र, इस मन्त्र के अतिरिक्त ७।५९।१२, १०।२०।१, १०।१०।१-३ ऋचाओं को पदपाठविहीन कहा गया है (पं० रघुबरमिट्ठूलाल शास्त्री, डॉ० चण्डिकाप्रसाद शुक्ल, प्राथमिकवेदसङ्ग्रहः (प्रयाग, १९५४) पृ० ४२, पा० टि०, पं० र० मि० शास्त्री)। इन दोनों उद्धरणों में केवल ७।५२।१२, ७।५९।१२ में भेद पड़ता है। पूना-संस्करण के अनुसार ७।५९।१२ ही पद पाठरहित है ७।५२।१२ नहीं। यह भी सम्भव है कि पीटर्सन-संस्करण में मुद्रणजन्य प्रमाद से अशुद्धि आ गयी हो। केगी के मत से सम्भवतः पदपाठ की रचना के अनन्तर इन्हें संहिता में प्रक्षिप्त किया गया है।

---

···हे प्रजापते त्वत् त्वत्तोऽन्यो देवताविशेषस्तान्येतानि विश्वा विश्वानि। सर्वाणि रूपाणि नानाजातीयानि वर्तमान-भूत-भविष्यत्कालविषयाणि न परिबभूव परिभवितुं समर्थो नाभूत्। परिभवः सृष्टेरप्युपलक्षणम्। त्वदन्यादेव एतानि भूतानि स्रष्टुं संहर्तुं चाप्यशक्त इत्यर्थः। अतो वयं यत्कामा येन कामेन त्वां जुहुमस्तत्कामरूपं फलं नोऽस्माकमस्तु।—(महीधरः)।

टिप्पणी—यह मन्त्र शु० य० ० १०।२०, २३।६५; का० य० ११।२९, २५।६७; तै० सं० १।८।१४।२, ३।२।५।६; अ० वेद ७।७९।४; तै० ब्रा० २।८। १।२, ३।५।७।१; नि० १०।४३ में उपलब्ध होता है।



# वाक्सूक्तम्

१० म०　　　　　　　　　　　　　　　　　　　　सू० १२५

दशममण्डले पञ्चविंशत्यधिकशततमं
[ दशमेऽनुवाके त्रयोदश ] सूक्तम् ।
( अष्टमाष्टके सप्तमाध्याये एकादशद्वादशवर्गौ )

वाग् आम्भृणी ऋषिः । वागाम्भृणी ( परमात्मना तादात्म्यमनुभवन्ती ) देवता । द्वितीयस्यां जगती शिष्टासु सप्तसु त्रिष्टुप् छन्दः ।

सायण—'अहम्' इत्यष्टर्चं त्रयोदशं सूक्तम् । अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी विदुषी स्वात्मानमस्तौत् । अतः सर्षिः । सच्चित्सुखात्मकः सर्वगतः परमात्मा देवता । तेन ह्येषा तादात्म्यमनुभवन्ती सर्वजगद्रूपेण सर्वस्याधिष्ठानत्वेन चाहमेव सर्वं भवामीति स्वात्मानं स्तौति । द्वितीया जगती, शिष्टाः सप्त त्रिष्टुभः । तथा चानुक्रान्तम्—अहमष्टौ वागाम्भृणी तुष्टावात्मानं द्वितीया जगती । गतो विनियोगः ।

अहं रुद्रेभिर्वसुभिश्चराम्य-
हमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभर्म्य-
हमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥

पदपाठः

अहम् । रुद्रेभिः । वसुऽभिः । चरामि । अहम् । आदित्यैः । उत । विश्वऽदेवैः । अहम् । मित्रावरुणा । उभा । बिभर्मि । अहम् । इन्द्राग्नी इति । अहम् । अश्विना । उभा ॥ १ ॥

सायणभाष्यम् १

अहं सूक्तस्य द्रष्ट्री वागाम्भृणी यद् ब्रह्म जगत्कारणं तद्रूपा भवन्ती रुद्रेभी रुद्रैरेकादशभिः । इत्थंभावे तृतीया । तदात्मना चरामि । एवं वसुभिरित्यादौ

तत्तदात्मना चरामि, इति योज्यम्। तथा मित्रावरुणा मित्रं च वरुणं च। 'सुपां सुलुक्....' (पा० ७।१।३९) इति द्वितीयाया आकारः। उभा उभौ अहमेव ब्रह्मीभूता बिभर्मि धारयामि। इन्द्राग्नी अप्यहमेव धारयामि। उभा उभौ अश्विना अश्विनौ अप्यहमेव धारयामि। मयि हि सर्वं जगच्छुक्तौ रजतमिवाध्यस्तं सद् दृश्यते। माया च जगदाकारेण विवर्तते। तादृश्या मायया आधारत्वेनासङ्गस्यापि ब्रह्मण उक्तस्य सर्वस्योत्पत्तिः॥

## हिन्दीभाषान्तर

मैं (वागाम्भृणी) रुद्रों तथा वसुओं के साथ चलती हूँ, मैं आदित्यों और विश्वदेवों के साथ (चलती हूँ), मैं मित्र एवं वरुण दोनों को धारण करती हूँ, मैं इन्द्र तथा अग्नि और दोनों अश्विनों को (धारण करती हूँ)।

## टिप्पणियाँ

इस सूक्त की द्रष्ट्री वाक् नामक विदुषी अम्भृण ऋषि की पुत्री है। अम्भृण ऋषि की पुत्री होने के कारण इन्हें वाग् आम्भृणी कहा जाता है। इस सूक्त में विदुषी वाक् ने आत्म-स्तवन किया है। परमात्मा के साथ तादात्म्य का अनुभव करती हुई वाक् सर्वत्र, विश्व के अणु-परमाणु में, अपने को अनुस्यूत देखती है, और उसका वर्णन अत्यन्त उदात्त शब्दों में करती है।

इस सूक्त को प्रायः विद्वानों ने दार्शनिक स्वीकारा है। यास्क ने (निरु० ७।१-२) एवंविध ऋचाओं को आध्यात्मिकता से युक्त कहा है। वाक् की महिमा से ही विश्व के समस्त व्यापार परिचालित होते हैं। अनुवर्तीयुगीन वैयाकरण तो शब्द को ही ब्रह्म मानता है।

१. रुद्रेभिः—शतपथ ब्राह्मण के अनुसार रुद्र शब्द की व्युत्पत्ति रुद् (रोना) धातु से हुई है (रुद्+रक्, उणा० २।२२)—यदरोदीत् तस्माद् रुद्रः—(श० ६।१।३।८)। तुलनीय-यदरुदत् तद्रुद्रस्य रुद्रत्वम् (बृ० आ० ३।९।४; यदरोदीत् तद्रुद्रस्य रुद्रत्वम्-इति हारिद्रवकम्) [अन्य व्युत्पत्तियों के लिए देखिए ऋ० १।१४४।१ सायणभाष्य।] रुत् दुःखं द्रावयति रुद्रः। रु गतौ—रवणं रुत् ज्ञानं राति ददाति रुद्रः। रोदयति इति रुद्रः। (महीधर, शु० य० सं० १६।१)।

ऋग्वेद में रुद्र का स्थान अत्यन्त गौण है। केवल तीन सूक्तों ( ऋ० १।११४, २।३३,७।४६ ) में इस देवता का वर्णन मिलता है। वेबर रुद्र को झंझा और तूफान का देवता स्वीकारते हैं। हिलब्रान्त के अनुसार इनका सम्बन्ध किसी विशेष नक्षत्र से है और ये ग्रीष्म के देवता हैं। श्रोदर के विचार में मृतात्माओं के प्रधान को रुद्र देवता बना दिया गया, क्योंकि मृत आत्माएँ आँधी के साथ उड़कर ऊपर जाती हैं। ओल्डेनबर्ग उपर्युक्त मत को स्वीकारते हुए रुद्र को पर्वत एवं अरण्यों का देवता मानते हैं ( कीथ, रिलीजन एण्ड फिलासफी ऑफ वेद, पृ० १४६–१४७ )। रुद्र का नाम ऋग्वेद में लगभग ७५ बार आया है। इसका चित्रण उग्र एवं हिंसक देवता के रूप में हुआ है। क्रोधी होते हुए भी वे अपने पूजकों का हित-विधान करते हैं। ई० आर्बमान, रुद्र, ( उप्सला, १९२२ ) प्र० परिच्छेद, ( मैकदोनेल; वैदिक माइथॉलॉजी, पृ० ७४ आदि, वैदिक रीडर, पृ० ५६ )। रुद्र मरुतों का पिता है ( ऋ० १।८५ )। मरुतों की माता गोरूपा पृश्नि है। शतपथ में अग्नि को रुद्र, शर्व, पशुपति, उग्र, अशनि, भव, महादेव, ईशान कहा गया है। सम्भवतः इस कल्पना का आधार 'त्वमग्ने रुद्रो...' ( ऋ० २।१।६ ) में प्रयुक्त रुद्र पद है। इसे वृषभ एवं रक्तवर्ण 'अरुष' ( सूकर ) ( ऋ० १।११४।५ ) कहा गया है। कालान्तर में शिव और रुद्र का एकीकरण हुआ।

सायण इस पद का अर्थ करते हैं—११ रुद्रों के साथ। रुद्रगण में ११ देवता हैं।

२. वसुभिः—सायण–वसु नामक देवताओं के साथ। इनकी सङ्ख्या ८ है।

३. आदित्यैः—आदित्य नामक देवों के साथ। इनकी संख्या १२ है। आदित्यों की संख्या निश्चित नहीं–५, ७ और ८ आदित्यों का भी वर्णन मिलता है। ब्राह्मण-ग्रन्थों में इनकी संख्या १२ दी गयी है। ऋ० २।२७।१ में मित्र, अर्यमन्, भग, वरुण, दक्ष और अंश का उल्लेख है। १०।७२।८ में—'अष्टौ पुत्रासः अदितेः' अदिति के आठ पुत्र कहे गये हैं। वरुण एवं मार्तण्ड को उपर्युक्त परिगणित आदित्यों में मिला देने से ८ हो जाते हैं। इनमें कुछ अदिति से प्राचीनतर हैं। वरुण, मित्र, अर्यमा भारतेराणी काल से चले आ रहे हैं। हिरण्यगर्भ-सूक्त के मन्त्र १ की टिप्पणी भी देखिए।

४. विश्वदेवैः—विश्वदेवों के साथ। ऋ० ८।३५।३ में विश्वेदेवाः को तैंतीस देवता बताया गया है—विश्वैर्देवैस्त्रिभिरेकादशैः। ऋ० १।१४।३ में इनकी गणना—इन्द्रवायू, बृहस्पति, मित्र, अग्नि, पूषा, भग, आदित्यगण, मरुद्गण; ऋ० १०।६५।१ मे अग्नि, इन्द्र, वरुण, मित्र, अर्यमा, वायु, पूषा, सरस्वती, सजोषस्, आदित्य, विष्णु, मरुत्, स्वर्, बृहत्, सोम, रुद्र, अदिति और ब्रह्मणस्पति एवं ऋ० ८।२८।२ में वरुण, मित्र, अर्यमा, रातिषाच्, अग्नि, पत्नीवान्, वषट्कृत की गयी है। पीटर्सन—सब देवों के साथ। 'विश्व' में अन्त्य स्वर उदात्त—'बहुव्रीहौ विश्वं सञ्ज्ञायाम्' (पा० ६।२।१०६) ॥ १ ॥

**अहं सोममाहनसं बिभर्म्यहं**
**त्वष्टारमुत पूषणं भगम् ।**
**अहं दधामि द्रविणं हविष्मते**
**सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥**

## पदपाठः

अहम्। सोमम्। आहनसम्। बिभर्मि। अहम्। त्वष्टारम्। उत। पूषणम्। भगम्। अहम्। दधामि। द्रविणम्। हविष्मते। सुप्रऽअव्ये। यजमानाय। सुन्वते ॥ २ ॥

## सायणभाष्यम् २

आहनसमाहन्तव्यमभिषोतव्यं सोम यद्वा शत्रूणामाहन्तारं दिवि वर्तमानं देवतात्मानं सोममहमेव बिभर्मि। तथा त्वष्टारमुतापि पूषणं भगं चाहमेव बिभर्मि तथा हविष्मते हविर्भिर्युक्ताय सुप्राव्ये शोभनं हविर्देवानां प्रापयित्रे तर्पयित्रे। अवतेस्तर्पणार्थात् 'अविस्तृस्तृतन्त्रिभ्य ईः' (उणा० ३।१५८) इतीकारप्रत्ययः। चतुर्थ्येकवचने यणि। 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' (पा० ८।२।४) इति सुपः स्वरितत्वम्। सुन्वते सोमाभिषवं कुर्वते। 'शतुरनुमः' (पा० ६।१।१७३) इति चतुर्थ्या उदात्तत्वम्। ईदृशाय यजमानाय द्रविणं धनं यागफलरूपमहमेव दधामि धारयामि। एतच्च ब्रह्मणः फलदातृत्वं "फलमत उपपत्तेः" (ब्र० सू० ३।२।३८) इत्यधिकरणे भगवता भाष्यकारेण समर्थितम् ॥

## हिन्दीभाषान्तर

मैं आवेश उत्पन्न करने वाले या पराक्रमी सोम को धारण करती हूँ, और मैं त्वष्टा, पूषा तथा भग को (धारण करती हूँ), मै सोम निचोड़ते हुए हवि-प्रदाता ( एवं ) भली-भाँति सहायता के योग्य या देवों को तृप्त करने वाले यजमान के लिए धन धारण करती हूँ।

## टिप्पणियाँ

१. सोमम्—सायण—( १ ) सोमरस, ( २ ) द्युलोक में स्थित ( शत्रुओं को मारने वाला ) सोम देवता—देखिए विश्वेदेवा सूक्त के मन्त्र ३ पर टिप्पणी। सोम का आदि स्वर उदात्त होता है—'ग्रामादीनां च' ( फि० सू० २।३८ )।

२. आहनसम्—आ + हन् + असुन्, द्वितीया, ए० व०, सोम का विशेषण। सायण—( १ ) रस निचोड़ने के योग्य; ( २ ) आहन्ता, सेचक, ( ३ ) शत्रुओं का सामने से वध करने वाला, ( ४ ) निचोड़े जाते हुए, ( ५ ) स्तुति किये गये, ( ६ ) शब्दकारी, ( ७ ) नियन्ता, दण्डधारक, ( ८ ) वध करने वाला, दुःख देने वाला। (देखिए, सायणभाष्य, ऋ० २।१३।१, ४।४२।१३, ९।७५।५, १०।१०।६,८ ) यास्क—वञ्चक ( दुर्गाचार्य ); मादक, उन्मादक = आवेश में लाने वाला ( निरु० ४।१५, ५।२ )।

सेण्टपीटर्सबर्ग कोष भी इसे आ + हन् से व्युत्पन्न स्वीकार, इसका अर्थ—पीटा हुआ, निचोड़ा हुआ—प्रस्तुत करता है। नैस्सर के विचार से इसका अर्थ—फूला हुआ, भरा हुआ—है। इनके अनुसार इसका सम्बध 'घन-मोटा' से है। राजवाड़े के मत में 'आहनस्' का अर्थ—सुखदायी, प्रिय, रुचिकर—एवं 'आहनः' का—प्रिय बहन—है निरुक्त-मराठी भाषान्तर, पृ० २७२ )। सेण्टपीटर्सबर्ग कोष इस पद को भारोपीय ग्हेन्-फूलना, भरना = आधुनिक फारसी-आगन्दन्—भरना से सम्बद्ध करता है। डॉ० सिद्धेश्वर वर्मा इसे हन् धातु से निष्पन्न मानकर भारोपीय—गुहेन्—चोट करना, ग्रीक—थेइनो—मै चोट करता हूँ, के अनुरूप स्वीकारते हैं।

इस प्रकार अनेक मतवादो से दृष्टिगत होता है कि इसकी मूल धातु हन् है, जिसका अर्थ हिंसा करना, चलना है। गतिपरक अर्थ स्वीकारने पर—सोम-

पान से आविष्ट होना सद्यः उपस्थित हो जाता है। सोम की मादकता सामान्य मादकता से भिन्न है। अतएव आहनस् का अर्थ आवेश में लाने वाला–उचित प्रतीत होता है। यह अर्थ यास्क के मादक अर्थ के समीप भी है।

३. त्वष्टारम्—सायण—त्वष्टा नामक देवता को त्वक्षू तनूकरणे + तृन्, तूर्ण + अश् + तृन् (निपातनात्) (निरु० ८।१३)। त्वक्ष्—से व्युत्पत्ति की संपुष्टि ऐ० २।४ के ताष्टि = भारो० तुएक् = बुनना, परिश्रम से काम करना—से भी होती है। दूसरी व्युत्पत्ति आधुनिक विद्वानो को स्वीकार्य नहीं है (इटिमोलोज्जीज ऑफ् यास्क, पृ० ९७)। तक्ष तनूकरणे से भी यह पद निष्पन्न हो जाता है (मैकदोनेल, वै० री०, पृ० २३५)। त्विष् दीप्तौ + तृन् (उणा० २।९५, सिद्धान्तकौमुदी, तत्त्वबोधिनी)। पं० क्षेत्रेशचन्द्र चट्टोपाध्याय के अनुसार त्वष्टा—त्वष्—बनाना, काटना से व्युत्पन्न हुआ है।

त्वष्टा देवशिल्पी है। वह देवों के शस्त्र–निर्माण के लिए प्रसिद्ध है। यद्यपि उसके अन्य शारीरिक अंगों का वर्णन नहीं उपलब्ध होता तथापि हाथों अथवा भुजाओं का, जिनसे वह शस्त्र-रचना करता है, प्रायः वर्णन किया गया है। १।८५।९ में उसे इन्द्र के वज्र का निर्माण करने का श्रेय दिया गया है, जिससे वृत्र का वध कर इन्द्र ने जलधाराओं को मुक्त किया––

त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत्।
यत्त इन्द्रो नर्यपांसि कर्तवेऽहन् वृत्रं निरपामौब्जदर्णवम्॥

तुलनीय—त्वष्टा अस्मै वज्रं स्वर्यं ततक्ष, ऋ० १।३२।२; तक्षन् त्वष्टा वज्रम्, ५।३१।४; त्वष्टा'''वज्रं सहस्रभृष्टिं ववृतच्छताश्रिम्, ६।१७।१०। वह अनेक रूपों का निष्पादक है–देवस्त्वष्टा सविता विश्वरूपः; ३।५५।१९। अन्यत्र उसे गर्भ में दम्पती का निर्माता कहा गया है–गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः, ऋ० १०।१०।५। त्वष्टा गर्भ में समस्त रूप का निर्माण करता है—त्वष्टा रूपाणि पिंशतु–१०।१८४।१। वह मनुष्यों, पशुओं के गर्भस्थ बीज को विकसित करता है (१।१८८।९)। त्वष्टा के विरुद प्रायः उसके गुणों का ही ख्यापन करते हैं; व्यक्तित्व का नहीं (देखिए, मैकदोनेल, वैदिक माइथॉलॉजी पृ० ११६; ओल्डेनबर्ग Die Religion des Veda, १९२३, पृ० २३७ आदि

भी देखिए ) विश्वरूप असुर त्वष्टा का पुत्र कहा गया है ( ओल्डेन बर्ग, वही, पृ० १४१; कीथ, रिलीजन एण्ड फिलासफी ऑफ दि वेद एण्ड उपनिषद्, पृ० २०५) । अनुवर्ती ग्रन्थों में भी वह समस्त रूपों की रचना करता है—देखिए, तै० ब्रा० १।४।७।१; श० ब्रा० ११।४।३।३; अ० वे० २।२६।१ ।

४. सुप्राव्ये—सु + प्र + अव् ( सहायता करना, रक्षा करना ) + ईप्रत्ययः ( उणा० ३।१५८ ) च०, ए० व० । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' ( पा० ८।२।४ ) से सुप् को स्वरित हुआ है । सायण—देवों को शोभन हविषो से तृप्त करने वाले के लिए । अन्यत्र भी सायण इसकी उपर्युक्त व्युत्पत्ति कर 'भलीभाँति रक्षा करने वाला' अर्थ करते हैं—

सुप्राव्यं सुष्ठु प्रकारेण रक्षितारं दूतम्... । सुप्राव्यम् । सुष्ठु प्रकर्षेण अवति रक्षतीति सुप्रावीः । उपसर्गद्वयोपसृष्टादवतेरवितृस्तृतन्त्रिभ्य ईरितीकार प्रत्ययः—( सायण ) १।८३।१ । देखिए—२।२६।१; ४।२५।५-६ पर भी सायणभाष्य ।

रॉथ अपने विचार से इसका अर्थ—अति चैतन्य, सचेत, अत्यन्त अवहित, सावधान, सतर्क तथा उत्साह–उद्युक्त कहते हैं । पीटर्सन—धर्मशील, पुण्यवान्, शुचिव्रत, धर्मनिष्ठ, सदाचारी ।

सुप्राव्ये में 'व्ये' पर लगा हुआ स्वरित स्वतन्त्र स्वरित है । स्वतन्त्र स्वर के उत्तर यदि उदात्त स्वर आता है तो कम्प होता है । यदि स्वरित दीर्घ होता है तो उसे व्यक्त करने के लिए उसके आगे अंक तीन लिखकर उसके ऊपर स्वरित एवं नीचे अनुदात्त का चिह्न लगाया जाता है—३ ।

यह जगती छन्द है । जगती के प्रत्येक चरण में १२ वर्ण होते हैं । छन्द की दृष्टि से १, २, ४ चरण में परिमार्जन अनिवार्य है, अतएव प्रथम चरण में 'आहनसम्' को 'आअहनसम्', 'बिभर्म्यहम्' को 'बिभर्मि अहम्' एवं 'सुप्राव्ये' को 'सुप्राविये' पढ़ना चाहिए ॥ २ ॥

अहं राष्ट्री सङ्गमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा
भूरिस्थात्रां भूर्यावेशयन्तीम् ॥ ३ ॥

## पदपाठ

अहम् । राष्ट्री । सम्ऽगमनी । वसूनाम् । चिकितुषी । प्रथमा । यज्ञियानाम् । ताम् । मा । देवाः । वि । अदधुः । पुरुऽत्रा । भूरिऽस्थात्राम् । भूरि । आऽवेशयन्तीम् ॥ ३ ॥

## सायणभाष्यम् ३

अहं राष्ट्री । ईश्वरनामैतत् । सर्वस्य जगत ईश्वरी । तथा वसूना धनाना सङ्गमनी सङ्गमयित्र्युपासकानां प्रापयित्री । चिकितुषी यत् साक्षात् कर्त्तव्यं परं ब्रह्म तज्ज्ञातवती स्वात्मतया साक्षात्कृतवती । अतएव यज्ञियाना यज्ञार्हाणा प्रथमा मुख्या । या एवङ्गुणविशिष्टाहं ता मा भूरिस्थात्रां बहुभावेन प्रपञ्चात्मनावतिष्ठमानां भूरि भूरीणि बहूनि भूतजातान्यावेशयन्तीं जीवभावेनात्मानं प्रवेशयन्तीमीदृशीं मा पुरुत्रा बहुषु देशेषु व्यदधुर्देवा विदधति कुर्वन्ति । उक्तप्रकारेण वैश्वरूप्येणावस्थानाद् यद्यत् कुर्वन्ति तत्सर्वं मामेव कुर्वन्तीत्यर्थः ॥

## हिन्दीभाषान्तर

मैं रानी हूँ, धनों को एकत्र करने वाली हूँ, पूज्यों में प्रथम ज्ञानवती हूँ । अनेक स्थलों में स्थित तथा बहुतेरों में अपने को प्रवेश कराती हुई ( उस ) मुझे देवों ने नाना स्थलो पर पृथक् पृथक् स्थापित किया ।

## टिप्पणियाँ

१. राष्ट्री—राज् + ष्ट्रन् + ङीष् । सायण—समस्त जगत् की ईश्वरी । निघण्टु (२।२२।१) में राष्ट्री पद ईश्वर नामो में पढ़ा गया है । पीटर्सन—रानी । 'सङ्गमनी वसूनाम्' राष्ट्री का समानाधिकरण है । राज् धातु निघण्टु (२।२१।४) में ऐश्वर्ययुक्त-परक धातुओं में परिगणित है, अतः इसका अर्थ रानी उचित ही है । 'वसूना सङ्गमनी' भी इसी की पुष्टि करता है । ऐश्वर्ययुक्त रानी धनों को एकत्र ही करती है । धन के एकत्रीकरण के कारण ही वह ऐश्वर्ययुक्त है । एक अन्य स्थल पर सायण ने राष्ट्री शब्द का अर्थ राष्ट्रवान् किया है—वायुर्न राष्ट्रयत्यक्तून्, ऋ० ६।४।५—'राष्ट्रं राज्यं तद्वान्'—सायण । तुलनीय—यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवाना निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम—८।१००।१० ऋ० । 'वाग वै राष्ट्री' तै० ब्रा० २।४।३।११, ऐ० ब्रा० ४।२।

२. सङ्गमनी—सम् + गम् + णिच् + ल्युट् + ङीप्। सायण—( उपासकों को ) प्राप्त कराने वाली। पीटर्सन—एकत्र करने वाली। दामोदर सातवलेकर—एकत्र करने वाली। तुलनीय—वैवस्वतं सङ्गमनं जनानाम्—ऋ० १०।१४।१। रायो बुध्नः सङ्गमनो वसूनाम्, १०।१३९।३। तै० सं० ३।५।१।१।

३. चिकितुषी—कित् + क्वसु + ङीप्, स्त्री०, प्र०, ए० व०। सायण—( ब्रह्म का ) साक्षात्कार कर लेने वाली।

चिकितुषी प्रथमा यज्ञियानाम्—सायण ने 'चिकितुषी' तथा 'प्रथमा यज्ञियानाम्' को अलग-अलग विशेषण माना है। रॉथ, ग्रॉसमन एवं पीटर्सन के अनुसार—यज्ञियाना प्रथमा चिकितुषी—देवताओं को सर्वप्रथम जानने वाली अन्वय होना चाहिए। वस्तुतः यही योजना उचित प्रतीत होती है।

४. वि अदधुः—वि + धा + लुङ्, प्र० पु०, ब० व०। सायण करते हैं—स्थापित किया। पीटर्सन—पृथक्-पृथक् स्थापित किया।

५. पुरुत्रा—पुरु + त्रल्, स्त्री०, द्वि०, ए० व०। सायण—बहुत से देशों में, अनेक स्थानों में। पीटर्सन भी इसी अर्थ को स्वीकारते हैं।

पुरु शब्द पॄ (पालन-पूरणयोः)—पृणाति पूर्यते वा–पॄ + कुः (उणा० १।२३) अथवा पिपर्ति पालयति पूरयति वा—पॄ + कुः। अथवा पारयति पूरयति–पॄ + कुः। निघण्टु ( ३।१।३ ) में पुरु शब्द का बहुवाचक नामों में परिगणन किया गया है। त्रा—का अर्थ 'मे' मध्य में, बीच में है—पाकत्रा–ऋ० ८।१८।१५, १०।२।५; अस्मत्रा–१।१३२।२, १३७।१, ३; ४।३२।१८, ४१।१०; ८।१८।१४, ६३।४; १०।४४।३; देवत्रा—१।५०।१०, ९३।९, १०५।१०, १२८।६, १८२।५; ३।१।२२, ५।२०।१, ७।७३।५ आदि, दक्षिणत्रा ६।१८।९, मर्त्यत्रा—१।१२३।३, १६९।२; ६।४४।१०, ६२।८; ७।५२।१; पुरुषत्रा—३।३३।८, ४।१२।४। पुरुत्रा के लिए तुलनीय—वि मे पुरुत्रा पतयन्ति कामाः—३।५५।३, भूरिदा ह्यसि श्रुतः पुरुत्रा शूर वृत्रहन्, ४।३२।२१; पुरुत्रा ते मनता विष्ठितं जगत्, ६।४७।२९; अयं सो अग्निराहुतः पुरुत्रा, ७।१।१६; क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः, ८।१।७; पुरुत्रा ते वि पूर्तयो नवन्त १०।२२।९ आदि प्रयोगों के परिसर में पुरुत्रा का अर्थ 'अनेक स्थानों में, बहुत से स्थलों में' करना समुचित है। अन्यथा अर्थ

की कल्पना अन्धमति का परिचायक है । तुलनीय—अवेस्ता—पोर्डर—बहुत—हओम यश्त, यस्न ९।२५।२७ ।

६. भूरिस्थात्राम्—भूरि + स्था + त्रल् + टाप्—स्त्री०, द्वि०, ए० व० । सायण—नाना भाव से प्रपञ्च रूप में अवस्थित । पीटर्सन—मुझे हर स्थान पर निवास करवाते हुए । भूरि–भू + क्रिन् (उणादि ४।६५) । निघण्टु (३।१।४) में भूरि बहुवाचक कहा गया है ।

७. आवेशयन्तीम्—आ + विश् ( प्रवेश करना ) + णिच् + शतृ + ङीप् द्वि०, ए० व० । सायण—( जीव रूप में अपने-आपको भूतों में) प्रवेश कराती हुई । पीटर्सन—प्रविष्ट कराते हुए । दा० सा०—अनेक में आवेश उत्पन्न करने वाली ॥ ३ ॥

**मया सो अन्नमत्ति यो विपश्यति**
**यः प्राणिति य ईं शृणोत्युक्तम् ।**
**अमन्तवो मां त उप क्षियन्ति**
**श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥**

पदपाठः

**मया । सः । अन्नम् । अत्ति । यः । विऽपश्यति । यः । प्राणिति । यः । ईम् । शृणोति । उक्तम् । अमन्तवः । माम् । ते । उप । क्षियन्ति । श्रुधि । श्रुत । श्रद्धिऽवम् । ते । वदामि ॥ ४ ॥**

सायणभाष्यम् ४

योऽन्नमत्ति सा भोक्तृशक्तिरूपया मयैवान्नमत्ति । यश्च विपश्यति । आलोकयतीत्यर्थः । यश्च प्राणिति श्वासोच्छ्वासरूपं व्यापारं करोति सोऽपि मयैव । यश्चोक्तं शृणोति । 'श्रु श्रवणे' । 'श्रुवः शृच' (पा० ३।१।७४) इति श्नुप्रत्ययः । धातोः शृभावः । य ईदृशीमन्तर्यामिरूपेण स्थितां मां न जानन्ति ते अमन्तवोऽमन्यमाना अजानन्त उपक्षियन्ति उपक्षीणाः संसारेण हीनाः भवन्ति । मनेरौणा-

दिकस्तुप्रत्ययः (उणा० १।७५)। नञ्समासे व्यत्ययेनान्तोदात्तत्वम्। यद्वा। भावे तु प्रत्ययः। ततो बहुव्रीहौ 'नञ्सुभ्याम्' (पा० ६।२।१७२) इत्युत्तरपदान्तोदात्तत्वम्। मामन्तवो मद्विषयज्ञानरहिता इत्यर्थः। हे श्रुत विश्रुत सखे! श्रुधि। मया वक्ष्यमाणं शृणु। छान्दसो विकरणस्य लुक्। 'श्रुशृणुपृकृवृभ्यः' (पा० ६।४।१०२) इति हेर्धिभावः। किं तच्छ्रोतव्यम्। श्रद्धिवम्। श्रद्धिः श्रद्धा। तया युक्तम्। श्रद्धायत्नेन लभ्यमित्यर्थः। 'श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते' (पा० १।४।५७ वा०—२) इति श्रच्छब्दस्योपसर्गवद्वर्तमानत्वात् 'उपसर्गे घोः किः' (पा० ३।३।९२) इति किप्रत्ययः। मत्वर्थीयो वः। ईदृशं ब्रह्मात्मकं वस्तु ते तुभ्यं वदामि उपदिशामि ॥

## हिन्दीभाषान्तर

जो अन्न खाता है, जो देखता (और समझता) है, जो श्वास लेता है, जो इस कहे हुए को सुनता है, वह मेरे द्वारा ही होता है। मुझे न मानने वाले वे नष्ट हो जाते हैं, हे विश्रुत! सुनो, तुम्हारे लिए विश्वसनीय (बात) कहती हूँ।

## टिप्पणियाँ

१. सो अन्नम्—सः + अन्नम्—संस्कृत में 'एङः पदान्तादति' से, ऐसे स्थलों पर अ की प्रत्यक्ष सत्ता समाप्त कर उसे—ऽ—चिह्न से अभिव्यक्त किया जाता है। वैदिक संस्कृत में उभयथा रूप उपलब्ध होते हैं। विद्वानों का अभिमत है कि पूर्वरूप वाले पद अर्वाचीन हैं। (पाणिनि का–'प्रकृत्यान्तःपादमव्यपरे'–६।१।११५ सूत्र भी देखिए)।

पीटर्सन का कथन है कि इस मन्त्र का अन्वय करने में प्रायः सभी विद्वान् सायण का अनुसरण करते हैं। इनके विचार से सम्बन्ध उपवाक्यों एवं प्रथम उपवाक्य–'सो अन्नमत्ति' में कोई भेद नहीं है। परन्तु ध्यातव्य है कि यहाँ–जो देखता है, जो साँस लेता है, जो सुनता है वह दैव संसार से अन्न ग्रहण करता है–अर्थ अभीष्ट है। तुलनीय : अग्रिम उपवाक्य—'अमन्तवो मां त उपक्षियन्ति।'

वस्तुतः यहाँ इस प्रकार अन्वय करना चाहिए—(यो) अन्नमत्ति, यो विपश्यति, यः प्राणिति, य ईं शृणोत्युक्तम्, मया सः (क्रियते इति शेषः)। यहाँ भाव यह है कि जो कुछ भी इस विश्व में प्राणी करता है, वह सब मैं

( वाग् या वागाम्भृणी ) स्वयं करती हूँ। समस्त वाक्यों का विधेय 'मया सः' है। 'यः' के द्वारा निर्दिष्ट 'सः' पद है–यत्तदोर्नित्यसम्बन्धः। अन्न की व्युत्पत्ति–अद् ( खाना ) + क्तः।

२. अमन्तवः—अ + मन् ( मानना, मनन करना ) + तु; (उणा० १।७९), प्रथमा, ब० व०। नञ्समास में व्यत्यय से अन्तोदात्त है अथवा भाव में तु प्रत्यय कर ब० व्री० समास कर 'नञ्सुभ्याम्' ( पा० ६।२।१७२ ) से उत्तरपद के अन्त में उदात्त हुआ है। सायण—( इस प्रकार अन्तर्यामी रूप में वर्तमान मुझे ) न मानने वाले; न जानने वाले। पीटर्सन–न जानने वाले। तुलनीय—'अमन्यमानाञ्छर्वा जघान' ( ऋ० २।१२।१० )। अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः ( ऋ० १०।२२।८ )—कर्म न करने वाले, दूसरे व्रत में स्थित अमानुषः हमें न जानने वाले ( वा अवमानना करने वाले ) दस्यु··· ( को इन्द्र ! मारो। )—में 'अमन्तु' पद। यहाँ सायण 'अमन्तु' को अव + मन् + तु से व्युत्पन्न करते हैं। अव् उपसर्ग का वकार लुप्त हो गया है—अमन्तुः अज्ञाता। यद्वा। अत्र अवत्युपसर्गस्य वकारलोपो द्रष्टव्यः। अवमन्तुरवमन्ताभिभविता। अमन्तु अमन्ता का वैदिक रूप है। अ पूर्वक मन् धातु का इस अर्थ में प्रयोग—अभि ये नो मर्तासो अमन्ति ( ऋ० ७।२५।२ )—जो मर्त्य सम्मुख आकर हमें अभिभूत करते हैं ( नहीं मानते हैं, नहीं जानते हैं )—अभि अभिमुखाः सन्तः···अमन्ति अभिभवन्ति ( सायण )।

३. उप क्षियन्ति—क्षि ( नष्ट होना, क्षीण होना ) + लट्, प्र० पु०, ब० व०। सायण—उपक्षीण होते हैं, संसाररहित हो जाते हैं। पीटर्सन—मेरे नियन्त्रण में हैं, शासन में हैं। दा० सा०—नष्ट हो जाते हैं।

४. श्रुधि—शृणु श्रु + लोट् [ 'हि' को श्रुशृणुपृकृवृभ्यः' (पा० ६।४।१०२) से 'धि' हुआ है, श्रु के स्थान पर 'श्रुवः शृ च' ( पा० ३।१।७४ ) से श्रु के स्थान पर होने वाले शृ का छान्दस् लोप ]। सुनो।

५. श्रुत—श्रु + क्तः, सम्बोधन, ए० व०। श्रु के लोट् मध्यम पुरुष बहुवचन का रूप मानना कथमपि सगत नहीं माना जा सकता। तुलनीय–श्रुत श्रावय चर्षणिभ्यः–हे श्रुत विश्रुतेन्द्र चर्षणिभ्यः···( सायण )–ऋ० ६।२१।९। सायण का

इस पद को सम्बोधन परक स्वीकारना सर्वथा उचित है। रनू इसका अर्थ प्रसिद्ध करते हैं (उद्धृत, खोदा स्टाइलिस्टिक रिपीटीशन इन वेद, पृ० २४२)।

लुडविग, रॉथ तथा ग्रॉसमन का अनुसरण करते हुए, यहाँ सायण की प्रतिकूलता करते हैं। इनके विचार से 'श्रुत' एवं 'श्रद्धिवम्' को एक साथ मिलाकर 'श्रुतश्रद्धिवम्' पद मानना चाहिए। तदनुसार अर्थ होगा—परम्परा से विश्वसनीय। परन्तु यह मत असंगत है; क्योंकि भारतीय परम्परा इन दोनों शब्दों की अलग स्थिति ही स्वीकारती है (देखिए पदपाठ)। इसे सम्बोधन मानने पर 'ते' का इससे वैषम्य भी नहीं रहेगा—श्रुत! श्रुधि, ते श्रद्धिवं वदामि—विश्न! सुनो, तुम्हारे लिए विश्वास के योग्य बात कहती हूँ।

६. श्रद्धिवम्—श्रत् + किः ['श्रदन्तरोरुपसर्गवद्वृत्तिरिष्यते' (पा० १।४।५७—वा० ८) से श्रत् को उपसर्ग के समान मानकर 'उपसर्गे घोः किः' (पा० ३।३।९२) से 'कि' प्रत्यय] श्रद्धिः-विश्वास (अनुवर्ती काल में इसी शब्द से आदरार्थक श्रद्धा)। श्रद्धि + मतुप्—विश्वास के योग्य, विश्वसनीय। सायण—श्रद्धा से प्राप्तव्य। पीटर्सन—सत्य, सच्चा। देखिए—इन्द्रसूक्त के मन्त्र ५ में श्रत् पर टिप्पणी ॥ ४ ॥

अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तन्तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ ५ ॥

पदपाठः

अहम्। एव। स्वयम्। इदम्। वदामि। जुष्टम्। देवेभिः। उत। मानुषेभिः। यम्। कामये। तम्ऽतम्। उग्रम्। कृणोमि। तम्। ब्रह्माणम्। तम्। ऋषिम्। तम्। सुऽमेधाम् ॥ ५ ॥

सायणभाष्यम् ५

अहं स्वयमेवेदं वस्तु ब्रह्मात्मकं वदामि उपदिशामि। देवेभिर्देवैरिन्द्रादिभिरपि जुष्टं सेवितमुतापि च मानुषेभिः मनुष्यैरपि जुष्टम्। ईदृग्वस्त्वात्मिकाहं यं कामये

यं पुरुषं रक्षितुमहं वाञ्छामि तं तं पुरुषमुग्रं कृणोमि सर्वेभ्योऽधिकं करोमि । तमेव ब्रह्माणं स्रष्टारं करोमि । तमेव ऋषिमतीन्द्रियार्थदर्शिनं करोमि तमेव सुमेधा शोभनप्रज्ञं च करोमि ॥ ( इत्येकादशो वर्गः )

## हिन्दीभाषान्तर

मैं स्वयं ही देवों और मनुष्यों के लिए प्रिय इसे कहती हूँ। जिसे-जिसे चाहती हूँ, उसे-उसे बलयुक्त, उसे ब्रह्मा, उसे ऋषि, उसे ज्ञानी बनाती हूँ।

## टिप्पणियाँ

१. जुष्टम्—जुष् ( प्रीति करना, सेवन करना ) + क्तः—प्रिय, संप्रीतिकर। सायण—सेवित ( देवों तथा मनुष्यों के द्वारा )। तुलनीय—जुश्त ( दो, जोड़ा ), और उससे विकसित अनुवर्ती शब्द—दोस्त ( मित्र )। पं० क्षेत्रेशचन्द्र चट्टोपाध्याय के मत में जुष् का प्राचीन अर्थ पसंद करना है। सायण 'इदम्' का अर्थ ब्रह्मात्मक पदार्थ करते हैं। जुष्ट शब्द में आदिस्वर उदात्त होता है— 'जुष्टार्पिते च छन्दसि' ( पा० ६।१।१०९ ) 'नित्यं मन्त्रे' ( पा० ६।१।२१० )।

२. उग्रम्—उच् ( संघर्ष करना, समवेत होना ) + रन् ( उणा० २।२८ )। सायण—सर्वश्रेष्ठ, सर्वाधिक। पीटर्सन—बलवान्।

३. ब्रह्माणम्—बृंहि ( वृद्धि करना, बढ़ना ) + मनिन् ( उणा० ४।१४६ ) बृंह धातु से भी यह शब्द निष्पन्न किया जा सकता है। ब्रह्मन् शब्द का मूल अर्थ मन्त्र था, अनुक्रम से इसका प्रयोग मन्त्ररचयिता के लिए भी होने लगा। प्रस्तुत अंश में इसका प्रयोग 'मन्त्ररचना करने वाले' के अर्थ में हुआ है। सायण—स्रष्टा। पीटर्सन—ब्रह्मन्। सायण का अर्थ पौराणिक आयामों से प्रतिबद्ध है। इन्द्रसूक्त के मन्त्र ६ में 'ब्रह्मणः' पर टिप्पणी भी देखिए।

म्योर ( ओरिजिनल संस्कृत टेक्स्ट्स् १, पृ० २४६ ) के अनुसार ब्राह्मण जन्म अथवा स्वभाव से नहीं होता था अपितु देवी की कृपा एवं प्रेरणा से ही उस पद पर पहुँच पाता था। इस बात का संकेत इस मन्त्र में मिलता है। ब्राह्मण को ब्राह्मण होने के लिए देवी की अपेक्षा नहीं रहती, अतएव यहाँ ब्रह्मन् ब्राह्मण का द्योतक नहीं है ( उद्धृत, पीटर्सन, भा० १, पृ० २९४ )।

४. ऋषिम्—ऋषी (गत्यर्थक) + इन् (उणा० ४।१२९), द्वि०, ए० व०। श्रम एवं तपस्या के कारण मनुष्य ऋषि होता है—ये यत्पुरास्मात् सर्वस्माद् इदमिच्छन्तः श्रमेण तपसारिषन् तस्माद् ऋषयः—श० ब्रा० ६।१।१।१। तपस्या करना-पर्यालोचन—ऋषिकर्म है—पूर्वे सप्त ऋषयस्तपसे ये निषेदुः, १०।१०९।४—ऋ०। मन्त्रद्रष्टा ही ऋषि है—ऋषिर्दर्शनात् स्तोमान् ददर्शेत्यौपमन्यवः—(निरु० २।३।३)। ऋषिः मन्त्रद्रष्टा गत्यर्थत्वात् ऋषेर्ज्ञानार्थत्वात् मन्त्रं दृष्टवन्त ऋषयः—श्वेतवनवासिवृत्ति, उणा० ४।१२९।

५. सुमेधाम्—शोभना मेधा यस्य स तम्। अच्छी मेधावाला। धारणावती बुद्धि को मेधा कहते हैं। ज्ञानी, मेधावी। सायण—अच्छी प्रज्ञा वाला। पीटर्सन—बुद्धिमान्॥ ॥

अहं रुद्राय धनुरा तनोमि
ब्रह्मद्विषे शरवे हन्तवा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश॥ ६॥

पदपाठः

अहम्। रुद्राय। धनुः। आ। तनोमि। ब्रह्मऽद्विषे। शरवे। हन्तवै। ऊँ इति। अहम्। जनाय। सऽमदम्। कृणोमि। अहम्। द्यावापृथिवी इति। आ। विवेश॥ ६॥

सायणभाष्यम् ६

पुरा त्रिपुरविजयसमये रुद्राय रुद्रस्य। षष्ठ्यर्थे चतुर्थी। महादेवस्य धनुश्चापमहमातनोमि ज्ययाततं करोमि। किमर्थम्। ब्रह्मद्विषे ब्राह्मणानां द्वेष्टारं शरवे शरु हिंसकं त्रिपुरनिवासिनमसुरं हन्तवे हन्तुं हिंसितुम्। हन्तेः 'तुमर्थे सेसेन्...' (पा० ३।४।९) इति तवैप्रत्ययः। 'अन्तश्च तवै युगपत्' (पा० ६।१।२००) इत्याद्यन्तयोर्युगपदुदात्तत्वम्। 'शॄ हिंसायाम्' इत्यस्मात् 'शॄस्वृस्निहि' इत्यादिना उप्रत्ययः। 'क्रियाग्रहणं कर्त्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी। उशब्दः पूरकः। अहमेव समदम्। समानं माद्यन्त्यस्मिन्निति समत्

संङ्ग्रामः। स्तोतृजनार्थं शत्रुभिः सह सङ्ग्राममहमेव कृणोमि करोमि। तथा द्यावापृथिवीं दिवं च पृथिवीं चान्तर्यामितयाहमेवाविवेश। प्रविष्टवती।

## हिन्दीभाषान्तर

ब्रह्मद्वेषी हिंसक को मारने के निमित्त मै रुद्र के लिए धनुष तान देती हूँ, मैं मनुष्यों के लिए युद्ध करती हूँ, (तथा) द्युलोक एवं पृथ्वीलोक में समायी हुई हूँ।

## टिप्पणियाँ

१. रुद्राय—रुद्र के लिए। रुद्र पर टिप्पणी देखिए इसी सूक्त के मन्त्र १ में। सायण—रुद्र का ( धनुष् ) [ त्रिपुर-विजय के अवसर पर महादेव का धनुष् तानती हूँ ]। पौराणिक शिव एवं रुद्र का यद्यपि एकीकरण हुआ है तथापि वैदिक रुद्र, महादेव से सर्वथा भिन्न हैं। सायण यहाँ अपने अर्थ में पौराणिक गाथाओं की ओर उन्मुख हैं, जो सर्वथा संगत स्वीकारा जा सकता है। ऋ० २।३३।१४, १।११४।१० में रुद्र के धनुष् एवं हेति मारक कहे गये हैं। सायण 'रुद्राय' में षष्ठी अर्थ में चतुर्थी मानते हैं। षष्ठी स्वीकारने पर रुद्र की अशक्ति का बोध सम्भव नहीं। वस्तुतः वहाँ कथ्य यह है कि धनुष् तानने में समर्थ इस ऋषि के कारण ही हैं, अतएव चतुर्थी मानना ही उचित है।

२. धनुः—धनुष् का द्वि०, ए० व०। धनुष् को। धन् (शब्द करना) + उस् ( उणा० २।११७ )। धन्व् ( गत्यर्थक या बधार्थक ) + उस ( धन्वन्ति, अपनयन्ति अस्मादिषव घ्नन्ति वा )। क्षीरस्वामी—इस शब्द को धनि मारणार्थक से निष्पन्न करते हैं। धन्व् ( जाना, हिंसा करना ) + उस निरु० ९।१६ )। डॉ० सिद्धेश्वर वर्मा इसे भारोपीय *धनुओ *या धोनुओ—वृक्ष के समकक्ष स्वीकारते हैं।

३. ब्रह्मद्विषे—ब्रह्म द्वेष्टि—ब्रह्म + द्विष् + क्विप्, चतुर्थी, ए० व०। सायण—ब्राह्मणों के द्वेषी को। पीटर्सन—ईश्वरद्वेषी। मन्त्रद्वेषी अर्थ अधिक उपयुक्त है—तुलनीय—ब्रह्मद्विषे तपुषि हेतिमस्य, ऋ० ३।३०।१७, ६।५२।३, ब्रह्मद्विषे शोचय क्षामपश्च, ६।२२।८, ब्रह्मद्विषे क्रव्यादे घोरचक्षसे...७।१०४।२।

४. हन्तवे—हन् + तवै—"तुमर्थे सेसेन्...." ( पा० ३।४।९ )। 'अन्तश्च तवै युगपत्' ( पा० ६।१।२०० ) से आदि, अन्त के दोनों वर्णों में उदात्त।

५. शरवे—शृ (हिंसा करना)+उः ( उणा० १।१० ) । सायण–हिंसक। पीटर्सन—बाण, अस्त्र—१।१००।१८, २।१२।१० में सायण ने शरु का आ अर्थ वज्र किया है । शरु का हिंसक अर्थ में प्रयोग–अपो षु ण इयं शरुरादित्या अप दुर्मतिः—८।६७।१५ ऋ०, मा नो हेतिर्विवस्वत आदित्याः कृत्रिमा शरुः–८।६७।२० । इन्द्रसूक्त के मन्त्र १० पर टिप्पणी देखिए ।

६. उ—पदपाठ में 'सर्वदा ऊँ इति' लिखा जाता है । निश्चय ।

७. कृणोमि—कृ+लट्, उ० पु०, ए० व० । वैदिक रूप । पीटर्सन—शरवे को प्रथमान्त मान पूर्वार्द्ध का इस प्रकार अर्थ करते हैं—मैं रुद्र के लिए धनुष् तानती हूँ, जिससे उसके बाण ईश्वरद्वेषी मनुष्य को काट डालें ॥ ६ ॥

अहं सुवे पितरमस्य मूर्धन्
मम योनिरप्स्वन्तः समुद्रे ।
ततो वि तिष्ठे भुवनानु
विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ॥ ७ ॥

पदपाठः

अहम् । सुवे । पितरम् । अस्य । मूर्धन् । मम । योनिः । अप्ऽसु । अन्तरिति । समुद्रे । ततः । वि । तिष्ठे । भुवना । अनु । विश्वा । उत । अमूम् । द्याम् । वर्ष्मणा । उप । स्पृशामि ॥ ७ ॥

सायणभाष्यम् ७

"द्यौः पिता" ( तै० ब्रा० ३।७।५।४ ) इति श्रुतेः पिता द्यौः । पितरं दिवमहं सुवे प्रसुवे जनयामि । "आत्मन आकाशः सम्भूतः" (तै० आ० ८।१) इति श्रुतेः । कुत्रेति तदाह । अस्य परमात्मनो मूर्धन् मूर्धन्युपरि । कारणभूते । तस्मिन् हि वियदादिकार्यजातं सर्वं वर्तते तन्तुषु पट इव । मम च योनिः कारणं समुद्रे । समुद्द्रवन्त्यस्माद् भूतजातानीति समुद्रः परमात्मा तस्मिन् । अप्सु व्यापनशीलासु धीवृत्तिष्वन्तर्मध्ये यद् ब्रह्म चैतन्यं तन्मम कारणमित्यर्थः । यत ईदृग्भूताहमस्मि ततो हेतोर्विश्वा विश्वानि सर्वाणि भुवनानि भूतजातान्यनुप्रविश्य

वितिष्ठे। विविधं व्याप्य तिष्ठामि। 'समवप्रविभ्यः स्थः' (पा० १।३।२२) इत्यात्मनेपदम्। उतापि चामूं द्यां विप्रकृष्टदेशेऽवस्थितं स्वर्गलोकम्। उपलक्षणमेतत्। एतदुपलक्षितं कृत्स्नं विकारजातं वर्ष्मणा कारणभूतेन मायात्मकेन मदीयेन देहेन उप स्पृशामि। यद्वा अस्य भूतस्य (भूलोकस्य) मूर्धन् मूर्धन्युपर्यहं पितरमाकाशं सुवे। समुद्रे जलधावप्सूदकेष्वन्तर्मध्ये मम योनिः कारणभूतोऽम्भृणाख्य ऋषिर्वर्तते। यद्वा। समुद्रेऽन्तरिक्षेऽप्स्वम्मयेषु देवशरीरेषु मम कारणभूतं ब्रह्म चैतन्यं वर्तते। ततोऽहं कारणात्मिका सती सर्वाणि भुवनानि व्याप्नोमि। अन्यत् समानम्॥

## हिन्दीभाषान्तर

मैं इस (संसार) के ऊपर द्युपिता को उत्पन्न करती हूँ, मेरा उत्पत्ति-स्थान जल के भीतर समुद्र में है; वहाँ से मै सकल भुवनों में पृथक्-पृथक् अवतरण करती तथा इस द्युलोक को चूड़ा के द्वारा समीप से परसती हूँ।

## टिप्पणियाँ

१. पितरम्—पिता को। द्यौस् पिता है—'द्यौः पिता' (तै० ब्रा० ३।७।५।४)। मनुष्य की धार्मिक पिपासा ने भूमि, द्युलोक और उन पर स्थित अनेक पदार्थों में देवत्व का आरोपण किया (हाप्किन्स्—ओरिजिन् एण्ड इवोल्यूशन ऑफ रिलीजन, पृ० १३ सोदरब्लॉम, दि लिविंग गाड्, पृ० २१)। सर्वत्र प्राकृतयुगीन संस्कृतियों में इस प्रकार की कल्पना दृष्टिगत होती है (तर्कतीर्थ लक्ष्मणशास्त्री जोशी, हिन्दू धर्म की समीक्षा) दिव् धातु से ही द्यौस् शब्द निष्पन्न होता है। इस धातु से निष्पन्न शब्द भारोपीय युग से उपलब्ध होते हैं—संस्कृत देव <लैटिन दिउस्<नार्वे की प्राचीन धार्मिक गाथाओं में तिवर। इसी प्रकार संस्कृत द्यौस्पितर <ग्रीक जेउसपातेर<रोमी जुपिटर के रूप में द्यौस् पिता के महत्त्व का आकलन किया जा सकता है।

२. अस्य मूर्धन्—सायण—(१) इस परमात्मा के ऊपर, (क्योंकि इसमें निखिल आकाश आदि कार्य समूह रहता है। (२) इस भूतलोक के ऊपर, (३) इस भूलोक के ऊपर। पीटर्सन—समस्त संसार के ऊपर।

मुह् वैचित्त्ये+कन् (उणा० १।१६५) रॉथ—उसके सिर पर; जो सब में एक है। किस नाम से ईश्वर का कथन किया जाय यह अनिश्चित है।

३. योनिः—यु मिश्रणे + निः (उणा० ४।५१)। सायण—(१) कारण, (२) कारणभूत अम्भृण ऋषि, (३) कारणभूत ब्रह्म चैतन्य। पीटर्सन—बैठने का स्थान।

४. अप्सु अन्तः समुद्रे—सायण—समुद्रवन्ति अस्माद् भूतजातानि—इति समुद्रः—परमात्मा। अप्सु—व्यापक धीवृत्ति के—अन्तः—(१) मध्य में (स्थित चैतन्य ब्रह्म)। (२) समुद्र के जल में, (३) अन्तरिक्ष के जलमय देवशरीरों में।

५. वितिष्ठे—वि + स्था + लट्, उ० पु०, ए० व०। 'समवप्रविभ्यः स्थः' (पा० १।३।२२) से आत्मनेपद। पृथक्-पृथक् स्थित हूँ।

६. वर्ष्मणा—वृष् + मनिन् (उणा० ४।१४५)। सायण—कारणभूत मायात्मक वाक्शरीर से। पीटर्सन—सिर से। इसका भी मूल वही है, जो वर्षीयस् एवं वर्षिष्ठ का, अतएव इसका अर्थ ऊँचाई, उच्चतम स्थान, शिर का मुकुट होता है। इन्हीं पर आधृत हो पं० क्षेत्रेशचन्द्र चट्टोपाध्याय का मत है कि इसका अर्थ चूडा, शिखा करना समुचित है। सायण ने १०।९३।४ में 'वर्ष्माणम्' का अर्थ समुच्छ्रित प्रदेश किया है ॥ ७ ॥

**अहमेव वातं इव प्र वाम्यारभमाणा भुवनानि विश्वा।**
**परो दिवा पर एना पृथिव्यैतावती महिना सं बभूव॥८॥**

### पदपाठः

**अहम्। एव। वातःऽइव। प्र। वामि। आऽरभमाणा। भुवनानि। विश्वा। परः। दिवा। परः। एना। पृथिव्या। एतावती। महिना। सम्। बभूव ॥ ८ ॥**

### सायणभाष्यम् ८

विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि कार्याणि आरभमाणा कारणरूपेणोत्पादयन्ती अहमेव परेणानधिष्ठिता स्वयमेव प्र वामि प्रवर्ते। वात इव। यथा वातः परेणाप्रेरितः सन् स्वेच्छयैव प्रवाति तद्वत्। उक्तं सर्वं निगमयति। परो दिवा। पर इति सकारान्तं परस्तादित्यर्थे वर्तते यथा अध इति अधस्तादित्यर्थे। तद्योगे च तृतीया सर्वत्र दृश्यते। दिवा आकाशस्य परस्तात्। एना

पृथिव्या। 'द्वितीयाटौस्वेनः' (पा० २।४।३४) इतीदम एनादेशः। [ सुपां सुलुक्…' (पा० ७।१।३९) तृतीयाया अजादेशः। ] अस्याः पृथिव्याः परः परस्तात्। द्यावापृथिव्योरुपादानमुपलक्षणम्। एतदुपलक्षितात् सर्वस्माद् विकारजातात् परस्ताद् वर्तमानासङ्गोदासीनकूटस्थब्रह्मचैतन्यरूपाहं महिना महिम्ना एतावती सम्बभूव। एतच्छब्देनोक्त सर्वं परामृश्यते। एतत्परिमाणमस्याः। 'यत्तदेतेभ्यः परिमाणे'—(पा० ५।२।३९) इति वतुप्। 'आ सर्वनाम्नः' (पा० ६।३।९१) इत्यात्वम्। सर्वजगदात्मनाहं सम्भूतास्मि। महच्छब्दादिमनिचि 'टेः' (पा० ६।४।१५५) टिलोपः। ततस्तृतीयायामुदात्तनिवृत्तिस्वरेण तस्या उदात्तत्वम् (पा० ६।१।१६८)। छान्दसो मलोपः॥

( इति द्वादशो वर्गः )

## हिन्दीभाषान्तर

मैं ही सकल भुवनों को प्रारम्भ करती हुई, वात के सदृश प्रवहित हूँ। मैं द्युलोक से परे, (तथा) इस पृथ्वी से परे हूँ। (मैं) अपनी महिमा से इतनी हो गयी हूँ।

## टिप्पणियाँ

यह सूक्त अथर्ववेद ३।३० में है, यत्र-तत्र कुछ परिवर्तन भी है। इस सूक्त से वैदिक नारी की सामाजिक स्थिति की महत्ता का भी प्रतिपादन होता है॥८॥

# पुरुषसूक्तम्

१० म०　　　　　　　　　　　　　　　　　　　　　　　सू० ९०

### दशममण्डले नवतितमं

### ( सप्तमेऽनुवाके षष्ठं ) सूक्तम्

### ( अष्टमाष्टके सप्तदशाष्टादशैकोनविंशवर्गाः )

नारायण ऋषिः । पुरुषो देवता । अन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः ।

सायणः—'सहस्रशीर्षा' इति षोडशर्चं षष्ठं सूक्तम् । नारायणो नामर्षिरन्त्या त्रिष्टुप् शिष्टा अनुष्टुभः । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः 'पुरुषान्न परं किञ्चित्' (क० उ० १।३।११) इत्यादिश्रुतिषु प्रसिद्धः स देवता । तथा चानुक्रान्तं—'सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु' इति । गतो विनियोगः ॥

**स॒हस्र॑शीर्षा॒ पुरु॑षः सहस्रा॒क्षः स॒हस्र॑पात् ।**
**स भूमिं॑ वि॒श्वतो॑ वृ॒त्वात्य॑तिष्ठद्दशाङ्गु॒लम् ॥१॥**

### पदपाठः

स॒हस्र॑ऽशीर्षा । पुरु॑षः । स॒ह॒स्र॒ऽअ॒क्षः । स॒हस्र॑ऽपात् । सः । भूमि॑म् । वि॒श्वतः॑ । वृ॒त्वा । अति॑ । अ॒ति॒ष्ठ॒त् । द॒श॒ऽअ॒ङ्गु॒लम् ॥ १ ॥

### सायणभाष्यम् १

सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुष सोऽयं सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वादनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयान्येवेति सहस्रशीर्षत्वम् । एवं सहस्राक्षित्वं सहस्रपादत्वं च । सः पुरुषः भूमिं ब्रह्माण्डगोलकरूपां विश्वतः सर्वतः वृत्वा परिवेष्ट्य दशाङ्गुलं दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणम् । ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः ।

शुक्लयजुर्वेदसंहितायामेकत्रिंशाध्यायात्मकं (पु० सू० १–१६।३१ अध्या०) सोत्तरनारायणपुरुषसूक्तम् (उ० ना० १७–२२)

तत्र तृतीयपाद इत्थम्—

स भूमि ँ सुर्वतः स्पृत्वा ·······॥ १ ॥

उव्वटभाष्यम् १

परमात्मज्ञानानन्दादिगुणाध्यात्मनि प्रभूतः (सम्भूतः) पुरुषमेधो यज्ञः प्रजापतिः लोककालाग्न्यादिवपुः पुरुषोत्पत्ति-स्थिति-संहृतीनां हेतुः स्वर्गापवर्गैश्वर्य-मोक्षदो ज्ञानकर्मसमुच्चयकारणं शरीरं, यज्ञो वा अस्यात्मा भवतीति श्रुतिः। 'सहस्रशीर्षा पुरुष' इत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्त्येन 'ब्रह्मणे ब्राह्मणम्' (३०।५) इत्याद्यवयवभूतपुरुषद्वारेणावयवी स्तूयते। इदानीं स्तुत्यर्थं निर्वचन-द्वारेण द्रढयितुमाह। 'अथ यस्मात् पुरुषमेधो नामेमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात् पुरुषः। तस्य यदेष लोकेष्वन्नं तदस्यान्नं मेधस्तदस्यैतदन्नं मेधस्तस्मात् पुरुषमेधः' [ श० ब्रा० १३।६।२।१ ]।

पुरुषसूक्तस्य नारायण ऋषिः, पुरुषो देवता, अनुष्टुप्छन्दः अन्त्या त्रिष्टुप्, मोक्षे विनियोगः।

अस्य भाष्यं शौनको नाम ऋषिरकरोत्।

स पुरुषो नारायणाख्यः[1] सर्वतो भुवनकोशस्य भूमिं स्पृत्वा व्याप्य दशाङ्गुलम् अत्यतिष्ठत्। दश च तानि अङ्गुलानि दशाङ्गुलानीन्द्रियाणि। केचिदन्यथा रोचयन्ति—दशाङ्गुलप्रमाणं हृदयस्थानम्। अपरे तु—नासिकाग्रं दशाङ्गुलमिति। किम्भूतोऽसौ? सहस्रशीर्षा। अनेकपर्यायः सहस्रशब्दः। अनेकानि शिरांसि यस्य स सहस्रशीर्षा पुरुषः। सहस्राक्षः सहस्राण्यक्षीणि नेत्राणि यस्यासौ सहस्राक्षः।

---

[1] अथ नारायणनाम्ना पुरुषसूक्तनाम्ना च व्यवह्रियमाणोऽनुवाक उच्यते।·········अश्वमेधेऽपि प्रेतदाहोपस्थाने विनियोगं भरद्वाज आह— "नारायणाभ्यामुपस्थानम्" इति। अयं चोत्तरश्चेत्युभावनुवाकौ नारायणसञ्ज्ञौ, नारायणाख्येन केनचिद् ऋषिणा दृष्टत्वात्तत्कारणस्य नारायणाख्यस्य पुरुषस्य प्रतिपादकत्वाच्च।

(तैत्तिरीयारण्यके तृतीयप्रपाठकद्वादशानुवाकभाष्यारम्भे सायणाचार्याः)

सहस्रपात् । पादानामङ्गानां सहस्राणि यस्य स सहस्रपात् । एतद्गुणः पुरुषः तद् व्याप्यातिक्रम्य स्थित इति ।

## महीधरभाष्यम्

रमाकान्तं गिरं नत्वा हेरम्बं शिवमम्बिकाम् ।
एकत्रिंशेऽधुनाध्याये वेददीपो निगद्यते ॥

'नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति' ( का० श्रौ० २१।१।११ ) । अस्यार्थः नियुक्तान् ब्राह्मणमित्यादिपशून्, सहस्रशीर्षेत्यनुवाकेन षोडशर्चेन ब्रह्मा स्तौति होतृवदिति । त्रिः प्रथमां त्रिरुत्तमामित्याद्युक्तप्रकारेणेत्यर्थः। 'त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थाय "अद्भ्यः सम्भृतः" ( शु० य० सं० ३१।१७-२२ ) इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयाद् ग्रामे वा विवत्सन्नरण्योः' ( का० श्रौ० सू० २१।१।१७-१८ ) । 'त्रैधातवी उदवासनीयेष्टिस्तदन्ते' 'अयं ते योनिः' ( शु० य० सं० ३।१४, १२।५२, १५।५६ ) इत्यग्नी आत्मनि समारोह्य तदुष्माणमास्ये प्रवेश्याद्भ्यः सम्भृतः' ( शु० य० सं० ३१ १७-२२ ) षड्चेनानुवाकेन सूर्यमुपस्थाय पश्चादपश्यन् वनं गत्वा ग्रामं नागच्छेत् । वानप्रस्थो भवेदित्यर्थः । यद्वा ग्रामे वस्तुमिच्छन्नरण्योरग्नी समारोप्यार्कोपस्थानानन्तरं ग्रामे गत्वा यज्ञान् कुर्यादिति सूत्रार्थः ।

अथ मन्त्रार्थः—नारायणपुरुषदृष्टा जगद्बीजपुरुषदेवत्याः षोडशर्चः पञ्चदशानुष्टुभः षोडशी त्रिष्टुप् । 'ब्रह्मणे ब्राह्मणम्' ( शु० य० सं० ३०।५ ) इत्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते । अव्यक्त-महदादि विलक्षणश्चेतनो यः पुरुषः । 'पुरुषान्न परं किंचिद्' ( कठोप० १।३।११ ) इत्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराजाख्योऽस्ति । कीदृशः ? सहस्रशीर्षा । सहस्रशब्दो बहुत्ववाची । सङ्ख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् । नेत्रसहस्रद्वयेन च भाव्यम् । ततः सहस्रमसङ्ख्यानि शीर्षाणि शिरांसि यस्य सः । 'शीर्षश्छन्दसि' (पा० ६।१।६०) इति शिरः शब्दस्य शीर्षन्नादेशः । शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि । तद्देहान्तःपातित्वात् सर्वस्यैवेति सहस्रशीर्षत्वम् । एवमग्रेऽपि । सहस्राक्षः । सहस्रमक्षीणि यस्य सः । अक्षिग्रहणं सर्वज्ञाने-

न्द्रियोपलक्षकम्। सहस्रपात्। सहस्र पादा यस्य। 'सङ्ख्यासुपूर्वस्य' (पा० ५।४।१४०) इति पादस्यान्त्यलोपः। पादग्रहणं कर्मेन्द्रियोपलक्षणम्। स पुरुषो भूमिं ब्रह्माण्डलोकरूपां सर्वतः। तिर्यग् ऊर्ध्वमधश्च स्पृत्वा व्याप्य। स्पृणोतिर्व्याप्ति कर्मा। यद्वा—भूमिशब्दो भूतोपलक्षकः। पञ्चभूतानि व्याप्य दशाङ्गुलपरिमितं देशमध्यतिष्ठत्। अतिक्रम्यावस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद् बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः। यद्वा—नाभेः सकाशाद् दशाङ्गुलमतिक्रम्य हृदि स्थितः। नाभित इति कुतो लभ्यते ? 'कतम आत्मा' इत्युपक्रम्य 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः' (बृहदा० ४।३।७) इति श्रुतेर्विज्ञानात्मनो हृद्यवस्थाने कर्मफलोपभोगायान्तर्यामिणो नियन्तृत्वेन। तदुक्तम्—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यो अभिचाकशीति'॥ (ऋ० १।१६४।२०; अथर्व० सं० ९।९।२०; मुण्डकोप० ३।१।१, श्वेताश्वतरोप० ४।६) इति। स पुरुषोऽत्र देवता। तथा च श्रुतिः–'इमे वै लोकाः पूरयमेवपुरुषो योऽयं पवते सोऽस्या पुरि शेते तस्मात् पुरुषः' (शत० ब्रा० १३।६।२।१) इति॥

## हिन्दीभाषान्तर

पुरुष, हजारो सिर वाला, हजारों नेत्रों वाला (तथा) हजारों पैरों वाला है। वह भूमि को सब ओर से आवृत कर दश अंगुल का अतिक्रमण कर अवस्थित हो गया।

## टिप्पणियाँ

१. सहस्रशीर्षा—सहस्रं शीर्षाणि यस्य सः, ब० व्री०, (शीर्ष को शीर्षन् आदेश—'शीर्षश्छन्दसि' (पा० ६।१।६०)। हजारो शिरो से युक्त। जिसके हजार शिर हो। सायण–सहस्र उपलक्षणमात्र है। सहस्र से अनन्त का बोध होता है। अतएव भाव हुआ–असंख्य शिरो से युक्त पुरुष। संसार के समस्त प्राणी उस विराट् पुरुष से ही उत्पन्न होते हैं, अतएव उनका शरीर भी उसी पुरुष का है।

उव्वट के अनुसार सहस्र शब्द अनेक का पर्याय है। अतएव अनेक शिरवाला विराट् पुरुष। महीधर के विचार में सहस्र शब्द बहुत्व का वाचक है। सहस्र को बहुलवाचक न मानकर संख्यावाचक स्वीकारने पर उस पुरुष को दो हजार नेत्रों से युक्त होना चाहिए—पर है वह 'सहस्राक्ष'; सिर कह

देने से अन्य शारीरिक अंगो की भी अनिर्वक्ति हो जाती है, अर्थात् उस पुरुष के अंगो की गणना का प्रयत्न सिकता-तैल है।

इसी प्रकार–सहस्राक्षः एवं सहस्रपात् का भी अर्थ करना चाहिए। इन पदो में भी सहस्र शब्द आनन्त्य का ज्ञापक है। सहस्रमक्षीणि यस्य सः सहस्राक्षः—हजारो आँखो वाला=अनन्त नयनो से युक्त। सहस्रं पादा यस्य—सहस्रपात्—'सङ्ख्यासुपूर्वस्य' ( पा० ५।४।१४० ) से पाद के द के अ का लोप हो गया। अनन्त पैरों वाला 'अक्षि' ( नेत्र ) तथा 'पाद' ( पैर ) शब्दो के द्वारा क्रमशः सकल ज्ञानेन्द्रियो तथा कर्मेन्द्रियो का बोध होता है। ये तीनो पद पुरुष की महिमा का ज्ञापन करते हैं। तुलनीय—

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात्।
स बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः॥
ऋ० १०।८१।३; शु० य० सं० १७।१९।

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥
श्वेताश्व० ३।१६।

मैकडोनेल तथा पीटर्सन भी इसी अर्थ को स्वीकारते हैं।

२. पुरुषः—पुरि शेते इति। पुर्+शी+कः—प्राण अथवा शरीर में स्थित आत्मा, भौतिक जगत् में स्थित प्राण। श० ब्रा० के अनुसार दृश्यमान लोकों को पुर कहते हैं, उस पुर में स्थित व्यापक पुरुष है। पृ—भरना, पिपर्ति इति—समस्त पदार्थों में अनुस्यूत ब्रह्म। पूर्व+अस्—पूर्वाधरावराणामसि पुरधवश्चैषाम्' ( पा० ५।३।३९ )। पुरः—पुरः शेते समस्त पदार्थो में पहले से विद्यमान प्रजापति।

पुरति—पुर् ( आगे चलना )+कुषन् ( उणा० ४।७४ )। पूरयति—पूरी ( आप्यायित करना )+कुषन्। अग्रगामी, समस्त पदार्थो को आप्यायित करने वाला।

सायण—प्राणिसमूह की समष्टि के रूप में स्थित ब्रह्माण्डशरीरी विराट् नाम वाला पुरुष। उव्वट—नारायण अभिधानवाला पुरुष। महीधर—अव्यक्त, महत् आदि से विलक्षण चेतन पुरुष।

वैदिक धारणाओं के परिसर में धर्म या तत्त्व की दृष्टि से 'पुरुष' की धारणा सर्वातिशायिनी है। यहाँ 'पुरुष' शब्द से विश्व के अन्तिम सत्य पुरुषरूप परमेश्वर की अभिव्यक्ति की गयी है। छान्दोग्य उपनिषद् में इसी को 'उत्तमपुरुष' की आख्या प्रदान की गयी है। वेदों में आदिपुरुष को अग्निरूप अथवा सूर्यरूप में स्वीकारा गया है। अग्निचयन में आहित 'हिरण्मय पुरुष' इसी 'सौर पुरुष' का प्रतिनिधित्व करता है। तामस पाश के छिन्न होने पर मनुष्य आदित्यवर्ण महान् पुरुष को जानकर मृत्यु की सीमा का अतिक्रमण कर लेता है। इससे बढ़कर श्रेयस् का अन्य पथ नहीं है (शु० य० सं० ३१।१८)। मानव-चेतना, काल-चेतना तथा विश्व-चेतना में तत्त्व रूप में पुरुष अवस्थित है। आदित्य में स्थित पुरुष कालचैतन्य है। इस कालचैतन्य के अभाव में संवत्सरात्मक काल या महाकाल का सम्बोध दुष्कर है। ऋतुचक्र का निरन्तर आवर्तन असम्भव है। विश्वचेतना का परम तत्त्व विराट् पुरुष है। मानव चैतन्य आत्मा उसकी एक मूर्च्छना मात्र है। उपनिषदों का प्रतिपाद्य यही पुरुष है, अतएव याज्ञवल्क्य शाकल्य से कहते हैं—तं त्वोपनिषदं पुरुषं पृच्छामि (बृहदा० ३।९।२६)। 'ऋग्वेद के विद्वान् महदुक्थ में उसी का विचार करते हैं। अध्वर्यु अग्निचयन में इसी की मीमांसा करते हैं। सामवेदी महाव्रत में इसी का मनन करते हैं। पृथिवी, स्वर्ग, वायु, आकाश, जल, ओषधि, वनस्पति, चन्द्र, नक्षत्र, प्राणिमात्र आदि में इसी की उपासना की जाती है'—

एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एवं महाव्रते छन्दोगा एतस्यामेतं दिव्येतं वायावेतमाकाशं एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते।—ऐ० आ० ३।२।३। तुलनीय श० ब्रा० १०।१।२।२०।

३. भूमिम्—भवतीति भूमिः—भू + मिः (उणा० ४।४५)—ब्रह्माण्ड-गोलक को। उव्वट—भुवनकोश की भूमि को। महीधर—ब्रह्माण्डीय लोकों की भूमि को अथवा पाँचो महाभूतो को—क्षिति, अप्, तेज, वायु, आकाश। मैकदोनेल—पीटर्सन—पृथ्वी। यजुर्वेद में अनुस्वार के आगे यदि सकार होता है तो अनुस्वार तो ग्वँ पढ़ा जाता है।

४. विश्वतो वृत्वा—वृ + क्त्वा—सायण—उव्वट-महीधर चारों ओर से आच्छादित कर। सबको व्याप्त कर। यजुर्वेद के 'सर्वतः स्पृत्वा' का भी यही अर्थ है—सर्वतः सर्व + तसिल्—पञ्चम्यास्तसिल् ( पा० ५।३।७ ) विश्वतः की व्युत्पत्ति [ विश्व + तसिल् ]—सब ओर से। स्पृत्वा = स्पृ + क्त्वा—व्याप्त कर।

५. दशाङ्गुलम्—सायण—दश अंगुल स्थान। दशाङ्गुल उपलक्षक है, वस्तुतः वह ब्रह्माण्ड के बाह्य पदार्थों में भी व्याप्त होकर अवस्थित है। उव्वट ( शौनक )—दश इन्द्रियाँ। दश अङ्गुल के प्रमाण वाला हृदय-प्रदेश। नासिका का अग्र भाग।

मैकदोनेल के विचार में यह केवल कथ्य शैली है। वस्तुतः उसका आकार पृथ्वी से भी बड़ा था। पीटर्सन—दश अङ्गुलियों की लम्बाई।

यह अनुष्टुप् छन्द है। अनुष्टुप् का प्रत्येक पाद आठ वर्णों का होता है। इस प्रकार, वृत्वात्यतिष्ठत् = स्पृत्वात्यतिष्ठत्, को वृत्वा अत्यतिष्ठत् = स्पृत्वा अत्यतिष्ठत् पढ़ना चाहिए।

यह मन्त्र श्वेताश्वतरोप० ३।१४, तै० आ० ३।१२।१, तथा अथर्व० १९।६।१ में ( अथर्व०—सहस्रबाहुः पुरुषः, परिवर्तन के साथ ) उपलब्ध होता है।

इस सूक्त की अर्वाचीनता के लिए देखिए—म्योर ओ० टे०। १, पृ० १५ आदि। आर्नाल्ड के विचार मे छन्द की यह लय अत्यन्त नवीन है॥ १॥

**पुरु॑ष ए॒वेदं सर्वं॒ यद्भू॒तं यच्च॒ भव्य॑म्।**
**उ॒ताम॑त॒त्वस्येशा॒नो यदन्ने॑नाति॒रोह॑ति॥ २॥**

### पदपाठः

**पुरु॑षः। ए॒व। इ॒दम्। सर्व॑म्। यत्। भू॒तम्। यत्। च॒। भव्य॑म्। उ॒त। अ॒मृ॒त॒ऽत्वस्य॑। ईशा॑नः। यत्। अन्ने॑न। अ॒ति॒ऽरोह॑ति॥ २॥**

### सायणभाष्यम् २

यदिदं वर्तमानं जगत् तत् सर्वं पुरुष एव। यच्च भूतम् अतीतं जगद् यच्च भव्यं भविष्यज्जगत् तदपि पुरुष एव। यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः

सर्वेऽपि विराट्पुरुषस्यावयवास्तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यम् इत्यभिप्रायः। उतापि च अमृतत्वस्य देवत्वस्यायम् ईशानः स्वामी। यद् यस्मात् कारणाद् अन्नेन प्राणिनां भोग्येनान्नेन निमित्तभूतेनातिरोहति स्वकीया कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात् प्राणिना कर्मफलभोगाय जगदवस्था-स्वीकारान्नेदं वस्तुत्वमित्यर्थः ॥

**शु० य० संहितायाम्—**

**पुरुष एवेद१ सर्वं……भाव्यम्………॥ २ ॥**

### उव्वटभाष्यम् २

स एव पुरुषः। पूर्वपर्यायविशेषित 'एव' शब्दो नान्यः। इदं वर्तमानात्मकं सर्वं, यच्च भूतमतीतं, यच्च भाव्यं भविष्यत्, तस्य कालत्रयस्येशानः, उत अमृत-त्वस्यापि मोक्षस्यापि। उतशब्दोऽपिशब्दार्थे। कस्मात्। कारणात्। यद् अन्नेन अमृतेन अतिरोहति अतिरोधं करोति। सर्वस्येश्वर इति॥

### महीधरभाष्यम्

यद् इदं वर्तमानं जगत् तत्सर्वं पुरुष एव। यद् भूतमतीतं जगद् यच्च भाव्यं भविष्यं जगत् तदपि पुरुष एव। यथास्मिन् कल्पे वर्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः, तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमिति भावः। उतापि च। अमृतत्वस्य देवस्य ईशानः स्वामी स पुरुषो यद् यस्माद् अन्नेन प्राणिनां भोग्येनान्नेन फलेन निमित्तभूतेनातिरोहति स्वीयां कारणावस्थामतिक्रम्य परिदृश्य-माना जगदवस्था प्राप्नोति तस्मात् पुरुष एव। प्राणिनां कर्मफलभोगाय जगदवस्था-स्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः। यद्वा—सर्वं पुरुषश्चेत्तर्हि परिणामीत्याशङ्क्याह— अमृतत्वस्य अमरणधर्मस्य ईशानो मुक्तेरीशः। यो हि मोक्षेश्वरो नासौ म्रियत इत्यर्थः। किञ्च यज्जीवजातम् अन्नेनातिरोहति उत्पद्यते तस्य सर्वस्य चेशानः। ब्रह्मादिस्तम्बपर्यन्तो भूतग्राम उक्तः तस्यान्नेनैव स्थितेः, इतः प्रदानाद्धि देवा उपजीवन्ति, इति श्रुतेः॥

### हिन्दीभाषान्तर

यह सब कुछ—जो उत्पन्न हो चुका है और जो उत्पन्न होगा तथा अमरता का स्वामी ( और ) जो अन्न से बढ़ता है—पुरुष ही है।

## टिप्पणियाँ

१. पुरुष एव—पुरुष ही है। उव्वट—'एव' शब्द अवधारण अर्थ में प्रयुक्त हुआ है, अतएव पूर्वकथित पर्यायों से विशिष्ट पुरुष ही वहाँ व्याप्त है, उससे व्यतिरिक्त कोई दूसरा नहीं।

२. इदम्—सायण, उव्वट, महीधर—यह वर्तमान जगत्। यजुर्वेद में जब अनुस्वार 'स' के पूर्व आता है, तब उसका उच्चारण 'ग्वँ' होता है तथा ँ चिह्न से व्यक्त किया जाता है।

३. यत् भूतं यत् च भव्यम्—भू + क्तः–भूतम्। भू + ण्यत्—'भव्यगेय:' (पा० ३।४।६८) से निपातन—सिद्ध—भव्यम्। अतीत, भावी–जो कुछ हो चुका है, जो कुछ होने वाला है। सायण—महीधर–जिस प्रकार इस कल्प में वर्तमान प्राणि-शरीर उस विराट् पुरुष के अवयव हैं, उसी प्रकार से वे अतीत में थे एवं भावी जीवन में रहेंगे। मैकदोनेल आदि भी इसी का अनुगमन करते हैं।

४. उत अमृतत्वस्य ईशानः–उत—और नास्ति मृतिर्मरणं यस्य यस्मिन् तत् तस्य भावः—अ + मृत + त्व—अमरता ईशानः—ईश + शानच् या चानश् = स्वामी। सायण—देवत्व का स्वामी। उव्वट—मोक्ष का स्वामी। महीधर—देवत्व अथवा मोक्ष का स्वामी। मैकदोनेल–अमरता का स्वामी। पीटर्सन–अमरता पर शासन करता हुआ–अमरता का शास्ता।

५. यत् अन्नेन अतिरोहति—सायण—महीधर—(वह देवत्व का स्वामी है) यत्—क्योंकि (वह) (अन्नेन) प्राणियों के भोग्य फल अन्न के कारण (अतिरोहति) अपनी कारण अवस्था का परित्याग कर परिदृश्यमान जागतिक अवस्था को प्राप्त करता है। महीधर अन्य अर्थ भी उपन्यस्त करते हैं- (यत्) जो जीव-समूह (अन्नेन) अन्न से (अतिरोहति) उत्पन्न होता है (पुरुष उस सबका स्वामी है)। यदि सब कुछ पुरुष ही है, तो वह परिणामी है, इस विचिकित्सा को दृष्टि में रख प्रस्तुत किया जाता है—(उतामृतत्वस्येशानः)- वह अमृतत्व का—मोक्ष का स्वामी है। कहीं मोक्षेश्वर की भी मृत्यु होती है!

उव्वट के विचार से—(यत्) क्योंकि (वह) (अन्नेन) अमृत से (अतिरोहति) अतिरोध करता है, (अतः मोक्ष का स्वामी है)।

म्योर के अनुसार भागवत पुराण के व्याख्यान को दृष्टि में रखते हुए इसका अर्थ होगा—'देखते हुए उसने मानवीय अन्न का अतिक्रमण किया है।' अथर्ववेद में उतामृतत्वस्येश्वरो यदन्येनाभवत् सह, १९।६।४—पाठ है—वह अमरत्व का स्वामी है, क्योंकि वह दूसरे मिल गया है। उनका अर्थ है—'क्योंकि वह अन्न से फैलता है।'

ग्रॉसमन के अनुसार इसे 'अमृतत्वस्य' से सम्बद्ध करना चाहिए। (अमरता) जो हमारे यज्ञों से पुष्ट की जाती है।

लुडविग के विचार से–'जो अन्न से स्थित है; वह उससे ऊपर वितत है'।

मैकडोनेल—मन्त्र १ का अत्यतिष्ठत्, मन्त्र ५ का अत्यरिच्यत–इन दोनों की अतिरोहति से तुलना करने पर दो बातों का संकेत उपलब्ध होता है। (१) पुरुष कर्ता है और 'यत्' (देवता) कर्म। (२) प्रथम (पुरुष) जो अवमों (देवों) को अन्न से=यज्ञान्न द्वारा अतिक्रान्त करता है। जो (देव) (यज्ञ के) अन्न से बढ़ते हैं', तथा 'और जो कुछ अन्न से उत्पन्न होता है उसका'—इन दोनों व्याख्यानों में अति का पूरा-पूरा भाव स्पष्ट नहीं होता है।

यह मन्त्र श्वेता० ३।१५; तै० आ० ३।१२।२ तथा अथर्व० १९।६।४ में (अथर्व०—उतामृतत्वस्येश्वरो यदन्येनाभवत् सह) मिलता है।

छन्द की दृष्टि से ऋग्वेद में 'भव्यम्' के स्थान पर 'भवियम्' तथा शु०य० सं० में 'भाव्यम्' के स्थान पर 'भावियम्' पढ़ना चाहिए ॥ २ ॥

एतावानस्य महिमातो
ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि
त्रिपादस्यामृतं दिवि ॥ ३ ॥

पदपाठः

एतावान् । अस्य । महिमा । अतः । ज्यायान् । च । पुरुषः । पादः । अस्य । विश्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥ ३ ॥

## सायणभाष्यम् ३

अतीतानागतवर्तमानरूपं जगद् यावदस्ति, एतावान् सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु पुरुषः अतो महिम्नोऽपि ज्यायान् अतिशयेनाधिकः। एतच्चोभयं स्पष्टीक्रियते। अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थोऽशः। अस्य पुरुषस्यावशिष्टं त्रिपात् स्वरूपम् अमृतं विनाशरहितं सद् दिवि द्योतनात्मके स्वप्रकाशस्वरूपे। व्यवतिष्ठत इति शेषः। यद्यपि, 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० आ० ८।१, तै० उ० २।१ ) इत्याम्नातस्य ( ०म्नानात् ) परब्रह्मण इयत्ताभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मस्वरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः॥

शु० य० संहितायाम्॥ ३॥ ज्यायांश्च

## उव्वटभाष्यम् ३

अस्य पुरुषस्य पूर्वोक्त विशेषणविशेषितस्य एतावान् महिमा एतदेव महत्त्वमस्य। अतः कारणाद् ज्यायाश्च पुरुषः। महानित्यर्थः। कस्मान्महत्त्वमायातम्। यस्मात् पाद एकोंऽशोऽस्य पुरुषस्य विश्वा भूतानि विश्वानि चतुर्दशभुवनसमूहे यानि चतुर्धा भूतानि तान्येकोंऽशः। त्रिपात् पुनस्त्रयोंऽशा अस्य पुरुषस्यामृतम् ऋग्यजुःसामलक्षणम् आदित्यलक्षणं वा दिवि द्योतत इति॥

## महीधरभाष्यम्

अतीतानागतवर्तमानकालसम्बद्धं जगद् यावदस्ति। एतावान् सर्वोऽप्यस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो विभूतिर्न तु वास्तवं—स्वरूपम्। वास्तवपुरुषस्तु। अतोस्मान् महिम्ना जगजालाज्ज्यायाश्च अतिशयेनाधिकः। एतदुभय स्पष्टीक्रियते। अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्तीनि प्राणिजातानि पादश्चतुर्थांशः। अस्य पुरुषस्यावशिष्ट त्रिपात् स्वरूपम् अमृतं विनाशरहितं तद् दिवि द्योतनात्मकस्वप्रकाशे स्वरूपेऽवतिष्ठत इति शेषः। यद्यपि "सत्यं ज्ञानमनन्तं ब्रह्म" ( तै आ० ८।१, तै० उप० २।१ ) इत्याम्नातस्य ( ०म्नानात् ) परब्रह्मण इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यं, तथापि जगदिदं ब्रह्मरूपापेक्षयाल्पमिति विवक्षितत्वात् पादोपन्यासः॥

## हिन्दीभाषान्तर

इस पुरुष की इतनी महिमा है और पुरुष इससे अधिक बड़ा है। समस्त प्राणी इसका चतुर्थांश है, इसका तीन-चौथाई द्युलोक में अमर है।

## टिप्पणियाँ

१. एतावान् अस्य–एतत् + वतुप्–। 'यत्तदेतेभ्यः परिमाणे–'(पा० ५।२।३९) से वतुप्, 'आ सर्वनाम्नः' ( पा० ६।३।९१ ) से आकार—एतावान्—इतना। सायण–महीधर–अतीत, अनागत एवं वर्तमानकाल से जो कुछ भी सम्बद्ध है।

मैकदोनेल—ऐसे स्थलों पर 'आन्' को 'आँ' होता है। ऋग्वेद के प्राचीन भागों में यही सन्धि का रूप उपलब्ध होता है। यहाँ प्रस्तुत मन्त्र में ( १०।८५।४५ में 'पुत्रान् आ' में भी ) उपर्युक्त सन्धि-स्वरूप की अनुपलब्धि इस सूक्त की अर्वाचीनता की द्योतक है।

२. पुरुषः—पदपाठ में 'पुरुषः' संहिता में छन्द की दृष्टि से दीर्घ हुआ है। अनुवर्ती काल में 'पूरुष' को भी स्वीकृति मिली है।

३. अमृतम्—सायण—विनाशरहित पुरुष। महीधर सायण का अनुगमन करते हैं। उव्वट–ऋक्, यजुष् और सामरूप वाला अथवा आदित्य रूप वाला। इस ऋक्–यजुष्–सामरूप पुरुष का वर्णन वक्ष्यमाण मन्त्र में है—

सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरो, गायत्रं चक्षु, बृहद्रथन्तरे पक्षौ, स्तोम आत्मा, छन्दांस्याङ्गानि, यजूंषि नाम, साम ते तनूर्वामदेव्यं; यज्ञायज्ञियं पुच्छं, धिष्ण्याः शफाः। सुपर्णोऽसि गरुत्मान् दिवं गच्छ स्वः पत।

[ शु० य० सं० १२।५; तै० सं० ४।१।१०; का० सं० १६।८५, मै० सं० २।७।८; श० ब्रा० १०।५।२।२; तै० आ० प० १४ ]

तु०—यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः।
स ब्रह्मेति विज्ञेय ऋषिर्ब्रह्ममयो महान्॥

—शां. आ. ३।७

श० ब्रा० में आदित्यमण्डल का स्वरूप भी ऋग्-यजुष्-सामलक्षण है—

यदेतन्मण्डलं तपति तन्महदुक्थम्, ताऽऋचः, स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते तन्महाव्रतम्, तानि सामानि, स साम्नां लोकः, अथ य

एष एतस्मिन्मण्डले पुरुषः सोऽग्निः, तानि यजूंषि, स यजुषां लोकः। सैषा त्रय्येव विद्या तपति। तद् हैतदप्यविद्वांसऽआहुस्त्रयी वाऽएषा विद्या तपति…। १०।५।२।१-२।

वैदिक सुपर्ण, अग्निचयन का पुरुष एवं आदित्य एक ही है। आदित्यवर्ण की विलोकन-महनीयता का प्रतिपादन याजुष् प्रस्थान में सम्प्रतिष्ठ है ( देखिए, इसी सूक्त का १८ मन्त्र )।

'अमृतम्' में मृत आदि स्वर उदात्त है—'नञो जरमरमित्रमृताः' ( पा० ६।२।११६ )।

४. दिवि—द्योतनात्मक स्वप्रकाश; स्वरूप में—सायण-महीधर। मैक-डोनेल—स्वर्गलोक में। पीटर्सन—आकाश में।

सायण—महीधर के विचार में 'सत्यं ज्ञानमनन्तं ब्रह्म' इस श्रुति द्वारा आम्नात परब्रह्म की इयत्ता का निर्देश असम्भव है। उसके पादचतुष्टय का निरूपण अशक्य होते हुए भी यहाँ केवल इतना कथ्य है कि यह परिदृश्यमान नामरूपात्मक जगत् ब्रह्म की अपेक्षा अल्पीयान् है।

म्योर (ओ० सं० टे०, ५, पृ० ३६८-३६९) का कथन है कि इस मन्त्र की तुलना अथर्ववेद १०।८।७-१३ से करनी चाहिए। वहाँ वर्णित है—ब्रह्म का सहस्राक्षर एकनेमिचक्र निरन्तर गतिशील रहता है, उस चक्र के आधे भाग से समग्र विश्व की रचना की गयी। अवशिष्ट अर्धांश कहाँ है ? इसे कौन बता सकता है ?

> एकचक्रं वर्तत एकनेमि सहस्राक्षरं प्र पुरो नि पश्चा।
> अर्धेन विश्वं भुवनं जजान यदस्यार्धं क्व तद् बभूव ॥
>
> अ० वे० १०।८।७।

गर्भ में स्थित अदृश्यमान प्रजापति बहुधा विभिन्न रूपों में उत्पन्न होता है। अपने अर्धांश से वह समग्र भुवन को उत्पन्न करता है, पर अवशिष्ट अर्धांश का कौन-सा पदार्थ प्रकेत ( प्रज्ञापक ) है ?

अथर्ववेद-निर्दिष्ट उपर्युदित तथ्य का यहाँ इतर प्रकार से प्रस्ताव परि-लक्षितव्य है। तुलनीयः अ० वे० १०।७।८-९।

छन्द की दृष्टि से 'महिमा अतो' पढ़ना चाहिए।

यह मन्त्र तै० आ० ३।१२।३ में तथा अ० वे०१९।६।३ में—तावन्तो अस्य महिमानस्ततु⋯परिवर्तन के साथ उपलब्ध है ॥ ३ ॥

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥

## पदपाठः

त्रिऽपात् । ऊर्ध्वः । उत् । ऐत् । पुरुषः । पादः । अस्य । इह । अभवत् । पुनरिति । ततः । विष्वङ् । वि । अक्रामत् । साशनानशने इति । अभि ॥ ४ ॥

## सायणभाष्यम् ४

योऽयं त्रिपात् पुरुषः संसाररहितो ब्रह्मस्वरूपः सोऽयम ऊर्ध्व उदैत्। अस्मादज्ञानकार्यात् संसाराद् बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान्। तस्यास्य सोऽयं पादो लेशः सोऽयम् इह मायायां पुनरभवत्। सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥" (भ० गी० १०।४२) इति। ततो मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामद् व्याप्तवान्। किं कृत्वा? साशनानशने [अभि] अभिलक्ष्य साशनं भोजनादिव्यवहारोपेतं चेतनं प्राणिजातम्। अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥

शु० य० संहितायाम्—

⋯व्यक्रामत्⋯॥ ४ ॥

## उव्वटभाष्यम् ४

यस्मादयं पुरुषस्त्रिपाद् त्र्यंशभूत ऊर्ध्व उपरिष्टाद् उदैद् देदीप्यमानस्तिष्ठति। अस्य च पुरुषस्य पाद एकोंऽश इह त्रैलोक्ये बीजभूतं चतुर्षु भूतेषु अभूद् भूतम्। ततस्तस्मात् कारणात् विष्वङ् भुवनकोशं व्याक्रामद् उत्पन्नमित्यर्थः। तस्मादेव पुरुषात्। साशनानशने अभि साशनं स्वर्गम् अनशनं मोक्षं सर्वं जगत् स्वर्गंप्रति मोक्षं प्रति च तस्मादेवोत्पन्नमित्यर्थः ॥

## महीधरभाष्यम्

योऽयं त्रिपात् पुरुषः संसारस्पर्शरहितब्रह्मरूपः, अयमूर्ध्वं उदैद् अस्माद् ज्ञानकार्यात् संसराद् बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्ट उत्कर्षेण स्थितवान्। तस्यास्य पादः लेशो जगद्रूप इह मायाया पुनरभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम्—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ( भ० गी० १०।४२ ) इति। ततो मायायामागत्यानन्तरं विष्वङ् विषु सर्वत्राञ्चतीति विष्वङ् देवतिर्यगादिरूपेण विविधः सन् व्यक्रामद् व्याप्तवान्। किं कृत्वा? साशनानशने अभि अभिलक्ष्य। अशनेन सह वर्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातम्। अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। ते अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥

## हिन्दीभाषान्तर

पुरुष तीन चौथाई ऊपर उठ गया और इसका चतुर्थांश पुनः इस लोक में हुआ, अतएव खाने वालों और न खाने वालों को उसने चारों ओर से व्याप्त कर लिया।

## टिप्पणियाँ

१. त्रिपात्—त्रयः पादाः अस्य—'सङ्ख्यासुपूर्वस्य' ( पा० ५।४।१४० ) से 'पाद' के अन्त्य अ का लोप। सायण-महीधर—संसार के सस्पर्श से रहित ब्रह्मरूप पुरुष, जो पूर्ण पुरुष का 'तीन-चौथाई' ( त्रिपात् ) है।

२. ऊर्ध्व उदैत्—ऊपर उठ गया। उदैत्—उत्+इण् गतौ+लङ्, प्र० पु०, ए० व०। सायण-महीधर—इस अज्ञानकार्य संसार से बहिर्भूत जागतिक गुण-दोषों के संस्पर्श से रहित पुरुष उत्कर्षपूर्वक स्थित हुआ। मैकदोनेल—अमरो के लोक में ऊपर उठ गया। पीटर्सन—ऊपर चला गया। उव्वट—ऊपर देदीप्यमान होकर स्थित है। 'ऊर्ध्व' में अन्त्य स्वर उदात्त—'द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ' ( पा० ६।२।१९७ )।

छन्द की दृष्टि से '—दूर्ध्वौदैत्' पढ़ना चाहिए। इस पाद में आठ वर्णों के स्थान पर नव वर्णों का प्रयोग किया गया है।

३. पादः अस्य इह अभवत्। पुनः—सायण-महीधर—उस पुरुष का चतुर्थांश जगद्रूप हो माया में पुनः स्थित हुआ। पुरुष सृष्टि एवं संहार के

द्वारा इस संसार में बार-बार आता है। उव्वट—इस पुरुष का एक अंश इस त्रिलोक में चारों भूतों में बीज-रूप में स्थित हुआ। मैकदोनेल—पुरुष का चौथाई अंश यहाँ पुनः जीवन में आया। पीटर्सन—चतुर्थांश यहाँ रह गया। मैकदोनेल—पुनः—अपने प्रकृत रूप से। ततः = भौम क्षेत्र से।

'त्रिपात्' में 'पात्' आद्युदात्त है।

४. विष्वङ्—सायण—महीधर—(ततः) वहाँ से अथवा तब माया में आने के पश्चात् देव, तिर्यक् आदि अनेक रूपों में। महीधर—विषु सर्वत्र अञ्चति इति वि + अञ्च् (गति) + क्विन् (पा० ५।३।९) सब में गति रखने वाला, व्याप्त होने वाला। उव्वट—भुवनकोश। मैकदोनेल—चारों ओर से। पीटर्सन—चारों ओर। ञित् होने से 'विष्वङ्' का आदि स्वर उदात्त है—'ञ्नित्यादिर्नित्यम्' (पा० ६।१।१९७)।

५. व्यक्रामत्—वि + क्रम् + लङ्, प्र० पु०, ए० व०। सायण-महीधर—व्याप्त हो गया। उव्वट—उत्पन्न हुआ। मैकदोनेल—अपने को विभक्त किया, विकसित किया। पीटर्सन—प्रसरित हो गया, फैल गया।

छन्द की दृष्टि से 'वि अक्रामत्' पढ़ना चाहिए। आठ वर्णों के स्थान पर सात ही वर्ण हैं।

६. साशनानशने—अशनेन सहितं साशनं, अविद्यमानम् अशनं यस्य, अनशनं, साशनं च अनशनं च, साशनानशने—द्वन्द्व समास। अश्यते इति अशनम्—अश् (भोजन करना) + ल्युट्। सायण—महीधर—भोजन आदि व्यवहार से युक्त चेतन प्राणिसमूह तथा भोजन आदि व्यवहार से रहित अचेतन गिरि, नदी आदि। उव्वट—स्वर्ग एवं मोक्ष। मैकदोनेल—खाने वाले तथा न खाने वाले। पीटर्सन—सजीव एवं जीवनरहित संसार। मैकदोनेल के विचार से यह द्वन्द्व समास इस सूक्त की उत्तरवर्तिता का द्योतक है।

यह मन्त्र तै० आ० ३।१२।४ एवं अथर्ववेद १९।६।२ में—त्रिभिः पुद्भिर्द्यामरोहत् पादस्येहाभवत् पुनः। तथा व्यक्रामद् विष्वङ्ङशनानशने अनु॥—इस रूप में उपलब्ध होता है॥ ४॥

तस्माद्विराळजायत विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥

पदपाठः

तस्मात् । विऽराट् । अजायत । विऽराजः । अधि । पूरुषः । सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ५ ॥

सायणभाष्यम् ५

विष्वङ् व्यक्रामदिति यदुक्तं तदेवात्र प्रपञ्च्यते । तस्माद् आदिपुरुषात् विराट् ब्रह्माण्डदेहः अजायत उत्पन्नः । विविधानि राजन्ते वस्तून्यत्रेति विराट् । विराजोऽधि विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषस्तद्देहाभिमानी कश्चित् पुमान् अजायत । सोऽयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव ( ० त्मा से एव ) स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत् । एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराज देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव" ( नृ० ता० २।१।९ ) इति । स जातः विराट्पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत् । पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः अथो भूमिसृष्टेरनन्तरं तेषा जीवाना पुरः ससर्ज । पूर्यन्ते सप्तधातुभिरिति पुरः शरीराणि ॥ ( इति सप्तदशो वर्गः )

शु० य० संहितायाम्—

ततो विराडजायत…॥ ५ ॥

उव्वटभाष्यम् ५

तस्मादेव पुरुषाद् विश्वोत्पत्तिः । तत्र पूर्वं विराड् अजायत । विराजोऽधिपूरुषः प्रधानं तेजः । स क्षेत्रज्ञो ब्रह्मा सृष्टिकृत् जातः सन् अतिरिच्यते । पश्चाद् अस्मात् क्षेत्रज्ञाद् ब्रह्मणो भूमिः पृथिव्यादौ जाता उत्पन्ना इति । अथोऽनन्तरं पुरः शरीराणि चतुर्विधानि भूतान्यजायन्त । पुरादीनि तेनैवोत्पादितानि । एवमेकोंऽशः । तेनैव सर्वं विश्वमुत्पादितमिति ॥

## महीधरभाष्यम्

विष्वङ् व्यक्रामदिति यदुक्तं तदेव प्रपञ्च्यते। ततस्तस्मादादिपुरुषाद् विराड् ब्रह्माण्डदेहोऽजायत जातः। विविधं राजन्ते वस्तून्यत्रेति विराट्। विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषस्तद्देहाभिमान्येक एव पुमानजायत। सर्ववेदान्तवेद्यः परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः। एतच्चाथर्वणोत्तरतापनीये स्पष्टमुक्तम्—"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वात्र[1] प्रविष्ट इव विहरति" इति। किञ्च स जातो विराट् पुरुषोऽत्यरिच्यत अतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चाद् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज। पूर्यन्ते सप्तधातुभिरिति पुरः शरीराणि॥

## हिन्दीभाषान्तर

उस पुरुष से विराज् उत्पन्न हुआ। (और) विराज् से पुरुष (उत्पन्न हुआ)। वह उत्पन्न (पुरुष) पीछे तथा आगे की भूमि से अधिक हो गया।

## टिप्पणियाँ

१. तस्मात्—उससे। सायण—महीधर—('विष्वङ् व्यक्रामत्' के द्वारा पूर्व मन्त्र में जो प्रतिपादन किया गया है, इस मन्त्र में उसी का प्रपञ्च किया जा रहा है।) उस आदिपुरुष से। उव्वट—उसी पुरुष से (विश्वउत्पत्ति हुई)। मैकदोनेल—पुरुष के अविकृत अंश से। यजुर्वेद के 'ततः' का भी यही अर्थ है।

२. विराट्—सायण—महीधर—विविधं राजन्ते वस्तूनि अत्र इति (वि + राज् + क्विप्)—जिसमें विविध पदार्थ विद्यमान हों, वह विराज् है। (विशेषेण राजति – विराट् विशेष रूप से दीप्तिमान्) ब्रह्माण्डदेह। मैकदोनेल—आदि पुरुष एवं व्याकृत पुरुष के मध्य की स्थिति विराज् है।

---

[1] अस्य वाक्यस्य पाठो मुद्रितनृसिंहतापनीयोपनिषदि नवमखण्डे किञ्चिद्भेदेनोपलभ्यते, यथा—"स वा एष······कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते, माययैव··· इति। एवमेव तु सायणभाष्येऽपि॥" इति पादटिप्पण्यां प्राथमिकवेदसङ्ग्रहस्य षट्षष्टितमे पृष्ठे पं० रघुवरमिट्ठूलालशास्त्री, डॉ० चण्डिकाप्रसादशुक्लश्च।

ऋग्वेद में पद के मध्य में डकार को 'ळ' तथा ढकार को 'ळ्ह' हो जाता है—पदमध्यस्थडकारस्य ळ्कारं बह्वृचा जगुः। पदमध्यस्थढकारस्य ळ्हकारं बह्वृचा जगुः ॥ सा० भा०, ऋ० १।१।१। तु०, ऋ० प्रा० १।५२।

३. विराजो अधि पूरुषः— सायण—महीधर—विराज् के शरीर को अधिकरण बनाकर उस शरीर का अभिमानी एक पुरुष उत्पन्न हुआ। सर्ववेदान्तवेद्य वही परमात्मा अपनी माया से ब्रह्माण्डरूप विराट् देह की सृष्टि कर तथा उसमें जीवरूप से प्रवेश कर ब्रह्माण्डाभिमानी देवतात्मा जीव हुआ। उव्वट—प्रधान तेजोरूप सृष्टिकर्ता ब्रह्मा के रूप में वह क्षेत्रज्ञ उत्पन्न होकर प्रमुख हुआ। उव्वट की वाक्ययोजना इस प्रकार है—ततः विराड् अजायत, विराजः अधिपूरुषः, स जातः ( अतिरिच्यते )।

मैकदोनेल-पीटर्सन–विराज् से पुरुष उत्पन्न हुआ। इन्होंने विराज् में पञ्चमी मानी है। यहाँ चाहे षष्ठी विभक्ति मानी जाय अथवा पञ्चमी, अर्थ अथवा भाव में विसदृशता नहीं आती। विराज् तथा उससे उत्पन्न पुरुष का वर्णन यहाँ किया गया है, दोनों में जन्य-जनकभाव स्पष्ट है। तुलनीय–अदितेर्दक्षो अजायत, दक्षाददितिः परि–ऋ० १०।७२।४ देखिए–ऋ० १।१६४।२०; अथर्व० ९।९।२०; मुण्डकोप० ३।१।१; श्वेताश्वतरोप० ४।६ तथा ऋ० १।१६४।४४।

४. स जातो अत्यरिच्यत—उत्पन्न हुआ, वह प्रमुख बना। सायण-महीधर—उत्पन्न होने वाला वह विराज् पुरुष अतिरिक्त हुआ—देव, तिर्यक्, मनुष्य आदि रूपों वाला हो गया। देव आदि की सृष्टि के अनन्तर भूमि एवं शरीरों की रचना की। मैकदोनेल-पीटर्सन—जब वह उत्पन्न हुआ, तब पीछे एवं आगे की भूमि से परे हो गया।

५. पुरः—पूर्यन्ते सप्तधातुभिः इति पुरः—सात शरीर-धातुओं ( रस, रक्त, मांस, मेदस्, अस्थि, मज्जा, शुक्र—रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः—सुश्रुत ) से प्रपूरित होने वाले—शरीर ( सायण-महीधर )। उव्वट—शरीर अथवा चार तरह के भूत। मैकदोनेल-पीटर्सन—आगे।

पीटर्सन के विचार में 'भूमिम्' को 'अत्यरिच्यत' के कर्म के रूप में ग्रहण करना अधिक समीचीन है।

'परः' अस प्रत्ययान्त होने से अन्तोदात्त है ।

यह मन्त्र तै० आ० ३।१२।५ में तथा अथर्व० १९।६।९ में—विराडग्रे समभवद्...। परिवर्तन के साथ उपलब्ध होता है ॥ ५ ॥

**यत्पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत ।**

**व॒स॒न्तो अ॑स्यासी॒दाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः ॥ ६ ॥**

### पदपाठः

यत् । पुरु॑षेण । ह॒विषा॑ । दे॒वाः । य॒ज्ञम् । अत॑न्वत । व॒स॒न्तः । अ॒स्य॒ । आ॒सी॒त् । आज्य॑म् । ग्री॒ष्मः । इ॒ध्मः । श॒रत् । ह॒विः ॥ ६ ॥

### सायणभाष्यम् ६

यद् यदा पूर्वोक्तक्रमेणैव शरीरेषूत्पन्नेषु सत्सु देवा उत्तरसृष्टिसिद्ध्यर्थं बाह्य-द्रव्यस्यानुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतान्वतिष्ठन्। तदानीमस्य यज्ञस्य वसन्तो वसन्तर्तुरेवाज्यम् आसीत् [ अभूत् ]। तमेवाज्यत्वेन सङ्कल्पितवन्त इत्यर्थः। [ तथा ] शरद्धविरासीत्। तामेव पुरोडाशादिहविष्ट्वेन सङ्कल्पितवन्त इत्यर्थः। पूर्वं पुरुषस्य हविः सामान्यरूपत्वेन सङ्कल्पः। अनन्तरं वसन्तादीना-माज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम् ॥

शुक्लयजुर्वेदसंहितायाम्—

...। व॒स॒न्तो॒ऽस्या॒सी॒दाज्यं॑......॥१४॥

### उव्वटभाष्यम् ६

कथमन्नेनाधिरोहति [ ० तिरोहति ? ]। यद् यस्मात् कारणात् पुरुषेण हविर्भूतेन देवा इन्द्रादयो यथा यज्ञम् अतन्वत विस्तारितवन्तः। तथा योगिनोऽपि पुरुषेणैवामृतभूतेन दीपितेनात्मना आत्मयज्ञं समधिकृतवन्तः। अत्र यज्ञे वसन्त आज्यमासीद् ग्रीष्म इध्मः शरद्धविरिति। इतरयागे वसन्तशब्देन सात्त्विको गुण उच्यते। ग्रीष्मशब्देन राजसः। शरच्छब्देन तामसः। त्रयो हि गुणास्तत्रात्मयज्ञे योगिनो जुह्वतीति ॥

## महीधरभाष्यम्

यत् यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवा उत्तरसृष्टिसिद्धयर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतातनिषत तदानीमस्य वसन्त ऋतुरेवाज्यमासीत्। आज्यत्वेन सङ्कल्पितवन्तः। पूर्वं पुरुषस्य हविः सामान्यरूपत्वेन संकल्पः। अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम्॥

अत्र कण्डिकाव्युत्क्रमोऽस्ति। अस्यानन्तरं "तं यज्ञम्" (९) ततः "तस्माद्यज्ञात्" इति तिस्रः (६, ७, ८) क्रमेणैव। ततः "सप्तास्यासन्" (१५) इतिक्रमोऽपेक्षितः॥

## हिन्दीभाषान्तर

जब देवताओ ने पुरुषरूप हवि से यज्ञ सम्पन्न किया, (तो) इस (यज्ञ) का आज्य ( तपा हुआ घृत ) वसन्त, समिधा ग्रीष्म ( और ) हवि शरद् ( हुई )।

## टिप्पणियाँ

१. सायण तथा महीधर के अनुसार पूर्वकथित क्रम से शरीर-रचना हो जाने पर देवो ने उत्तरसृष्टि की कामना की। उस समय विश्व में अन्य किसी पदार्थ की सत्ता न होने से यज्ञ के निमित्त हवि का अभाव था। इस समस्या के समाधान हेतु देवों ने पुरुष-स्वरूप की हविरूप में मानस आकल्पना की और उसी पुरुष-हवि से मानस-यज्ञ सुप्रतिष्ठ हुआ। इस यज्ञ में आज्य, समिधा एवं हवि के रूप में क्रमशः वसन्त, ग्रीष्म तथा शरद् ऋतुओं का उपयोग किया गया।

उव्वट के विचार से जिस प्रकार इन्द्र आदि देवो ने पुरुष-हवि से यज्ञ किया और उसमें वसन्त, ग्रीष्म एवं शरद् को क्रमशः आज्य, इध्म तथा हवि के रूप में प्रयुक्त किया गया, उसी प्रकार से योगिजन आत्मयज्ञ का सम्पादन करते हैं। आत्मयज्ञ में, योगिसमूह अमृतस्वरूप देदीप्यमान पुरुषप्रतीक आत्मा के द्वारा सम्यक् अधिकार प्राप्त करता है। इस आत्मयज्ञ में सत्त्व, रजस्, तमस् गुणो का हवन किया जाता है। वसन्त, ग्रीष्म एवं शरद् क्रमशः सत्त्व, रजस् तथा तमस् गुणो के प्रतीक हैं।

मैकदोनेल का कथन है कि यहाँ देवताओं के द्वारा व्याकृत पुरुष को हवि बनाकर आदिपुरुष के निमित्त सम्पादित आदर्श पुरुषमेध का वर्णन किया गया है।

२. अतन्वत—तन् + लङ्, प्र० पु०, ए० व० । विस्तृत किया, फैलाया । मैकदोनेल—इस क्रिया का प्रायः 'यज्ञतन्तु' के विस्तार के अर्थ मे आलंकारिक प्रयोग किया जाता है, अतएव इसका अर्थ—करना, संपन्न करना है ।

यजुर्वेद में तृतीय पाद में एक वर्ण कम है, अतः छन्द की दृष्टि से 'आज्यम्' को 'आजियम्' पढ़ना चाहिए । ऋग्वेद के पाठ को देखते हुए 'वसन्तो अस्या०' पढ़ना ही उचित प्रतीत होता है । जब एक पाठ हमारे समक्ष है, जिसमें छन्दोदृष्टि से कोई न्यूनता नहीं है, तब उसे ही क्यो न स्वीकारा जाय ? और अन्य कल्पना से कोई लाभ भी नही है ।

महीधर के विचार से यहाँ मन्त्रो का व्युत्क्रम है । क्रम इस प्रकार होना चाहिए ९, ६, ७, ८, १५ ।

यह मन्त्र तै० आ० ३।१२।३, अथर्व १९।६।१० में उपलब्ध होता है ॥६॥

तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ७ ॥

**पदपाठः**

तम् । यज्ञम् । बर्हिषि । प्र । औक्षन् । पुरुषम् । जातम् । अग्रतः । तेन । देवाः । अयजन्त । साध्याः । ऋषयः । च । ये ॥ ७ ॥

यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः । कीदृशमित्यत्राह अग्रतः । सर्वसृष्टेः पूर्वं पुरुष जातं पुरुषत्वेनोत्पन्नम् । एतच्च प्रागेवोक्तम्—"तस्मात् विराडजायत विराजो अधिपूरुषः" इति । तेन पुरुषरूपेण पशुना देवा अयजन्त । मानसं यागं निष्पादितवन्त इत्यर्थः । के ते देवा इत्यत्राह । साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयस्तदनुकूला ऋषयो मन्त्रद्रष्टारश्च ये सन्ति । ते सर्वेऽप्ययजन्तेत्यर्थः ॥

शु० य० संहितायाम्—तं यज्ञम्०००० ॥ ९ ॥

उव्वटभाष्यम् ९

यथेन्द्रेण तत्र यज्ञेऽग्निष्टोमाख्ये बर्हिषा प्रोक्षितः पुरुषो जातः । तद्वदात्मयज्ञे बर्हिषा प्राणायामेन दीपितेन तस्मिन् पुरुषो जातः । ज्ञानमुत्पद्यते दिव्यम् ।

अग्रतः प्रथमतः। तेन देवा इन्द्रादयः साध्याश्च ऋषयश्च यथायजन्त। तथा देवा योगिनः कपिलादयश्च साध्याश्चापरे ऋषयः। ऋषयश्चाप्येतेनैव (०श्चान्ये तेनैव प्रणवाविद्देन पुरुषेणात्मयज्ञः) कृतवन्त इति ॥

## महीधरभाष्यम्

यज्ञसाधने यज्ञशब्दः। यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वमाभाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणादिभिः संस्कारैः संस्कृतवन्तः। कीदृशम्? अग्रतः सृष्टेःपूर्वं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तं ॥ तस्माद् [ततो] विराडजायत विराजो अधि पूरुषः इति। तेन पुरुषरूपेण पशुना देवा अयजन्त मानसयज्ञं निष्पादितवन्तः। के ते देवा इत्याह—ये साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः। ये च तदनुकूला ऋषयो मन्त्रद्रष्टारस्ते सर्वेऽप्ययजन्त ॥

## हिन्दीभाषान्तर

सर्वप्रथम उत्पन्न उस यज्ञ-पुरुष को कुश पर (रखकर) जल छिड़ककर (पवित्र किया)। उससे देवों, साध्यों तथा ऋषियों ने यजन किया।

## टिप्पणियाँ

१. साध्याः ऋषयश्च ये—साध्य और ऋषि। सायण—महीधर-सृष्टिसाधन के योग्य प्रजापति आदि तथा तदनुकूल मन्त्रद्रष्टा। ऋषि। उव्वट—(देवाः) योगी कपिल आदि तथा साध्य नामक ऋषि (ऋषि का अन्तर्भाव भी साध्यों में ही हो जाता है)। पीटर्सन—पवित्र, ऋषि और देव।

साध्य शब्द का इस सूक्त में दो बार तथा १।१६४।५० मे उल्लेख हुआ है। मैकदोनेल के अनुसार साध्य प्राचीन स्वर्लोकीय प्राणियों के समूह का बोधक है।

ग्रिफिथ के विचार में साध्य सम्भवतः प्राचीन देव याज्ञिकों की अभिव्यक्ति करता है।

साध्य शब्द निघण्टु (३।५।१४) में रश्मिवाचक शब्दों एवं अन्यत्र (५।६।२८) देव-नामों में पढ़ा गया है। साध् (संसिद्धौ) + ण्यत् 'ऋहलोर्ण्यत्' (पा० ३।१।१२४)। नैरुक्त इसे रश्मिवाचक मानते हैं, परन्तु ऐतिहासिकों के अनुसार ये पूर्वकालिक देवसमूह के रूप में 'विश्वसृज्' नामक ऋषि हैं।

ऋषि के लिए देखिए—वाक्सूक्त मन्त्र ५ पर टिप्पणी।

यह निर्देश किया जा चुका है कि उव्वट इस मन्त्र का अर्थ आत्मयज्ञपरक स्वीकारते हैं। जिस प्रकार अग्निष्टोम यज्ञ में कुशप्रोक्षित पुरुष उत्पन्न हुआ, उसी प्रकार आत्मयज्ञ में प्राणायाम से प्रदीप्त पुरुष उत्पन्न होता है। प्राणायाम की साधना से दिव्यज्ञान का उद्भव होता है। बर्हि प्राणायाम का एवं पुरुष दिव्यज्ञान का प्रतीक है। इन्द्र, साध्य एवं ऋषियों ने उस पुरुष से यजन किया है। योगी कपिल आदि एवं अन्य ऋषि आत्मयज्ञ में प्रणव-पुरुष से यज्ञ करते हैं। उव्वट की दृष्टि में विधि-परक यज्ञ एवं आत्मयज्ञ में कोई विभेदक रेखा नहीं है।

छन्द की दृष्टि से 'साध्या' के स्थान पर 'साधिया' पढ़ना चाहिए।

यह मन्त्र तै० आ० ३।१२।८ में इसी प्रकार अथर्व० १९।६।११ में—तं यज्ञं प्रावृषा प्रौक्षन् पुरुषं जातमग्रशः ······वसवश्च ये॥—परिवर्तन के साथ मिलता है॥ ७॥

**तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।**
**पशूँस्ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये॥ ८॥**

**पदपाठः**

**तस्मात्। यज्ञात्। सर्वऽहुतः। सम्ऽभृतम्। पृषत्ऽआज्यम्। पशून्। तान्। चक्रे। वायव्यान्। आरण्यान्। ग्राम्याः। च। ये॥ ८॥**

**सायणभाष्यम् ८**

सर्वहुतः। सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते सोऽयं सर्वहुत्। तादृशात् तस्मात् पूर्वोक्तान्मानसाद् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितम्। दधि चाज्यं चेत्येवमादिभोग्यजातं सर्वं सम्पादितमित्यर्थः। तथा वायव्यान् वायुदेवताकाँल्लोकप्रसिद्धान् आरण्यान् पशूंश्चक्र उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्या गवाश्वादयस्तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते। "—वायवः स्थेत्याह वायुर्वा अन्तरिक्षस्याध्यक्षाः। अन्तरिक्षदेवत्याः खलु वै पशवः वायव एवैनान् परिददाति" (तै० ब्रा० ३।२।१।३) इति॥

शु० य० संहितायाम्—

······। पशूँस्ताँश्चक्रे वायव्यान् आरण्या ग्राम्याश्च ये॥६॥

### उव्वटभाष्यम् ६

यथा अग्निष्टोमाख्यात् तस्माद् यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यं तेन वायव्यान् पशून् आरण्या ग्राम्याश्च ते तान् कृतवन्तः। एवमात्मयज्ञात् सर्वहुतात् पूरिताद् उत्पन्नेन योगिनः सर्वान् पशून् सर्वाणि भूतजातानि करतलवत् पश्यन्ति। पश्यन्ति किल ज्ञानतेजसा भूतजातानि।

### महीधरभाष्यम्

सर्वं हूयते यस्मिन् स सर्वहुत् तस्मात् पुरुषमेधाख्याद् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितम्। दध्याज्यादिभोग्यजातं सम्पादितमित्यर्थः। पुरुषेणेति शेषः। तथा स पुरुषो वायव्यान् वायुदेवताकान् तान् प्रसिद्धान् पशून् चक्र उत्पादितवान्। "अन्तरिक्षदेवत्याः खलु वै पशवः" इति श्रुतेः। अन्तरिक्षस्य च वायुदेवत्यत्वात् पशूनां वायुदेवत्वम्। तान् कान्? ये चारण्या अरण्ये भवा हरिणादयः। ये च ग्रामभवा गवाश्वादयस्तान् पशून् चक्रे॥

### हिन्दीभाषान्तर

जिसमें सब कुछ होम दिया जाता है—सर्वहुत् उस यज्ञ से आज्य की बूँदें भलीभाँति एकत्र की गयीं (उनसे) वायुदेवता से सम्बद्ध, बनैले तथा ग्रामीण पशुओं को बनाया।

### टिप्पणियाँ

१. यज्ञात्—सायण—मानस यज्ञ से। महीधर—पुरुषमेध नामक यज्ञ से।

२. सर्वहुतः—सायण—सर्वात्मकः पुरुषो हूयते यस्मिन् तस्मात्—जिसमें सर्वात्मक पुरुष को होमा गया है (उस यज्ञ से)। महीधर—सर्वं हूयते यस्मिन्—जिसमें सब कुछ होमा गया है, (उस पुरुषमेध यज्ञ से)। सर्व + हु + क्विप् पञ्चमी, ए० व०, 'यज्ञात्' का विशेषण।

३. सम्भृतम्—सम् + हृ + क्तः। वेद में हृ एवं ग्रह धातुओं के 'ह' को भ हो जाता है—'हृग्रहोर्भश्छन्दसि' (वा०, पा० ३।१।८४)। सायण-महीधर—सम्पादित किया गया। मैकदोनेल—एकत्र किया गया। पीटर्सन—उत्पन्न किया गया। भली-भाँति एकत्र किया गया।

४. पृषदाज्यम्—पृषत् च तद् आज्यम् (पृषु सेचने—पर्षति—पृष् + अतच् (उणा० ३।१११), कर्मधारय समासों में अन्त्य पर उदात्त होता है,

अतः 'आज्यम्' में उदात्त। सायण-महीधर—दधि-मिश्रित आज्य ( दधि, आज्य आदि भोग्य पदार्थ)। मैकदोनेल—घनीभूत, जमा हुआ घृत। पीटर्सन—घृत।

५. वायव्यान्—वायोः इमे वायव्याः-वायु + अण्। सायण-महीधर-वायु देवता से सम्बद्ध पशु। मैकदोनेल—वायवीय जङ्गली पशु। पीटर्सन—आकाशीय पशु।

यह पद उन अपवादो मे से है जिनमें उच्चारण-दशा में भी स्वतन्त्र स्वरित की स्थिति बनी रहती है। इसके 'अन्' को आगे आने वाले अ के कारण—'दीर्घादटिसमानपादे' ( पा० ८।३।९ से ) 'आँ' नही हुआ; क्योंकि यह पाद के अन्त में है। इससे यह प्रतीत होता है कि पहले आन्तर एवं बाह्य दोनों प्रकार के पाद मूलतः स्वतन्त्र होते थे ( मैकदोनेल, वै० ग्रा० स्टू०, पृ० १९९ )।

६. आरण्यान्—अरण्ये भवाः आरण्याः—अरण्य + अण्। सायण-महीधर—लोकप्रसिद्ध वन्यपशु।

७. ग्राम्याः—ग्रामे भवाः—ग्राम + यत्, 'ग्रामाद्यखञौ' ( पा० ४।२।९४ ) गाँव मे होने वाले पशु ( गो, अश्व आदि )।

यजुर्वेद के मन्त्र का भी यही अर्थ होता है।

छन्द की दृष्टि से द्वितीय पाद में 'पृषदाज्यम्' के स्थान पर 'पृषदाजियम्' तथा चतुर्थ पाद में 'ग्राम्याश्च' के स्थान पर 'ग्रामियाश्च' पढ़ना चाहिए, क्योंकि दोनो पादों मे एक-एक वर्ण की कमी है।

यह मन्त्र तै० आ० ३।१२।३ में तथा अथर्व० १९।६।१४ में भी उपलब्ध होता है।

८. उव्वट यहाँ भी आत्मयज्ञपरक अर्थ करते हैं। इस प्रकार के सर्वहुत् यज्ञ के द्वारा प्राप्त ज्ञानतेज से योगिजन समस्त भूतों को करतलगत देखता है ॥८॥

**तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।**

**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥**

**पदपाठः**

तस्मात्। यज्ञात्। सर्वऽहुतः। ऋचः। सामानि। जज्ञिरे। छन्दांसि। जज्ञिरे। तस्मात्। यजुः। तस्मात्। अजायत ॥ ९ ॥

## सायणभाष्यम् ९

सर्वहुतस्तस्मात् पूर्वोक्ताद् यज्ञाद् ऋच सामानि [च] जज्ञिर उत्पन्नाः। तस्माद् यज्ञात् छन्दांसि गायत्र्यादीनि जज्ञिरे। तस्मात् यज्ञात् यजुरपि अजायत ॥

शु० य० संहितायाम्—
……छन्दा॑ꣳसि……॥७॥

## उव्वटभाष्यम् ७

तस्मादेव यज्ञात् सर्वहुतः प्रज्वालिताद् यथा ऋचः सामानि यजूंषि च देवा उत्पादयन्ति छन्दांसि च। एवमात्मयज्ञे प्रणवेन दीपिते स्वयमेव ज्ञानादधिष्ठितानि भवन्ति। एवं येन परमात्मनि ज्ञायते सर्वे जग्धाः (?) सर्वं वाङ्मयं ज्ञानं (तं) भवतीति ॥

## महीधरभाष्यम्

सर्वहुतस्तस्माद् यज्ञाद् ऋचः सामानि च जज्ञिर उत्पन्नानि। छन्दांसि गायत्र्यादीनि जज्ञिरे तस्माद् यजुरप्यजायत। ऋग्यजुःसामभिश्छन्दोभिश्च विना यज्ञा न सिध्यन्ति ॥

## हिन्दीभाषान्तर

जिसमें सब कुछ होम दिया जाता है—सर्वहुत् उस यज्ञ से ऋचाएँ (और) साम उत्पन्न हुए। उससे छन्द उत्पन्न हुए। उससे यजुष् उत्पन्न हुए।

## टिप्पणियाँ

१. ऋचः—ऋचाएँ, ऋग्वेद में स्थित मन्त्रों को ऋक् कहते हैं। जिन मन्त्रों में अर्थ के कारण पाद व्यवस्थित रहते हैं, उन छन्दोबद्ध मन्त्रों को ऋक् कहते हैं—तेषामृग् यत्रार्थवशेन पादव्यवस्था—जै० सू० २।१।३५। तुलनीय—नियताक्षरपादावसाना ऋक्—उव्वट, शु० य० सं० १।१।

२. सामानि—गेय ऋचाओं को 'साम' कहते हैं—गीतिषु सामाख्या—जै० सू० २।१।३६। इनका संग्रह सामवेद में है।

३. यजुः—ऋक् एवं साम से व्यतिरिक्त मन्त्रों को यजुष् कहते हैं—शेषे यजुः—जै० सू० २।१।३७। तुलनीय—अनियताक्षरपादावसानं यजुः—उव्वट, शु० य० सं० १।१। गद्यमन्त्रों को यजुष् कहते हैं।

सायण एवं महीधर इस मन्त्र से ऋक्, यजुष्, साम एवं छन्दों का ग्रहण करते हैं। सेन्टपीटर्सबर्गकोष के अनुसार छन्द से सम्भवतः जादू-टोने का द्योतन होता। जादू-टोने का वर्णन अथर्ववेद में है, अतः इससे अथर्ववेद का ग्रहण सम्भव है। तुलनीय—ऋचः सामानि छन्दांसि•••११।७।२४ अथर्व० हरिवंश ५।९४९।१ ( म्योर; ओ० सं० टे० २, पृ० १८९ )।

मैकदोनेल के विचार से इस मन्त्र में ऋग्वेद, सामवेद तथा यजुर्वेद का उल्लेख हुआ है। अथर्ववेद चतुर्थवेद के रूप में बहुत बाद में स्वीकृत हुआ है।

सम्भवतः अथर्ववेद के अनेक अंशों की रचना या तो ऋग्वेद के साथ-साथ या उसके पूर्व हुई है ( ब्लूमफील्ड, दि अथर्ववेद, पृ० २२ आदि ), अतएव छन्द से अथर्ववेद का संकेत मानना तर्कहीन नहीं कहा जा सकता। इस सूक्त की रचना उत्तरकालीन स्वीकारी जाती है, अतएव इसमें अथर्ववेद का संकेत पाना विस्मयावह नहीं होगा।

ऋग्यजुःसामरूपत्वात् त्रयी सा परिकीर्तिता।
कार्यभेदात् त्रयीत्वेऽपि चतुर्धा सा प्रकीर्तिता॥
ऋचो यजूंषि सामानि ह्यथर्वाङ्गिरसस्तथा।
चातुर्होत्रप्रधानत्वादृगादित्रितयं त्रयी॥

—अहि० सं० १२।५-७

उव्वट के विचार से यह मन्त्र भी आत्मयज्ञपरक है। पूर्वोक्त प्रणव पुरुष से आत्मयज्ञ के प्रदीप्त हो जाने पर मनुष्य स्वतः ज्ञान का अधिष्ठान बन जाता है।

९. जज्ञिरे—जन् ( आत्मनेपद ) + लिट्, प्र० पु०, ब० व०।

यह मन्त्र तै० आ० ३।१२।१० मे एवं १९।८८।१३ अथर्व० में ( छन्दोंह परिवर्तन के साथ ) उपलब्ध होता है॥ ९॥

तस्मा॒दश्वा॑ अजायन्त॒ ये के चो॑भ॒याद॑तः।
गावो॑ ह जज्ञिरे॒ तस्मा॑त् तस्मा॑ज्जा॒ता अ॑जा॒वयः॑॥१०॥

**पदपाठः**

तस्मा॑त्। अश्वाः॑। अ॒जा॒य॒न्त॒। ये। के। च॒। उ॒भ॒याद॑तः। गावः॑। ह। ज॒ज्ञि॒रे॒। तस्मा॑त्। तस्मा॑त्। जा॒ताः। अ॒जा॒वयः॑॥ १०॥

## सायणभाष्यम् १०

तस्मात् पूर्वोक्ताद्यज्ञात् अश्वा अजायन्त उत्पन्नाः । तथा ये के च अश्वव्यतिरिक्ता गर्दभा अश्वतराश्च उभयादतः उर्ध्वाधोभागयोरुभयोः दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा तस्माद् यज्ञात् गावश्च जज्ञिरे । किंच तस्माद् यज्ञाद् अजावयः च जाताः ॥ ( इत्यष्टादशो वर्गः )

**शुक्लयजुर्वेदसंहितायाम्—तस्माद् ॥ ८ ॥**

## उव्वटमहीधरयोर्भाष्यम् ८

तस्माद् यज्ञादश्वा अजायन्त उत्पन्नाः । तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयदतः । छान्दसं दीर्घत्वम् । ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा ह स्फुटं तस्माद् यज्ञाद् गावश्च जज्ञिरे । किञ्च तस्माद् यज्ञाद् अजावयोऽजा अवयश्च जाताः । न हि पशुभिर्विना यज्ञः सिध्येत ॥

## हिन्दीभाषान्तर

उससे घोडे और जो कोई दोनों ओर दाँतो वाले ( पशु ) ( हैं )—उत्पन्न हुए । उससे गायें उत्पन्न हुईं । उससे भेड़-बकरियाँ जनमीं ।

## टिप्पणियाँ

१. उभयादतः—उभयोः दन्ताः येषां ते—उभयादतः—ऊपर-नीचे दोनों ओर, जिन पशुओं के दाँत होते हैं उन्हें उभयादत् कहते हैं ।

२.अजावयः—अजाश्च—अवयश्च—अजावयः—बकरियाँ और भेंड़े । पदपाठ में द्वन्द्व समास अवगृहीत नहीं होता । अवि—तुलनीय—ग्रीक ओविस्, लैटिन ओवस् ।

भाष्यकार 'उभयादतः' पद से खच्चर, गधे आदि का ग्रहण करते हैं । पशुओं के बिना यज्ञ सफल नहीं हो सकता, अतएव पशुसृष्टि आवश्यक थी ।

छन्द की दृष्टि से 'चोभयादतः' के स्थान पर 'च उभयादतः' पढ़ना चाहिए । यह मन्त्र तै० आ० ३।१२।११, अथर्व० १९ । ६ । १२—ये च के चोभ्...में मिलता है ॥ १० ॥

**यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।**
**मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥**

### पदपाठः

यत् । पुरुषम् । वि । अदधुः । कृतिधा । वि । अकल्पयन् । मुखम् । किम् । अस्य । कौ । बाहू इति । कौ । ऊरू इति । पादौ । उच्येते इति ॥११॥

### सायणभाष्यम् ११

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड् रूपं व्यदधुः सङ्कल्पेनोत्पादितवन्तः तदानीं कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः । अस्य पुरुषस्य मुखं किम् आसीत् । कौ बाहू अभूताम् । का ऊरू । का च पादावुच्येते । प्रथमं सामान्यरूपः प्रश्नः पश्चात् मुखं किमित्यादिना विशेषविषयाः प्रश्नाः ॥

शु० य० संहिताम्—

····। मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ॥१०॥

### उव्वटभाष्यम् १०

यत् पुरुषं देवा इन्द्रादयस्तस्मिन् यज्ञे व्यदधुः कृतवन्तो यथा । तद्वद् योगिन आत्मयज्ञे पुरुषं ज्ञानं यद् ज्ञानान्तं तत् कृतवन्तः कतिप्रकारं विकल्पित-वन्तः । तस्येवंविधस्य कि मुखं कौ बाहू कौ ऊरू पादौ उच्येते उच्यन्तामित्यर्थः। ब्राह्मणक्षत्रियवैश्यशूद्रा स्थिता इत्यर्थः ॥

### महीधरभाष्यम्

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्यन्ते । प्रजापतेः प्राणरूपा देवा यद् यदा पुरुषं व्यदधुः कालेनोदपादयन् । यदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्त अस्य पुरुषस्य मुखं किमासीत् किं बाहू ऊरू चास्ताम् । किं च पादौ उच्येते पादावपि किमास्तामित्यर्थः ॥

### हिन्दीभाषान्तर

जब पुरुष को देवों ने विभक्त किया, तब (उसे) कितने भागों में कल्पित किया ? इसका मुख क्या ( हुआ ), ( इसकी ) भुजाएँ क्या (हुईं), (इसकी) जाँघें क्या ( हुईं ), ( और इसके ) पैर क्या कहे जाते हैं ।

## टिप्पणियाँ

यह मन्त्र अगले मन्त्र की अवतरणिका है। वक्ष्यमाण वर्ण्य को प्रस्तुत करने के निमित्त यहाँ विचिकित्सा की जा रही है।

१. व्यदधुः—वि + धा + लङ्, प्र० पु०, ब० व०। सायण—(संकल्प के द्वारा) उत्पन्न किया। मही०—(समय प्राप्त कर) उत्पन्न किया। मैकदोनेल—जब देवताओं ने पुरुष का मेध्य पशु के रूप में संज्ञपन किया। साक्ष्यों के अनुसार यहाँ पदपाठ 'विऽअदधुः' होना चाहिए। प्रधान वाक्य की क्रिया होने पर उपर्युक्त पद-पाठ उचित होता। प्रधान वाक्य की सोपसर्गक क्रियाओं में पद-पाठ के समय उपसर्ग और क्रियारूप को अलग-अलग लिखा जाता है, पर उपवाक्य की क्रिया को अवगृहीत किया जाता है। पदपाठ में इस प्रकार का व्यतिक्रम अन्यत्र भी मिलता है—देखिए—ऋ० ८।४८।५ में 'प्रागाः' एवं ८।४८।१० में 'न्यधायि'। इस पदपाठ का असमीचीनताहेतुक एक अन्य प्रमाण भी है—मुख्य क्रियारूप स्वरविहीन होता है, परन्तु यहाँ 'अट्' उदात्तयुक्त है।

२. कतिधा—किम् + डति—'किमः सङ्ख्यापरिमाणे डति च' (पा० ५।२।४१) = कति + धा—'सङ्ख्याया विधार्थे धा' (पा० ५।३।४२)। कितने प्रकार से, किस तरह।

३. व्यकल्पयन्—वि + क्लृप् + लङ्, प्र० पु०, ब० व०। सायण—महीधर—विविध प्रकार से कल्पित किया। मैकदोनेल—बाँटा, विभक्त किया। पीटर्सन—आकार दिया, रूप दिया।

४. कौ—किम्, द्विव०, प्रथमा। मैकदोनेल—ऋग्वेद के प्राचीनतर भागों में व्यंजनों के पूर्व द्विवचन के 'औ' के स्थान पर 'आ' उपलब्ध होता है।

५. उच्येते—वच् + लट्, प्र० पु०, द्वि० व०।

छन्द की दृष्टि से प्रथम पाद में 'व्यदधुः' के स्थान पर 'वि अदधुः' तथा द्वितीय पाद में 'व्यकल्पयन्' के स्थान पर 'वि अकल्पयन्' पढ़ना चाहिए; क्योंकि इन दोनों चरणों में एक-एक वर्ण कम है।

यजुर्वेद मन्त्र के तृतीय पाद में ८ वर्णों के स्थान पर ९ वर्णों का प्रयोग किया गया है, अतः १ वर्ण अधिक है। प्रथम 'किम्' को निकाल देने पर इस समस्या का समाधान करना शक्य है—'मुखमस्यासीत् किं बाहू'।

आर्नाल्ड के अनुसार 'पुरुषम्' पूरुषम्' तथा 'उच्येते' को 'उच्यते' पढ़ना चाहिए ( वैदिक मीटर, पृ० ३२२ )।

यह मन्त्र तै० आ० ३।१२।१२ में मिलता है। अथर्व० १९।६।५ में—'किमस्य किम्' को छोड़कर शु० य० सं० की भाँति है ॥ ११ ॥

**ब्रा॒ह्म॒णो॑ऽस्य॒ मुख॑मासीद्बा॒हू रा॑ज॒न्य॑: कृ॒तः ।**
**ऊ॒रू तद॑स्य॒ यद्वैश्य॑: प॒द्भ्यां शू॒द्रो अ॑जायत ॥१२॥**

## पदपाठः

ब्रा॒ह्म॒णः । अ॒स्य॒ । मुख॑म् । आ॒सी॒त् । बा॒हू इति॑ । रा॒ज॒न्य॑: कृ॒तः । ऊ॒रू इति॑ । तत् । अ॒स्य॒ । यत् । वैश्य॑: । प॒त्ऽभ्याम् । शू॒द्रः । अ॒जा॒य॒त॒ ॥१२॥

## सायणभाष्यम् १२

इदानीं पूर्वोक्तानां [ ०क्त ] प्रश्नानामुत्तराणि दर्शयति । अस्य प्रजापते-र्ब्राह्मणो ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखमासीत् । मुखादुत्पन्न इत्यर्थः । योऽयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः स बाहू कृतो बाहुत्वेन निष्पादितः । बाहुभ्या-मुत्पादित इत्यर्थः । तत् तदानीम् अस्य प्रजापतेर्यद् [ यो ] ऊरू तद्रूपो वैश्यः सम्पन्न । ऊरुभ्यामुत्पन्न इत्यर्थः । तथास्य पद्भ्यां पादाभ्यां शूद्रः शूद्रत्व-जातिमान् पुरुषः अजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिर्यः संहितायां सप्तमकाण्डे ॥ " स मुखतस्त्रिवृतं निरमिमीत" (तै० सं० ७।१।१।४) इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे तत्परतयैव योजनीये ॥

शु० य० संहितायाम्—

**ब्रा॒ह्म॒णो॑ऽस्य॒ मुख॑मासीद् बा॒हू रा॑ज॒न्य॑: कृ॒तः ।**
**ऊ॒रू तद॑स्य॒ यद्वैश्य॑: प॒द्भ्याᳪ᳭ शू॒द्रो अ॑जायत ॥ ११ ॥**

## उव्वटभाष्यम् ११

अस्य यज्ञोत्पन्नस्य पुरुषस्य ये केचिद् ब्राह्मणास्ते मुखमासीत् । ये क्षत्रियास्ते बाहू कृताः । ये वैश्यास्तेऽस्योरू कृताः । ये शूद्रास्ते पद्भ्याम् अजायन्तेति कल्प ( ल्प्य ) न्ते तदस्योपन्नत्वादिति । एवमेतेऽवयवाः शिरःप्रभृतयः पुरुषस्य विद्यन्ते नान्ये इति ।

## महीधरभाष्यम्

पूर्वोक्तप्रश्नोत्तराण्याह । ब्राह्मणो ब्रह्मत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुखमासीत् । मुखादुत्पन्न इत्यर्थः । राजन्यः क्षत्रियत्वजातिविशिष्टो बाहू कृतो बाहुत्वेन निष्पादितः । तदानीमस्य प्रजापतेर्यद् यावूरू तद्रूपो वैश्यः सम्पन्नः । ऊरुभ्यामुत्पादिता इत्यर्थः । तथास्य पद्भ्या शूद्रत्वजातिमान् पुरुषोऽजायतोत्पन्नः॥

## हिन्दीभाषान्तर

इसका मुख ब्राह्मण हुआ, दोनों बाहुओं को क्षत्रिय बनाया गया । इसकी जो जाँघें (हैं) उन्हें वैश्य (बनाया गया), (और) पैरों से शूद्र उत्पन्न हुआ ।

## टिप्पणियाँ

इस मन्त्र पर आधृत हो प्रायः सभी विद्वान् चातुर्वर्ण्य समाज की कल्पना करते हैं । इससे वर्णों की तात्कालिक सामाजिक अवस्था का भी परिज्ञान होता है । इसी मन्त्र में सर्वप्रथम चारो वर्णों का संकेत मिलता है ।

अवेस्ता में भी इस प्रकार का विभाजन उपलब्ध होता है—आथ्रवन् जओतर; ख्षथ्र, रथैस्तर, वास्य । वैश्य, तु० लैटिन विओस, ग्रीक आइकोस । शूद्र–तु०, सिन्धुदेश का नगर-सुद्रोस्; जन-सुद्रोइ ।

१. राजन्यः–राजन् + यत् 'ये चाभावकर्मणोः' (पा० ६।४।१६८), अथवा । 'राजश्वशुराद्यत्' (पा०४।१।१३७)या राजति-राज दीप्तौ + अन्यः-(उणा०३।१००)।

छन्द की दृष्टि से 'राजन्यः' के स्थान पर 'राजनियः' पढ़ना चाहिए, क्योंकि ७ वर्णों का ही प्रयोग किया गया है ।

यह मन्त्र तै०आ०३।१।२।१२ में एवं अथर्व०१९।६।६ में–राजन्योऽभवत् । मध्यं तदस्य…॥—परिवर्तन के साथ उपलब्ध होता है ॥ १२ ॥

**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।**
**मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत ॥१३॥**

## पदपाठः

चन्द्रमाः । मनसः । जातः । चक्षोः । सूर्यः । अजायत । मुखात् । इन्द्रः । च । अग्निः । च । प्राणात् । वायुः । अजायत ॥१३॥

### सायणभाष्यम् १३

यथा दध्याज्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि अस्मादेवोत्पन्ना इत्याह । प्रजापतेर्मनसः सकाशाच्चन्द्रमा जातः । चक्षोश्च चक्षुषः सूर्योऽप्यजायत । अस्य मुखादिन्द्रश्चाग्निश्च देवावुत्पन्नौ । अस्य प्राणाद् वायुरजायत ॥

### शु० य० संहितायाम्

.................

श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

### उव्वटभाष्यम् १२

तस्यैवंविधस्य यज्ञोत्पन्नस्य पुरुषस्य चन्द्रमा मनसश्चेतसो जातोऽजायतेति कल्पना । मन एव चन्द्रमाः । चक्षोर्नेत्राभ्यां सूर्यः । नेत्रे एव सूर्यः । यः प्राणो जीवः स एव वायुः श्रोत्रादजायतेति कल्प्यते । श्रोत्रमेव वायुः । योऽयमग्निः स मुखाद् अजायतेति कल्प्यते । मुखमेवाग्निः । अंशोत्पन्नत्वादिति ॥

### महीधरभाष्यम्

यथा दध्यादिद्रव्याणि गवादयः पशव ऋगादिवेदा ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह—मनसः सकाशाच्चन्द्रमा जातः । चक्षोश्चक्षुषः सकाशात् सूर्योऽजायत । वायुः प्राणश्च श्रोत्रात् कर्णादजायत । मुखादग्निरजायत ॥

### हिन्दीभाषान्तर

मन से चन्द्रमा उत्पन्न हुआ, नेत्रों से सूर्य जनमा, मुख से इन्द्र तथा अग्नि, और प्राण से वायु उत्पन्न हुआ।

यजुर्वेदीय मन्त्र के ३, ४ पाद का हि० भा०—

कान से वायु तथा प्राण एवं मुख से अग्नि उत्पन्न हुआ।

### टिप्पणियाँ

१. चन्द्रमाः—चायन् ( पश्यन् ) द्रमति ( गच्छति ) इति—चायन् + द्रम + असुन्– (निरु० ११।५)। चन्द्रश्चासौ माता च—च चन्द्र + मा + असिः– ( उणा० ४।२२८ )। चन्द्रं सादृश्येन माति—( उणा० ४।२२८ )। चान्द्रं

मानमस्य— चन्द्रमाः । चारु + ( शोभनं द्रवति ) द्रु + असुन् ( बाहुलकात् ) । चिरं द्रवति—चिर—द्रु + असुन ( बाहुलकात् ) । चन्द्र ( आह्लादं ) मिमीते—चन्द्र + मा + असुन् ।

२. चक्षोः—मैकदोनेल के अनुसार चाक्षुष् का एवंविध पञ्चम्यन्त रूप केवल इस मन्त्र में आया है । सामान्यतः चक्षुष् पद का प्रयोग हुआ है । एक अन्य सूक्त में चक्षुष् एवं प्राण का सम्बन्ध सूर्य एवं वायु से बताया गया है—सूर्य चक्षुर्गच्छतु वातमात्मा—ऋ० १०।१।१६ ।

३. अग्निः—अग्र + नी + क्विप् (पा० ३।२।६१ ) । अग्र + वेज् + इन् ( बाहुलकात ) । अङ्ग + नी + क्विप् । अ + क्नूय् + क्विन् । अङ्गनं दहनं वा नयति—अञ्ज् या दह + नी + क्विप् । तुलनीय—लैटिन—इग्निस, स्लावी-ओग्नि, लिथुआनी—उग्निस स्जवेन्ता, लेटिश—उग्गुनस माता । आधुनिक विद्वानों के अनुसार अग्नि शब्द, 'अज' धातु से निष्पन्न हुआ है—तुलनीय—लैटिन—अगो, ग्रीक—अगो ।

४. वायुः—वातीति—वा + उण् ( उणा० १। १ । ) वेञ् ( गति ) + अण् ( बाहुलकात् ) अथवा उण् ( उणा० १।२ ) ।

यह मन्त्र तै०आ० ३।१२।१४, अथर्व०१३।६।७ में उपलब्ध होता है ॥ १३ ॥

**नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।**
**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अकल्पयन् ॥१४॥**

### पदपाठः

नाभ्याः । आसीत् । अन्तरिक्षम् । शीर्ष्णः । द्यौः । सम् । अवर्तत । पत्ऽभ्याम् । भूमिः । दिशः । श्रोत्रात् । तथा । लोकान् । अकल्पयन् ॥१४॥

### सायणभाष्यम् १४

यथा चन्द्रादीन् प्रजापतेर्मनः प्रभृतिभ्योऽकल्पयन् तथान्तरिक्षादीन् लोकान् प्रजापतेः नाभ्यादिभ्यो देवाः अकल्पयन् उत्पादितवन्तः । एतदेव दर्शयति । नाभ्याः प्रजापतेर्नाभेः अन्तरिक्षमासीत् । शीर्ष्णः शिरसः द्यौः समवर्ततः उत्पन्ना । अस्य पद्भ्यां पादाभ्यां भूमिः उत्पन्ना । अस्य श्रोत्रात् दिशः उत्पन्नाः ॥

शु० य० संहितायाम्—

नाभ्या आसीदन्तरिक्ष ँ शीर्ष्णो ……….।

……………………लोकाँ ॥२॥ अकल्पयन् ॥१३॥

उव्वटभाष्यम् १३

तस्यैवंविधस्य पुरुषस्य या नाभिस्तदेवान्तरिक्षं नभः। यद्यौस्तच्छीर्षं शिरः। समवर्ततेति कल्पितम्। पादौ भूमिरेव। श्रोत्रं श्रवणौ दिशः। श्रोत्रावयवा यस्माद् दिशो ब्राह्मणो जातास्तथैव सर्वान् पुरुषस्यावयवभूतान् अकल्पयदिति ॥

महीधरभाष्यम्

यथा प्रजापतेर्मनः प्रभृतयश्चन्द्रादीनकल्पयस्तथान्तरिक्षादिलोकानित्याह— नाभ्या इति। प्रजापतेर्नाभेः सकाशादन्तरिक्षमासीत्। शीर्ष्णः शिरसो द्यौः स्वर्गः समवर्ततोत्पन्ना। अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना श्रोत्राद् दिश उत्पन्नाः। तथा तेनोक्तेन विधिना लोकान् भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः। फलदानोत्सुकाः काला इति शेषः ॥

हिन्दीभाषान्तर

नाभि से अन्तरिक्ष हुआ, सिर से द्युलोक बना। पैरो से भूमि और कानों से दिशाएँ इस प्रकार लोकों को कल्पित किया।

टिप्पणियाँ

१. नाभ्याः—णह् (बन्धने)+इञ् (उणा० ४।११८), पञ्चमी, ए० व०।

२. शीर्ष्णः—देखिए, इसी सूक्त के प्रथम मन्त्र में सहस्रशीर्षा।

३. समवर्तत—मैकदोनेल—पद्भ्या भूमिर्दिशः श्रोत्रात् के साथ भी इसका अन्वय करना चाहिए—अधि समवर्तत, १०।१२९।१ ऋ०।

एड्डा के सृष्टि-वर्णन में 'यमिर, हिमिर' नामक दैत्यों की सृष्टि से यह मन्त्र तुलनीय है (ग्रिफिथ)।

छन्द की दृष्टि से 'द्यौः' के स्थान पर 'दिऔः' पढ़ना चाहिए।

यह मन्त्र तै० आ० ३।१२।२५, अथर्व० १९।६।८ में भी है ॥ १४ ॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।

देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ १५ ॥

## पदपाठः

सप्त । अस्य । आसन् । परिऽधयः । त्रिः । सप्त । सम्ऽइधः । कृताः । देवाः । यत् । यज्ञम् । तन्वानाः । अबध्नन् । पुरुषम् । पशुम् ॥१५॥

## सायणभाष्यम् १५

अस्य साङ्कल्पिकयज्ञस्य गायत्र्यादीनि सप्तच्छन्दांसि परिधय आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधयः उत्तरवेदिकास्त्रय आदित्यश्च सप्तमः परिधि प्रतिनिधिरूपः। अत एवाम्नायते—"न पुरस्तात् परिदधात्या [ ध्यादा ] दित्यो ह्येवोद्यन् पुरस्ताद् रक्षांस्यपहन्ति" ( तै० सं० २।६।६।३ ) इति। तत एत आदित्यसहिताः सप्तपरिधयोऽत्र सप्तच्छन्दोरूपाः। तथा समिधस्त्रिः सप्त त्रिगुणीकृत [ गुणित— ] सप्तसङ्ख्याका एकविंशतिः कृता। "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" ( तै० सं० ५।१।१०।३ ) इति श्रुताः पदार्था एकविंशतिदारुयुक्तेन्धनत्वेन भाविताः। यद् यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापति प्राणेन्द्रियरूपा यज्ञं तन्वाना मानसं यज्ञं तन्वानाः कुर्वाणाः पशुम् अबन्धन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वत्र "यत्पुरुषेण हविषा" इत्युक्तम् ॥

शु० य० संहितायाम्—सप्ता·········॥ १५ ॥

## उव्वटभाष्यम् १५

देवा इन्द्रादयो यथा यज्ञं पुरुषमेधाख्यं विस्तारयन्तः पुरुषं पशुम् अबध्नन् हतवन्तः। अस्य पुरुषमेधयज्ञस्य सप्त समुद्राः परिधय आसन्। भारते हि वर्षे यागः प्रवर्तते। त्रिः सप्त छन्दांसि गायत्र्यादीनि समिधः कृता आत्मयागे परिधिशब्देन पृथिव्यापस्तेजोवायुराकाशं मनो बुद्धिरित्येते परिधयः कल्प्यन्ते। त्रिः सप्त समिधः—पञ्चमहाभूतानि पृथिव्यादीनि पञ्चतन्मात्राणि रूपादीनि पञ्च बुद्धीन्द्रियाणि श्रोत्रादीनि पञ्च कर्मेन्द्रियाणि पाण्यादीनि मनश्च एतत्त्रिः सप्त समिधः कल्पयन्ति। तथा देवा दीप्यमाना ज्ञानेन योगिनः समाध्याख्यं यज्ञं तन्वानां विस्तारयन्तः। पुरुषं ज्ञानं पुरुमेधरूपेणावस्थितम् अबध्नन् अगृह्णन् ॥

## महीधरभाष्यम्

यद् यदा देवाः प्रजापति प्राणेन्द्रियरूपा यज्ञं तन्वाना मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः। एतदेवाभिप्रेत्य पूर्वं (१४) "पुरुषेण हविषा" इत्युक्तम्। तदा सङ्कल्पितस्य यज्ञस्य सप्त गायत्र्यादीनि छन्दांसि परिधय आसन्। ऐष्टिकस्याहवनीयस्य त्रयः परिधय औत्तरवेदिकास्त्रय आदित्यः सप्तमः परिधिः प्रतिनिधिरूपः तथा च श्रुतिः—"गुप्त्यै वा अभितः परिधयो भवन्त्यथैतत् सूर्यमेव पुरस्ताद् गोप्तारं करोति" (श० ब्रा० १।३।४।८) इति। तत एते आदित्यसहिताः सप्तपरिधयोऽत्र सप्तच्छन्दोरूपाः। त्रिः सप्त त्रिगुणाः सप्त, एकविंशतिसङ्ख्याकाः समिधः कृताः। "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यः" (श० ब्रा० ७।१।१।३४, तु० श० ब्रा० १।३।५।११; ११।२।६।११) एत एकविंशतिरेकविंशदारुयुक्तेध्मत्वेन भाविताः। यद्वा सप्त समुद्राः क्षीरोदादयोऽस्य यज्ञस्य परिधय आसन्। भारतखण्डे यागा भवन्तीति समुद्राणां परिधित्वम्। त्रिस्त्रिगुणाः सप्त छन्दोवर्गाः समिधः कृताः—गायत्र्यादीनि सप्त, अतिजगत्यादीनि सप्त, कृत्यादीनि सप्तेति ॥

## हिन्दीभाषान्तर

जब देवों ने यज्ञ सम्पन्न करते हुए पुरुष-पशु को (यूप में) बाँधा, (तब) इसकी सात परिधियाँ थीं, (और) तीन सात (इक्कीस) समिधाएँ बनाई गयीं।

## टिप्पणियाँ

१. सप्त परिधयः–परि + धा + किः–'उपसर्गे घोः किः' (पा० ३।३।९२)। सायण—पूर्वोक्त साङ्कल्पिक यज्ञ में गायत्री आदि (उष्णिक्, अनुष्टुप्, बृहती, पंक्ति, त्रिष्टुप् और जगती) सात छन्द। आहवनीय अग्नि के तीन ओर रखी जाने वाली हरी लकड़ी को परिधि कहते हैं। इनकी लम्बाई बाहु के बराबर होती है। इनका निर्माण पलाश, विकंकत या कर्ष्मरि वृक्ष के काष्ठ से होता है। आहवनीय अग्नि ऐष्टिक एवं याज्ञिक द्विधा होता है। दक्षिण, पश्चिम एवं उत्तर की ओर परिधि लगा दी जाती है, परन्तु पूर्व की ओर आदित्य की ही परिधि के रूप में भावना की जाती है। इस प्रकार ऐष्टिक एवं औत्तरवेदिक परिधियों का योग करने पर इनकी संख्या ६ तथा १ आदित्य को संयुक्त कर ७ संख्या पूरी हो जाती है (दे० श० १।३।४, का० श्रौ० २।८।१, श्रौ०

प० नि० १३।९१, ८९।४८४ )। सायण के अनुसार इन सात परिधियों के प्रतीक सात छन्द हैं। महीधर अपने भाष्य में सायण का ही अनुसरण करते हैं।

उव्वट इस यज्ञ की परिधियों के रूप में ७ समुद्र मानते हैं—क्षीरोद, लवणोद, इक्षुरसोद, सुरोद, दधिमण्डोद, स्वादूद और घृतोद। इन समुद्रों का उल्लेख केवल पुराकथाओं में मिलता है। महीधर ने वैकल्पिक रूप में इस अर्थ को भी स्वीकारा है। उव्वट गायत्री आदि सात छन्दों वाले व्याख्यान का भी उल्लेख करते हैं तथा आत्मयज्ञपरक अर्थ में पृथिवी, अप्, तेजस्, वायु, आकाश, मनस् और बुद्धि को सात परिधियों के रूप में मानते हैं।

२. त्रिः सप्त समिधः—तीन सात = इक्कीस समिधाएँ—सामिधेनी ऋचाओं के द्वारा इन्हें यज्ञाग्नि में छोड़कर उसे प्रज्वलित किया जाता है। सायण—तै० सं० ( ५।१।१०।३ तु० ऐ० ब्रा० १।३० ) के साक्ष्य पर १२ मास, ५ ऋतुएँ ( हेमन्त तथा शिशिर को एक मानकर ) ३ लोक एवं १ आदित्य को मिलाकर २१ समिधाओं के प्रतीक रूप में ग्रहण करते हैं। इस यज्ञ में २१ समिधाओं के स्थान पर पूर्वपरिगणित २१ पदार्थों की भावना की गयी। महीधर इस अर्थ का अनुसरण करते हैं। इनके विचार में एक अन्य अर्थ भी हो सकता है। इक्कीस समिधाओं के प्रतीक रूप में गायत्री आदि पूर्ववर्णित ७ छन्द, अतिजगती आदि ७ छन्द ( शक्वरी, अतिशक्वरी, अष्टि, अत्यष्टि, धृति, अतिधृति ) एवं कृति आदि ७ छन्द ( प्रकृति, आकृति, विकृति, संकृति, अतिकृति, उत्कृति ) यज्ञ में नियोजित किये गये। वस्तुतः ये छन्दोवर्ग के रूप में स्वीकृत हैं। गायत्री २४ वर्णों का छन्द है। उत्तरोत्तर प्रत्येक में ४ वर्ण बढ़ते जायेंगे। इस प्रकार २४ वर्णों से लेकर १०४ वर्णों तक के छन्द हैं। अन्यत्र २१ धेनुनामों को 'परम' कहा गया है—त्रिः सप्तः मातुः परमाणि वन्दम्—ऋ० ४।१।१६, ध्यातव्य है कि सायण ने यहाँ इन्हीं २१ छन्दों का संकेत समझा है।

उव्वट के विचार से ५ महाभूत ( पृथिवी, अप्, तेजस्, वायु, आकाश ); ५ तन्मात्राएँ ( गन्ध, रस, उष्णता, स्पर्श, शब्द ); ५ बुद्धिइन्द्रियाँ ( नासिका, जिह्वा, चक्षु, त्वक्, श्रोत्र ); ५ कर्मेन्द्रियाँ ( पायु, उपस्थ, पाणि, पाद, वाक् ) एवं मन ( कुल मिलाकर २१ ) ही आत्मयज्ञ में समिधस्थानीय होते हैं। समिधा

की व्युत्पत्ति है—समिध्यतेऽनया—सम् + इन्ध + क्विप्— 'सम्पदादिभ्यो क्विप्' ( वा० पा० ३।३।१०८ )—देखिए—९।२३।४४ श० ब्रा० ।

३. वैदिक ऋषियो को ७ तथा २१ की संख्या अत्यन्त प्रिय है। वरुण को सात ( सिन्धुओं-सायण ) का स्वामी कहा गया है—ऋ० में—८।४१।९, अग्नि की सात रश्मियों—२।५।२; सात नदियों २।१२।३, १२, ३।१।४; सात विप्र ३।७।७, ८।३१।५, ४।२।१५; अग्नि के सात धाम ४।७।५; सूर्य की सात रश्मियाँ ४।१३।३, १६।३ आदि का वर्णन उपलब्ध होता है।

इक्कीस का प्रयोग अघ्न्या के नाम त्रिः सप्त नामाघ्न्या बिभर्ति–७।८७।४, आदित्य के पद—त्रिः सप्त सख्युः पदे–८।६९।७, गिरि के सानु–त्रिः सप्त सानु संहिता गिरीणाम्–८।९६।२, धेनु के नामों ९।७०।१, ८६।१, नदियों–त्रिः सप्त सस्रा नद्यः–१०।६४।८, ऋषियों–अथर्व० १२।२।२९ के लिए किया गया है।

४. तन्वानाः—तन् + शानच्—विस्तार करते हुए।

५. अबध्नन्—बन्ध + लङ् प्र० पु० ब० व०। बाँधा।

६. उव्वट—( देवाः ) योगिजनो ने समाधि नामक यज्ञ का विस्तार करते हुए ( पुरुषम् ) पुरुषमेध के पशुरूप में ज्ञान को ( अबध्नन् ) ग्रहण किया।

यह मन्त्र तै० आ० ३।१२।७ तथा अथर्व० १९।६।१५ में उपलब्ध होता है ॥ १५ ॥

यज्ञेन यज्ञमयजन्त देवा-
स्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त
यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

पदपाठः

यज्ञेन। यज्ञम्। अयजन्त। देवाः। तानि। धर्माणि। प्रथमानि। आसन्। ते। ह। नाकम्। महिमानः। सचन्त। यत्र। पूर्वे। साध्याः। सन्ति। देवाः ॥ १६ ॥

## सायणभाष्यम् १६

पूर्वं प्रपञ्चेनोक्तमर्थं सङ्क्षिप्यात्र दर्शयति। देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् अयजन्त पूजितवन्तः। त (अ) स्मात् तानि पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यान्यासन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः। अथोपासनतत्फलानुवादकभागार्थः संगृह्यते। यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपास्तिसाधका देवाः सन्ति तिष्ठन्ति तन्नाकं विराटप्राप्तिरूपं स्वर्गं ते महिमानस्तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्ति॥

( इत्येकोनविंशो वर्गः )

## उव्वटभाष्यम् १६

शु० य० संहितायाम्—यज्ञेन—············॥ १६॥

यथेन्द्रादयो देवा यज्ञेन ज्योतिष्टोमाख्येन यज्ञपुरुषं वासुदेवं विधिनायजन्त। यतस्तानि यजनरूपाणि धर्माणि प्रथमान्यासन्। ते ह महाभाग्ययुक्ता नाकं सचन्त स्वर्गं सेवन्ते। यत्र पूर्वे साध्याः प्रथमे सुरा सन्ति विद्यन्ते देवास्तेजसा देदीप्यमानाः एवं योगिनोऽपि दीपनाद् देवा यज्ञेन समाधिना नारायणाख्यं ज्ञानरूपम् अयजन्त। यतस्तानि समाधिरूपाणि धर्माणि प्रथमान्यासन्। ते तु नाकं सनकादीना स्थानं गच्छन्ति। ये तु योगिनो महिमानो जन्मान्तरैर्निर्धूतगुणाः शुद्धास्ते नारायणाख्यं पुरुषमाविशन्ति। मुक्तिं गच्छन्तीत्यर्थः॥

## महीधरभाष्यम्

पूर्वप्रपञ्चेनोक्तमर्थं सङ्क्षिप्याह। देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः। तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणा धारकाणि प्रथमानि मुख्यानि भूतान्यासन्। एतावता सृष्टिप्रतिपादकसूक्तभागार्थ उक्तः। अथोपासनतत्फलानुवादकभागार्थः सङ्गृह्यते। यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातना विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव ते महिमानस्तदुपासका महात्मान सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति।

अङभाव आर्षः सूत्रैः प्रवाहनित्यता दर्शयति। तदुक्तम्—"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" ( ऋ० १०।१९०।३ ) इति ॥

( इति पुरुषसूक्तानुवादः )

## हिन्दीभाषान्तर

देवों ने यज्ञ से यज्ञ सम्पन्न किया; वे प्राथमिक धर्म थे। वे महिमाशाली स्वर्ग में पहुँच गये, जहाँ प्राचीन साध्यदेव हैं।

### टिप्पणी

१. छन्द की दृष्टि से 'प्रथमान्यासन्' के स्थान पर 'प्रथमानि आसन्' तथा 'साध्याः' के स्थान पर 'साधियाः' पढ़ना चाहिए। यह त्रिष्टुप् छन्द है। इसके प्रत्येक पाद में ११ वर्ण होते हैं। तृतीय, चतुर्थ पाद में एक-एक वर्ण की न्यूनता है।

यह मन्त्र तै० आ० ३।१२।१८ में मिलता है ॥ १६ ॥



# उत्तरनारायणम्

३१ अ० क० १७

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥१७॥

उव्वटभाष्यम् १७

त्वष्टा प्रजापतिर्ब्रह्मा यद्रूपमेकांशभूतं विदधत् कृतवांस्तदेव मर्त्यस्य मर्त्ये भूलोके देवत्वं प्रभुत्वम् आजानमाप्तमित्यर्थः। किम्भूतोऽसौ ? अद्भ्यः सकाशात् सम्भृतः पिण्डीभूतः पृथिव्या रसाच्च । विश्वकर्मणोऽग्रे प्रथमतः समवर्तत संयोग-रूपेण कृतः। तस्यैव नान्यस्य तदेव कारणान्मर्त्ये प्राप्तवान् स तु पालनाय दानवादिविनाशायेति ।

---

१७–(तै० आ० ३।१३।१)—अथोत्तरनारायणाख्यः कश्चिदनुवाकस्तस्य च विनियोगं पुरुषमेधे आपस्तम्ब आह—"उत्तरनारायणेनादित्य-मुपस्थाय" इति । तत्र प्रथमामृचमाह—अद्भ्यः सम्भृतः...समवर्तताधि । ......तत्पुरुषस्य विश्वमाजानमग्रे ॥—इति ॥

योऽयं विराड्रूपो नारायणाख्यः पुरुषः सोऽयमद्भ्यः सम्भृतः सर्वत्र (? सर्वतो) व्याप्तेषु जलेषु क्षीरमध्ये मण्डवद् ब्रह्माण्डगोलकमुत्पन्नम् । न केवलमद्भ्य एव किन्तु पृथिव्यै रसाच्च भूम्याः सम्बन्धी योऽयं रसः सारस्तस्मादप्युत्पन्नः "मण्डस्य योऽयं घनीभावः स पार्थिवः । ये च तन्मध्ये द्रवांशास्त आप्याः । यत्कठिनं सा पृथिवी । यद्द्रवं तदापः" इत्यादिश्रुतेः । विश्वकर्मणो जगत्कर्तुः परमेश्वरादधि समवर्तत। ऐक्येन निष्पन्नो योऽयं ब्रह्माण्डा-भिमानी चेतनः पुमान् सोऽयमीश्वरांशस्तस्य विराट् पुरुषस्य रूपं चतुर्दशलोक-रूपावयवसंस्थानं विदधत् निष्पादयंस्त्वष्टा विश्वकर्मा जगदीश्वरः । एति प्रवर्तते । पुरुषस्य विराडाख्यस्य सम्बन्धि तद्विश्वं प्रसिद्धं देवमनुष्यादिरूपं सर्वं जगदग्रे सृष्ट्यादावाजानं सर्वत उत्पन्नम् ॥—(सा० भा०)

## महीधरभाष्यम्

अद्भ्यः सम्भृत इत्युत्तरनारायणेनादित्यमुपस्थाय ( श० १३।६।२।२० ) इति षट् कण्डिका **उत्तरनारायणम्** । उपान्त्ये द्वे अनुष्टुभे शेषास्त्रिष्टुभआदित्यदेवत्याः।

पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते । अद्भ्यो जलात् पृथिव्याः सकाशाच्च । पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षकम् । भूतपञ्चकाद् यो रसः सम्भृतः पुष्टः । तथा विश्वं कर्म यस्य विश्वकर्मणः कालस्य च सर्वं प्रति कारणत्वात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्चभूतानि तुष्टानि कालश्च । ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूप उत्तमजन्मप्रद उत्पन्न इत्यर्थः । तस्य रसस्य रूपं विदधद् धारयंस्त्वष्टादित्य एति प्रत्यहमुदयं करोति । अग्रे प्रथमं मर्त्यस्य मनुष्यस्य सतस्तस्य पुरुषमेधयाजिन आजानदेवत्वं मुख्यं देवत्वं सूर्यरूपेण । द्विविधा देवाः कर्मदेवा आजानदेवाश्च । कर्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः । सृष्टयादावुत्पन्ना आजानदेवाः । ते कर्मदेवेभ्यः श्रेष्ठाः—"ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दः" ( बृहदा० ४।३।३५ ) इति श्रुतेः सूर्यादय आजानदेवाः।

## हिन्दीभाषान्तर

जलों तथा (उनके) द्रव से एकत्रित किया गया (पदार्थ) पृथिवी के निर्माण के लिए विश्वकर्मा के आगे ( उपस्थित ) हुआ। त्वष्टा उसका रूप बनाता हुआ आता है और मनुष्य के पहले वही आजानदेवत्व को प्राप्त हुआ।

## टिप्पणियाँ

१. यह छह मन्त्रों का समूह वैदिक साहित्य में 'उत्तरनारायण' के नाम से प्रसिद्ध है। इसके देवता आदित्य हैं। पुरुषमेध में इसके द्वारा आदित्य के उपस्थान का विधान है। वैज्ञानिक साक्ष्यों के परिसर में पुराकथाओं एवं वैदिक कथ्यों पर आधृत हो यह प्रतिपादन सुशक्य है कि सृष्टि के आरम्भ में आकाश में उत्तप्त और पिण्ड तथा भूतल पर जल के अतिरिक्त कुछ न था। सूर्य का विष्णु या नारायण के रूप में विकास अत्यन्त सुपरिचित तथ्य है। ( प्रजापतिसूक्त के प्रथम मन्त्र में हिरण्यगर्भ टिप्पणी भी देखिए )।

२. अद्भ्यः सम्भृतः पृथिव्यै०—उव्वट—जलों, पृथिवी, एवं रस से एकत्र किया गया। इनके विचार से 'पृथिव्यै' का पञ्चमी के अर्थ में प्रयोग किया

गया है। महीधर भी इसे पञ्चमी ही मानते हैं। पृथिवी और जल के कथन से पाँचो महाभूतों का संकेत मिलता है। इनसे रस संपुष्ट हुआ।

३. विश्वकर्मणः—विश्वं कर्म अस्मात्, अस्य वा विश्वकर्मा तस्मात्। जिससे समस्त कर्म परिचालित होते हैं अथवा समस्त कर्म जिसके हैं, वह विश्वकर्मा है। उव्वट—विश्वकर्मा ने सर्वप्रथम जल, पृथिवी एवं रस को संयोजित किया। महीधर—पाँच महाभूतो से संभृत एवं विश्वकर्मा (काल) की प्रीति से सर्व-प्रथम रस स्थिति में आया। पञ्च महाभूत एवं काल समस्त पदार्थों के कारण हैं, अतएव पुरुषमेधयाजी के सूक्ष्म शरीर में दोनों तुष्ट हुए। इनकी तुष्टि से रसरूप विशेष फल उत्पन्न हुआ जो उत्तम जन्म देने वाला है।

४. त्वष्टा०—उव्वट—प्रजापति ब्रह्मा ने जिस रूप की रचना की, वही मर्त्य की प्रभुता है। महीधर—पूर्वोक्त रस के रूप को धारण करता हुआ त्वष्टा (सूर्य) प्रतिदिन उदित होता है। यही पुरुषमेधयाजी मनुष्य—जो पहले मर्त्य था—का सूर्य रूप में प्रमुख देवत्व है।

५. आजानम्—आ + जन—आजान श्रेणी के देवता। देवता द्विधा हैं, कर्मदेव तथा आजानदेव। कर्म के द्वारा देवत्व प्राप्त करने वाले कर्मदेव। सृष्टि के आदि में समुत्पन्न आजान देव (दे० म०, उद्धृत, बृहदा०)।

६. समस्त भाष्यकारो ने त्वष्टा एवं विश्वकर्मा का अर्थ सूर्य लिया है। यह अर्थ प्रकरण को देखते हुए उचित प्रतीत होता है। सूर्य समस्त कर्मों का प्रेरक है, अतः उसे सविता कहते हैं=अतएव उसे विश्वकर्मा कहा गया। विश्वकर्मा का अर्थ यदि काल भी लें तो भी सूर्य का ही बोध होता है। काल-चक्र का प्रवर्तयिता वही है। मास, ऋतु, दिन, रात—सब उसी के कारण हैं। संस्कृत-साहित्य में विश्वकर्मा पद का सूर्य के लिए प्रयोग भी इसी तथ्य को संकेतित करता है (विश्वकर्मा सहस्रांशौ—मे०) त्वष्टा की व्युत्पत्ति एवं रूप-सृष्टि से उसका सम्बन्ध सूर्य-अर्थ की पुष्टि करता है। रूप सूर्य से सम्बद्ध भी है (त्वष्टा की व्युत्पत्ति दे०—टिप्पणी, वाक्सूक्त मन्त्र २ में)।

७. तैत्तिरीय आरण्यक में इस मन्त्र पर भाष्य करते हुए सायण ने इस मन्त्र का अर्थ पुरुष-परक किया है—(देखिए, इसी सूक्त के प्रथम मन्त्र में पुरुष पर टिप्पणी।)

चतुर्थ पाद में १ वर्ण अधिक है। त्रिष्टुप् होने के कारण ११ वर्ण होना चाहिए ॥ १७ ॥

**वेदा॒हमे॒तं पुरु॑षं म॒हान्त॑मादि॒त्यव॑र्णं॒ तम॑सः प॒रस्ता॑त् ।**
**तमे॒व वि॑दि॒त्वाति॑ मृ॒त्युमे॑ति॒ नान्यः पन्था॑ वि॒द्यतेऽय॑नाय ॥१८॥**

उव्वटभाष्यम् १८

ऋषेः प्रतिवचनम्। अहमेतं पुरुषं वेद। महान्तं देशकालाद्यव-च्छेदरहितम्। आदित्यवर्णं स्वप्रकाशम्। तमसः परस्ताद् अविद्यायाः भेददर्शनम्। तमेव विदित्वा अतिमृत्युम् एति। अतिक्रम्य मृत्युं तं पुरुषमनुप्रविशति। न अन्यः पन्था मार्गस्तस्यायनाय गमनाय विद्यते ॥

महीधरभाष्यम्

एतं महान्तं सर्वोत्कृष्टं पुरुषं सूर्यमण्डलस्थमहं वेद जानामीति ऋषेर्वचनम्। कीदृशम्? आदित्यवर्णमादित्यस्येव वर्णो यस्य तम्। उपमान्तराभावात् स्वोपमम्।

१८—( तै० आ० ३।१३।२ )—अथ द्वितीयामाह—वेदा॒हमे॒तं···परस्तात्। तमे॒वं वि॒द्वान॒मृत॑ इ॒ह भ॑वति। नान्यः······ऽय॑नाय ॥ इति ॥ पूर्व-( तै० आ० ३।१२।१६-१७ ) वद् व्याख्येयम्। [ यथोक्तविराट्पुरुषध्यानमत्र प्रतिपाद्यते। तत्र मन्त्रद्रष्टा स्वकीयं ध्यानानुभवं प्रकटयति···एतं पुरुषं विराजं महान्तं सर्वगुणैरधिकम् आदित्यवर्णमादित्यवत् प्रकाशमानं वेदाहं जानामि। ध्यानेन सर्वदानुभवामीत्यर्थः। स च पुरुषस्तमसः पारेऽज्ञानात् परस्ताद् वर्तते। अतो गुरुशास्त्रोपदेशरहितैर्मूढैरनुभवितुमशक्य इत्यर्थः।··· तं विराट्पुरुषम् एवम् उक्तप्रकारेण विद्वान् साक्षात् कुर्वन् इहास्मिन्नेव जन्मन्यमृतो मरणरहितो भवति। यदा विराट्पुरुषोऽहमिति साक्षात्करोति तदानीं वर्तमानदेहस्य ( ? स्वस्व ) रूपत्वाभावात् तन्मरणेनायमुपासको न म्रियते। अयनायामृतत्वप्राप्तयेऽन्यः पन्था यथोक्तविराट्पुरुषसाक्षात्कारमन्तरेणान्यो मार्गो न विद्यते। न हि कर्मसहस्रैरप्यमृतत्वं सम्पादयितुं शक्यते। "न कर्मणा न प्रजया धनेन" ( कैवल्योप० १।२, नारायणोप० १२।३ ) इत्यादि शास्त्रात् ] ( सा० भा० )।

तथा तमसः परस्ताद् दूरतरम् । तमोरहितमित्यर्थः । तमःशब्देनाविद्योच्यते । तमेवादित्यं विदित्वा ज्ञात्वा मृत्युमत्येत्यतिक्रामति परं ब्रह्म गच्छति । अयनायाश्रयायान्यः पन्था न विद्यते । सूर्यमण्डलान्तःपुरुषमात्मरूपं ज्ञात्वैव मुक्तिः ॥

## हिन्दीभाषान्तर

मैं अन्धकार से परे आदित्यरूप इस महान् पुरुष को जानता हूँ । उसी पुरुष को । जानकर मृत्यु को ( मनुष्य ) पार कर लेता है । गमन के लिए ( इसके अतिरिक्त ) इतर मार्ग नहीं है ।

## टिप्पणियाँ

१. एतं पुरुषम्—उव्वट—इस पुरुष को, महीधर—सूर्यमण्डल में स्थित पुरुष को शतपथ ब्राह्मण के मण्डलब्राह्मण में इस पुरुष की महनीयता प्रतिपादित की गयी है—एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा ।…एतस्य च पुरुषस्यैतन् मण्डलं प्रतिष्ठा—१०।५।२।४–५ । तै० आ० में इस मन्त्र के भाष्य में सायण ने इस पुरुष को विराज् कहा है । तु०—शां० आ० ६।२ ।

२. महान्तम्—उव्वट—देश, काल आदि परिच्छेद से रहित । महीधर—सर्वोत्कृष्ट । सायण—सर्वगुणातिशायी ।

३. आदित्यवर्णम्—आदित्यस्येव वर्णो यस्य तम्—आदित्य—अदिति + ण्यः—प्रत्यय में उदात्त स्वर । उव्वट—स्वप्रकाश । महीधर—दूसरी उपमा के अभाव में आत्मोपम । सायण—आदित्य के समान प्रकाशमान ।

४. तमसः—उव्वट—मही० अविद्या । अन्धकार से ।

५. परस्तात्—( पर + अस्तातिः ) । दूर, परे ।

६. तमेव विदित्वा मृत्युमत्येति—उव्वट—उसी को जानकर मृत्यु का अतिक्रमण करता है और पुरुष में प्रविष्ट होता है । महीधर उसी आदित्य को जानकर मृत्यु को अतिक्रान्त करता है एवं परब्रह्म का साक्षात्कार करता है । सायण—उसी विराट् पुरुष को……। तुलनीय—य एष एतस्मिन् मण्डले पुरुषोऽथैतदमृतम्—श० ब्रा० १०।५।२।३।……यदैवंविदस्माल्लोकात् प्रैति, अथैतमेवात्मानमभिसम्भवति सोऽमृतो भवति, १०।५।२।१३ ।

७. नान्यः पन्था विद्यते अयनाय—अयनाय—अय् अथवा इण् (गतौ) + युच् ( उणा० २।७८ ) अथवा ल्युट् ( कर्मणि ) ( पा० ३।३।११३ ) । उव्वट—

गमन के लिए दूसरा मार्ग नहीं है। मही०—सूर्यमण्डल में स्थित पुरुष को आत्मरूप में जानकर ही मुक्ति है। सायण—वर्णित विराज पुरुष के साक्षात्कार के अतिरिक्त अमृतत्वप्राप्ति के निमित्त दूसरा पथ नहीं है।

आदित्य की प्रकाश-प्रवृत्ति को जाने बिना तमोभेद सम्भव नहीं है—

विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यन्ति नाविद्वान्सस्तपस्विनः॥

—श० ब्रा० १०।५।४।१६

छन्द की दृष्टि से 'विद्यतेऽयनाय' के स्थान पर 'विद्यते अयनाय' पढ़ना चाहिए।

इस मन्त्र का पूर्वार्ध ऋग्वेद के शिवसंकल्प नामक खिल सूक्त के ९ वें मन्त्र में मिलता है। परिवर्तन के साथ तै० आ० ३।१२।१६-१७, १३।२ में भी दृष्टिगत होता है॥ १८॥

**प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते।**
**तस्य योनिं परि पश्यन्ति धीरास्तस्मिन् तस्थुर्भुवनानि विश्वा॥ १९॥**

उव्वटभाष्यम् १९

[ किम्भूतं तं ( १ ) विशिष्यते—]

स एव पुरुष एकांशभूतः प्रजापतिरस्य गर्भस्यान्तरजायमानश्चरति चतुर्विधेषु भूतेषु। स एव जायमानो बहुधानेकप्रकारं विजायते। ये धीरा योगिनस्ते

---

१९—(तै० आ० ३।१३।१)—अथ तृतीयामाह-प्रजापति'''विजायते। तस्य धीराः परिजानन्ति योनिं मरीचीनां पदमिच्छन्ति वेधसः॥ इति।

ब्रह्माण्डरूपे गर्भेऽन्तर्मध्ये प्रजापतिर्विग्रहवान् भूत्वा चरति। स च वास्तवेन रूपेण "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुत्या प्रतिपादनादजायमान एव तथापि मायिकेन रूपेण बहुधा स्थावरजङ्गमादि बहुप्रकारो विशेषेण जायते। तस्य प्रजापतेर्योनिं जगत्कारणरूपं वास्तवं स्वरूपं धीरा धैर्यवन्तो योगेन निरुद्धेन्द्रिया महात्मानो जानन्ति। वेधसो विधातारः सृष्टिकर्तारस्तमेवोपास्य मरीचीनां मरीच्यत्रिप्रमुखानां ( णां ) महर्षीणां पदं जगदुत्पादकत्वलक्षणमिच्छन्ति॥

तस्य योनिं परिपश्यन्ति सर्वत्यागे न परिहरन्ति । विश्वे त्रैलोक्ये भुवनानि तस्मिन्नातस्थुः ॥

## महीधरभाष्यम्

यः सर्वात्मा प्रजापतिरन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति । यश्चाजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते । धीरा ब्रह्मविदस्तस्य प्रजापतेर्योनिं स्थानं स्वरूपं परिपश्यन्ति । 'अहं ब्रह्मास्मि' इति जानन्ति विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि । सर्वं तदात्मकमेवेत्यर्थः ॥

## हिन्दीभाषान्तर

प्रजापति गर्भ के भीतर विचरता है । उत्पन्न न होता हुआ (भी) विविध रूपों में उत्पन्न होता है । धीर उसका स्थान चारो ओर देखते हैं । उसमें सम्पूर्ण भुवन अवस्थित हैं ।

## टिप्पणियाँ

१. प्रजापतिश्चरति गर्भे अन्तः—उव्वट—उस पुरुष का अंशरूप प्रजापति उत्पन्न न होता हुआ भी चतुर्विध भूतों के गर्भ में विचरण करता है । उव्वट 'अजायमानः' को 'प्रजापतिः' के साथ अन्वित करते हैं । मही०—जो सर्वात्मा प्रजापति है वही आभ्यन्तर में स्थिर होता हुआ गर्भ के मध्य में प्रवेश करता है । सायण–ब्रह्माण्ड रूप गर्भ के भीतर प्रजापति शरीरी होकर विचरण करता है ।

२. अजायमानः बहुधा विजायते—उव्वट—वह प्रजापति ही उत्पन्न होता हुआ अनेकधा जनमता है । उव्वट 'अजायमानः' का अन्वय 'बहुधा विजायते' के साथ नही करते । मही०—नित्य होने से उत्पन्न न होता हुआ भी कार्य, कारण आदि नाना रूपो में उत्पन्न होता है । प्रपञ्चात्मक जगत् में आत्ममाया के द्वारा वह सर्वत्र अनुस्यूत है । सायण–यद्यपि वह उत्पन्न नहीं होता तथापि अपने भाविक रूप से स्थावर, जङ्गम आदि पदार्थों में अनेकधा उत्पन्न होता है ।

३. तस्य योनिं परिपश्यन्ति धीराः—उव्वट—धीर योगी उसकी योनि को देखते हैं । मही०—ब्रह्मविद् उसके स्थान और स्वरूप को देखते हैं—'अहं ब्रह्मास्मि' इसे समझ लेते हैं । सायण—योग से इन्द्रिय-प्रवर्तनों का निरोध करने वाले धैर्यवान् महात्मा प्रजापति के जगत् निमित्तक वास्तव स्वरूप को समझते हैं ।

४. तस्मिन्न ह तस्थुर्भुवनानि विश्वा। तस्थुः--स्था + लिट्, प्र० पु०, ब० व०। उव्वट—समस्त भुवन उसमें आस्थित है। मही०—समस्त भूतप्रपञ्च इसी कारणात्मक ब्रह्म में अवस्थित हैं—सब कुछ तदाकार है। तु०—सूर्य आत्मा जगतस्तस्थुषश्च ऋ० १।११५।१, शु० य० सं० ७।४२।

इस मन्त्र का तृतीय पाद उपर्युक्त खिल सूक्त के नवम मन्त्र के तृतीय पाद के समान है। अथर्व० १०।८।१३ में प्रजापतिश्चरति गर्भे अन्तरदृश्यमानो···। पूर्वार्ध मात्र मिलता है ॥ १९ ॥

**यो देवेभ्य आतपति यो देवानां पुरोहितः।**
**पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥२०॥**

### उव्वटभाष्यम् २०

अग्रे यो देवेभ्यो योगिनस्तं नमन्ति ध्यायन्ति। यो देवेभ्यः सर्वेभ्य आतपत्यतिशयेन तेजसा तपति। आदित्यरूपेणेत्यर्थः। यश्च देवानां पुरोऽग्रे इन्द्रत्वेन स्थितः। यश्च पूर्वोऽग्रे ब्रह्मरूपेण देवेभ्यो जातः। तस्मै रुचाय ब्राह्मये ब्रह्मपुरुषापत्याय नमः॥

### महीधरभाष्यम्

यः प्रजापतिरादित्यरूपो देवेभ्योऽर्थायातपति द्योतते। यश्च देवानां पुरोहितः सर्वकार्येष्वग्रे नीतः। यश्च देवेभ्यः सकाशात् पूर्वो जातः प्रथममुत्पन्नस्तस्मा आदित्याय नमः। कीदृशाय? रोचतेऽसौ रुचस्तस्मै दीप्यमानाय। 'इगुपध'—(पा० ३।१।१३५) इति कप्रत्ययः। तथा ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः। इञि (पा० ४।१।९५) टिलोपः ब्रह्मावयवभूताय वा॥

### हिन्दीभाषान्तर

जो देवों के लिए तपता है, जो देवों का अग्रणी है, जो देवों से पहले उत्पन्न हुआ है, ब्रह्म से उत्पन्न होने वाले (उस) तेज को नमस्कार है।

### टिप्पणियाँ

१. यो देवेभ्यः आतपति—उव्वट—जो समस्त देवों के लिए अपने अतिशायी तेज से—आदित्यरूप में—तपता है। महीधर–आदित्यरूप प्रजापति

देवों के लिए द्योतित होता है। सायण—जो परमेश्वर देवों के निमित्त सर्वत्र प्रकाशित होता है—देवों के देवत्व की सिद्धि के लिए उनके भीतर चैतन्य रूप में प्रविष्ट होकर आविर्भूत होता है।

२. यो देवानां पुरोहितः—पुरस् + धा + क्तः—पुरोहितः। उव्वट—जो देवों से पूर्व इन्द्ररूप में स्थित है। महीº—जो देवों के सकल कार्यों में आगे रहता है। सायण—जो देवों का बृहस्पति नामक पुरोहित है।

३. पूर्वो यो देवेभ्यो जातः—उव्वट—जो देवों से पहले ब्रह्मरूप मे उत्पन्न हुआ। महीº—जो देवों से पूर्व आदित्यरूप में जनमा। सायण—जो देवो से पूर्व हिरण्यगर्भ होकर जनमा।

४. नमो रुचाय ब्राह्मये—रुचाय रोचतेऽसौ रुचः, तस्मै—रुच् (दीप्तौ) + कः—'इगुपधज्ञाप्रीकिरः कः' (पाº ३।१।१३५)। ब्राह्मये—ब्रह्मणोऽपत्यं ब्राह्मिः, तस्मै—ब्रह्म + इञ्—'अत इञ्' (पाº ४।१।९५)। उव्वट—ब्रह्मपुरुष के अपत्य तेज को नमस्कार है। महीº—ब्रह्म के अपत्य अथवा ब्रह्मांशभूत—जो दीप्त है—को नमस्कार। सायण—प्रदीप्त स्वयंप्रकाश परब्रह्मस्वरूप या वेद-प्रतिपाद्य को नमस्कार है ॥ २० ॥

**रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन्।**
**यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे ॥२१॥**

---

२०—(तैº आº ४।१३।४)—अथ चतुर्थीमाह—यो ब्राह्मये ॥—इति।

यः परमेश्वरो देवेभ्यो देवार्थमातपति सर्वत्र प्रकाशते, देवानां देवत्व-सिद्धये तत्तद्धृदयेषु चैतन्यरूपेण प्रविश्याविर्भवति। यश्च देवानां पुरोहितो बृहस्पतिर्बभूव "बृहस्पतिर्देवानां पुरोहितः" इति श्रुतेः। यश्च देवेभ्यः पूर्वो जातः प्रथमभावी हिरण्यगर्भरूपेणोत्पन्नः—"हिरण्यगर्भः समवर्तताग्रे" (ऋº १०।१२१।१, शुº यº संº १३।४, २३।१, २५।१०) इति श्रुतेः। तादृशाय रुचाय रोचमानाय स्वयम्प्रकाशाय ब्राह्मये परब्रह्मस्वरूपाय ब्रह्मणा वेदेन प्रतिपाद्याय वा नमो नमस्कारोऽस्तु ॥ (साº भाº) ॥

## उव्वटभाष्यम् २१

रुचं देदीप्यमानं ब्राह्मं ब्रह्मण उत्पन्नं जनयन्तः सृष्ट्यर्थं देवाः योगिनस्ते ब्रह्मा दीप्यमाना यदब्रुवन् यद् ब्रूयुरग्रे प्रथमतः। किमूचुः? अपरोऽपि यो ब्राह्मणः स ब्रह्म विद्याज्जानीयात्। तस्य देवा असन् वशे। सोऽपि सनकादीना स्थानं गच्छतीत्यर्थः॥

## महीधरभाष्यम्

देवा दीप्यमानाः प्राणा रुचं शोभनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्त उत्पादयन्तोऽग्रे प्रथमं तद् वचोऽब्रुवन् ऊचुः। ब्राह्मोऽजातौ ( पा० ६।४।१७१ ) इति निपातः। तत्किमत आह। यो ब्राह्मणो, हे आदित्य, त्वा त्वामेवमुक्त-विधिनोत्पन्नं विद्याज्जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति। आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः॥

## हिन्दीभाषान्तर

ब्रह्म सम्बद्ध तेज को उत्पन्न करते हुए देवों ने सर्वप्रथम यह कहा, (कि) जो ब्रह्मवित् तुम्हें इस प्रकार समझे उसके वश में देव हो जायँ।

## टिप्पणियाँ

१. रुचं ब्राह्मं जनयन्तः—ब्राह्मम्—ब्रह्म + अण्—'ब्राह्मोऽजातौ' ( पा० ६।४।१७१ )—निपातसिद्ध। जनयन्त—जन् + णिच् + शतृ। उव्वट—ब्रह्म से सम्बद्ध दीप्त तेज को उत्पन्न करते हुए। महीधर—प्रदीप्त प्राण ( देवाः ) शोभन

---

२१—( तै० आ० ३।१३।५ )—अथ पञ्चमीमाह—रुचं·····वशे॥—इति॥ देवाः सर्वेऽग्रे सृष्ट्यादौ ब्रह्मविद्यासम्प्रदायप्रवर्तनकाले ब्राह्मं रुचं परब्रह्म-सम्बन्धि चैतन्यं जनयन्तो विद्यया प्रादुर्भावयन्तस्तद् ब्रह्मतत्त्वं सम्बो-ध्याब्रुवन् वाक्ष्यमाणं वाक्यमुक्तवन्तः। किं तद् वाक्यमिति तदुच्यते—हे परमात्मन् यः कश्चिद् ब्राह्मणः पुमांस्त्वामेवं यथोक्तप्रकारेण विद्याद् तस्य ब्रह्मविदः सर्वे देवा वशेऽसन्नधीना भवन्ति, स्वयं हि तेषां देवानामन्तर्यामी परमात्मा भवति, तस्माद् देवा एतदधीना न त्वस्य देवा ईश्वराः। एतमेवार्थं वाजसनेयिनो विस्पष्टमामनन्ति—"य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति। तस्य ( ह न ) देवाश्च नाभूत्या ईशते। आत्मा ह्येषाꣳ स भवति ( बृहदा० १।४।१० ) इति॥—( सा० भा० )॥

ब्रह्म—अपत्य आदित्य को उत्पन्न करते हुए। सायण—परब्रह्मविषयक चैतन्य को विद्या के द्वारा प्रादुर्भूत करते हुए।

२. देवा अग्रे तद् अब्रुवन्—ब्रु + लङ्, प्र० पु०, ब० व०। देवों ने सर्वप्रथम जो वाक्य कहा।

३. यः त्वा एवं ब्राह्मणो विद्यात्—उव्वट—जो ब्राह्मण ब्रह्मविद्या को जान ले। महीधर—हे आदित्य! जो ब्राह्मण तुम्हें पूर्ववर्णित प्रकार से उत्पन्न जान ले। सायण—हे परमात्मन्! जो ब्राह्मण पुरुष तुम्हें उक्त प्रकार से समझे।

४. तस्य देवा असन् वशे—उव्वट—देव वशंवद हों—सनक आदि के स्थान को प्राप्त करें। महीधर—देव वशवर्ती हों—आदित्योपासक जगत्पूज्य होता है। सायण—देव उस ब्रह्मवित् के अधिकार में हों॥ २१ ॥

श्रीश्चं ते लक्ष्मीश्चं पत्न्यावहोरात्रे

पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्।

इष्णन्निषाणामुं म इषाण

सर्वलोकं म इषाण ॥ २२ ॥

उव्वटभाष्यम् २२

अस्य पुरुषस्यैतेऽवयवाः श्रीश्च लक्ष्मीश्च पत्न्यौ भार्ये। अहश्च रात्रिश्च ते पार्श्वे। नक्षत्राणि रूपम्। अश्विनौ व्यात्तं मुखम्। इष्णन् इषाण स्वर्गस्य

२२—(तै० आ० ३।१३।६) अथ यजुरात्मनं कञ्चिन्मन्त्रमाह—ह्रीश्च ···॥ ह्रीर्लज्जाभिमानी देवता। लक्ष्मीरैश्वर्याभिमानी देवता॥

हे परमात्मान्। ह्रीश्च लक्ष्मीश्च ते तव पत्न्यौ भार्यास्थानीये। अहोरात्रे ते पार्श्वे पार्श्वद्वयस्थानीये। नक्षत्राण्याकाशे दृश्यमानानि रूपं तव शरीरस्थानीयम्। अश्विनौ यौ देवौ तौ तव व्यात्तं विवृतमुखस्थानीयम्। तथाविध हे विराट्-पुरुषेष्टमस्मदपेक्षितमात्मबोधं मनिषाणानुमन्यस्व। देहीत्यर्थः। अमुं लोके दृश्यमानं गवाश्वादिकं मनिषाण प्रयच्छ। किं बहुना, सर्वं मनिषाणैहिकमामुष्मिकं वा सर्वमिष्टं देहि॥—( सा० भा० )॥

लोकस्येशानः। एतद् गुणविशिष्टो नाम मोक्षस्येशानः सर्वलोकस्य च स एव देवानामीशान इति ॥

इति शौनकप्रणीतं पुरुषसूक्त-भाष्यं समाप्तम् ॥

## महीधरभाष्यम्

ऋषिरादित्यं स्तुत्वा प्रार्थयते। हे आदित्य! श्रीर्लक्ष्मीश्च ते तव पत्न्यौ जायास्थानीये। त्वद्वश्ये इत्यर्थः। यया सर्वजनाश्रयणीयो भवति सा श्रीः। श्रीयतेऽनया श्रीः सम्पदित्यर्थः। यथा लक्ष्यते दृश्यते जनैः सा लक्ष्मीः। सौन्दर्यमित्यर्थः। अहोरात्रे तव पार्श्वे पार्श्वस्थानीये। नक्षत्राणि गगनगास्तारास्तव रूपम्। तवैव तेजसा भासमानत्वात्—"तेजसां गोलकः सूर्यो नक्षत्राण्यम्बुगोलकाः" इति ज्योतिः शास्त्रोक्तेः। अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकासितमुखस्थानीये। अश्नुवाते व्याप्नुवतस्तौ अश्विनौ—"अश्विनौ द्यावापृथिव्यौ। इमे हीद ँ सर्वमश्नुवाताम्" इति श्रुतेः। य ईदृशस्तं त्वां याचे। इष्णन् कर्मफलमिच्छन् सन्। इषाणेच्छ। 'इषु इच्छायाम्' विकरणव्यत्ययः। यद्वा 'इष आभीक्ष्ण्ये' क्र्यादिः। अत्रेच्छार्थः। किमेषणीयं तत्राह। अमुं परलोकं मे ममेषाण मम परलोकः समीचीनोऽस्त्वित्यिच्छा। अमोघेच्छत्वादिष्टं भवतीत्यर्थः सर्वं मे ममेषाण सर्वलोकात्मकोऽहं भवेयमितीच्छेत्यर्थः। मुक्तो भवेयमित्यर्थः। "सर्वं खल्विदं ब्रह्म" ( छान्दोग्यो० ३।१४।१ ) इति सामश्रुतेः ॥

श्रीमन्महीधरकृते वेददीपमनोहरे।
नरमेधाध्याय एष एकत्रिंशोऽयमीरितः ॥

## हिन्दीभाषान्तर

श्री और लक्ष्मी तुम्हारी पत्नियाँ हैं, दिन और रात ( तुम्हारे ) पार्श्व हैं, नक्षत्र तुम्हारा रूप है, अश्विन् ( तुम्हारा ) विवृत मुख है। इच्छा करता हुआ मैं इच्छा करूँ ( कि ) मेरे लिए वह ( लोक ) इच्छित हो जाय ( और ) सम्पूर्ण लोक इच्छित बन जायँ।

## टिप्पणियाँ

१. श्रीश्च ते लक्ष्मीश्च पत्न्यौ—श्रीयते सर्वैरिति श्रीः—श्रिञ् ( सेवा करना, आश्रय लेना )-क्विप् (उणा० २।५७)। सम्पत्ति ( देखिए, खोंदा, ऋ० इ० पृ०

१४९; श्री के विकास के लिए देखिए, वही, आस्पेक्ट्स ऑफ अर्ली विष्णुइज़्म )। लक्ष्यते या लक्ष्मीः—लक्ष ( दर्शन ) + ईः ( मुडागम ) ( उणा० ३।१६० )। सौन्दर्य। सायण—ऐश्वर्याभिमानी देवता। इस शब्द का ऋग्वेद में—१०।७१।२— केवल एक बार प्रयोग हुआ है। पत्न्यौ—पति + नः—'पत्युर्नो यज्ञसंयोगे' पा० ( ४।१।३३ ) + ङीप्, प्रथमा, द्वि० व०। उव्वट—पुरुष की सम्पत्ति सौन्दर्य— दोनों पत्नियाँ हैं। मही०—आदित्य की दोनों पत्नियाँ हैं।

२. व्यात्तम्—वि + आ + दा + क्तः—विवृत मुख, फैला हुआ, खुला हुआ मुख।

३. इष्णन्—इष् या इष् ( क्रयादि ) ( इच्छा करना ) + शतृ = इच्छा करता हुआ। कर्मफल की इच्छा करता हुआ।

४. इषाण—इष् या इष् ( क्रयादि ) ( इच्छा करना ) + लेट् लकार, उ० पु०, ए० व०।

महीधर ने इसे त्रिष्टुप् छन्द कहा है। तीसरा, चौथा चरण हीनाक्षर पाद या निचृत् या भुरिक् है। प्रथम पाद में १२ तथा द्वितीय पाद में १३ वर्ण हैं ॥२२॥



# शिवसङ्कल्पसूक्तम्

३४ अ० क० १—६

शुक्लयजुर्वेदमाध्यन्दिनवाजसनेयसंहितायाम्

( चतुस्त्रिंशाध्यायाद्यकण्डिकाषट्कात्मिका-शिवसङ्कल्पोपनिषत् )

याज्ञवल्क्य ऋषिः । मनोदेवता । त्रिष्टुप् छन्दः ॥

**यज्जाग्रतो दूरमुदैति दैवं**
**तदु सुप्तस्य तथैवैति ।**
**दूरङ्गमं ज्योतिषां ज्योतिरेकं**
**तन्मे मनः शिवसङ्कल्पमस्तु ॥ १ ॥**

### उव्वटभाष्यम् १

यन्मनो जाग्रतः पुरुषस्य दूरम् उदैति उद्गच्छति चक्षुःप्रभृतीन्यपेक्ष्य । यच्च दैवम् । देवो विज्ञानात्मा सोऽनेन गृह्यत इति दैवम् । उक्तञ्च—"मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्" इति । तदु सुप्तस्य । तदः स्थाने यदो वृत्तिः । उकारः समुच्चयार्थीयः । यच्च मनः सुप्तस्य तथैव तेनैव प्रकारेण एति । यच्च दूरङ्गमम् । दूरं गच्छतीति दूरङ्गमम् । अतीतानागतवर्तमानव्यवहितविप्रकृष्टग्रहीतृ । ज्योतिषां श्रोत्रादीनां विज्ञाननेतॄणां मध्य एकमेव ज्योतिः । तत् मे मनःशिवसङ्कल्पम् । सङ्कल्पः काममूलपदार्थस्य स्त्र्यादेः सुरूपताज्ञानवतः कामप्रभृति । शान्तसङ्कल्पमस्तु भवतु ॥

### महीधरभाष्यम्

अनारभ्याधीतोऽध्यायः । आ पितृमेधाद् आदित्य याज्ञवल्क्यद्रष्टा मन्त्राः पाठे विनियुक्ताः । षड्चस्त्रिष्टुभो मनोदेवत्याः शिवसङ्कल्पदृष्टाः ॥

ऋषिर्वदति । तन्मे मनः शिवसङ्कल्पमस्तु शिवः कल्याणकारी धर्मविषयः सङ्कल्पो यस्य तत् तादृशं भवतु । मन्मनसि सदा धर्म एव भवतु न कदाचित् पापमित्यर्थः । तत् किम् । तत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति । चक्षु-

राद्यपेक्षा मनो दूरगामीत्यर्थः। यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भव दैवमात्मग्राहकमित्यर्थः। "मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्" इति श्रुतेः। तत उ। तदः स्थाने तच्छब्दः, उकारश्चार्थः। यच्च मनः सुप्तस्य पुसः तथैव एति यथा गतं तथैव पुनरागच्छति। स्वापकाले सुषुप्तावस्थायां पुनरागच्छति। यच्च दूरङ्गमं दूराद् गच्छतीति दूरङ्गमम्। खश्प्रत्ययः। अतीतानागतवर्तमानविप्रकृष्टव्यवहितपदार्थाना ग्राहकमित्यर्थः। यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्तकमित्यर्थः। प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्तन्ते। आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनः सम्बन्धमन्तरा तेषामप्रवृत्तेः। तादृशं मे मनः शान्तसङ्कल्पमस्तु ॥

## हिन्दीभाषान्तर

जागते हुए ( याज्ञवल्क्य ) का जो दिव्य मन दूर चला जाता है तथा सोते हुए का वही ( मन ) उसी प्रकार से ( पुनः ) चला आता है, दूरगामी, प्रकाशों में अद्वितीय प्रकाशरूप मेरा वह मन शुभ सङ्कल्पो वाला हो।

## टिप्पणियाँ

फ्रायड, एडलर और युंग जैसे विद्वानों ने मनस् तत्त्व की विवेचना कर उसके विस्मयावह नाना व्यापारो के आयामों से आधुनिक युग के विज्ञान को एक दिशा दी है। वैदिक ऋषियों को मनस् तत्त्व की अलोकसामान्य क्षमता का परिपूर्ण ज्ञान था। इस सूक्त में मनस् के महिमामय सामर्थ्य का वर्णन किया गया है।

१. जाग्रतः—जागृ ( जागना ) + शतृ, षष्ठी, ए० व०, जागते हुए का।

२. दूरमुदैति—उदैति—उत् + इण्, लट्, प्र० पु०, ए० व०, दूर चला जाता है। चक्षु, श्रोत्र आदि अन्य इन्द्रियों की अपेक्षा मन दूरगामी है।

३. दैवम्—उव्वट देव विज्ञान आत्मा को कहते हैं। ईस देव को स्ववशंवद बनाने के कारण दैव कहा गया। महीधर—दीव्यतीति देवः—प्रकाशरूप आत्मा, तत्सम्बद्ध दैव।

४. दूरङ्गमम्—दूरं गच्छतीति—दूर + गम् + खश्—'अरुर्द्विषदजन्तस्य मुम्'—मुम् आगम, ( पा० ६।३।६७ )। दूर गमन करने वाला।

५. शिवसङ्कल्पम्—शिवः सङ्कल्पो यस्य तत्—, शिव—कल्याणकारी, सम् + क्लृप् + अप्—'ऋदोरप्' ( पा० ३।३।५७ ) इच्छा, कामना। अच्छे विचार वाला, कल्याणकारिणी कामनाओं वाला।

छन्द की दृष्टि से 'तथैवेति' के स्थान पर 'तथा एव एति' पढ़ना चाहिए। त्रिष्टुप् छन्द होने के कारण प्रत्येक पाद में ११ वर्ण होने चाहिए, पर द्वितीय पाद में केवल ९ वर्ण हैं।

यह मन्त्र ऋग्वैदिक खिल-अध्याय ४, सूक्त ११, मन्त्र ४ में उपलब्ध है॥१॥

येन कर्माण्यपसो मनीषिणो
यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानां
तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥

उव्वटभाष्यम् २

येन कर्माणि। येन मनसा सता कर्माणि। अपसः। अप इति कर्म नाम। तद्धितलोपः। अपस्विनः कर्मवतः। मनीषिणो मेधाविनः। यज्ञे कृण्वन्ति कुर्वन्ति। विदथेषु वेदनेषु यज्ञविधिविधानेषु धीरा धीमन्तः। यच्चापूर्वम्। न विद्यते पूर्वमिन्द्रियं यस्मात् तदपूर्वम्। यद्वा—अपूर्वमनपरम्। यच्च यक्षं पूज्यम्। यच्चान्तर्मध्ये प्रजानामास्ते। तन्मे मन इति व्याख्यतम्॥

महीधरभाष्यम्

मनीषिणो मेधाविनो यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कुर्वन्ति। 'कृञ् करणे' स्वादिः। मनःस्वास्थ्यं विना कर्माप्रवृत्तेः। केषु सत्सु? विदथेषु ज्ञानेषु सत्सु, विद्यन्ते ज्ञायन्ते तानि विदथानि तेषु। वेत्तेरौणादिकोऽथप्रत्ययः। प्रत्ययोदात्तत्वेन मध्योदात्तं पदम्—'प्रत्ययः। परश्च। आद्युदात्तश्च' (पा० ३।१।१–३) इति पाणिन्युक्तेः यज्ञसम्बन्धिनां हविरादिपदार्थाना ज्ञानेषु सत्स्वित्यर्थः। कीदृशा मनीषिणः? अपसः। अप इति कर्म नाम ( निघ० २।१।१ ) अपो विद्यते येषां ते मनस्विनः कर्मवन्तः। 'अस्मायामेधास्रजो विनिः' ( पा० ५।२।१२१ ) इति विन्प्रत्ययः। 'विन्मतोर्लुक्' इतीष्ठाभावेऽपि छान्दसो विनो लुक् ( पा०

५।३।६९ )। सदा कर्मनिष्ठा इत्यर्थः। तथा धीरा धीमन्तः, धीर्विद्यते येषा ते धोराः। 'कर्मण्यण्' (पा० ३।२।१)। यच्च मनः अपूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः। यद्वा अपूर्वमनपरमबाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः। यच्च यक्षं, यष्टुं शक्तं यक्षम्। यजतेरौणादिकः सन् प्रत्ययः। 'ञ्नित्यादिर्नित्यम्' (पा० ६।१।१७) इत्याद्युदात्तं पदम्। यच्च प्रजायन्त इति प्रजास्तासां प्राणिमात्राणामन्तः शरीरमध्य आस्ते। इतरेन्द्रियाणि बहिष्ठानि मनस्त्वन्तरिन्द्रियमित्यर्थः तत् तादृशं मे मनः शिवसङ्कल्पमस्त्विति व्याख्यातम्॥

## हिन्दीभाषान्तर

जिसके द्वारा कर्मनिष्ठ, मनीषी, धीर (जन) यज्ञ में कर्म करते हैं, जो प्रजाओं का अपूर्व आन्तर रहस्य है, मेरा वह मन शुभ संकल्पों वाला हो।

## टिप्पणियाँ

१. अपसः—अपस्+विन्-प्रत्ययः—'अस्मायामेधास्रजो विनिः' (पा० ५।२।१२१), 'विन्मतोर्लुक्' (पा० ५।३।६५)—विन् का छान्दस् लोप। कर्मनिष्ठ, कार्य में तत्पर रहने वाले।

२. कृण्वन्ति—कृ (स्वादि-करना)+लट्, प्र० पु०, ब० व०। करते हैं।

३. विदथ—यज्ञ—टिप्पणी देखिए, विश्वेदेवासूक्त मन्त्र ५, इन्द्र-सूक्त मन्त्र १९ में विदथ पर।

४. अपूर्वम्—न विद्यते पूर्वं यस्य तत्। जिसके पूर्व अन्य इन्द्रियों की सृष्टि नहीं हुई। अथवा अद्वितीय, आन्तर।

५. यक्षम्—यक्ष (पूजायाम्)+घञ्—'अकर्तरि च कारके संज्ञायाम्' (पा० ३।३।१९)। महीधर ने इसकी व्युत्पत्ति—यज्+सन्—औणादिक प्रत्यय—की है। पं० क्षेत्रेशचन्द्र चट्टोपाध्याय का मत है कि यक्ष शब्द का अर्थ रहस्य है। मनस् तत्त्व के विश्लेषक के लिए इसकी रहस्यमयता अपरिचित नहीं है।

यह मन्त्र पूर्वोक्त खिलसूक्त का दूसरा है॥ २॥

**यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु।**
**यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु॥३॥**

## उव्वटभाष्यम् ३

यत्प्रज्ञानम् । यन्मनः प्रज्ञानम् । विशेषप्रतिपत्तिः प्रज्ञानम् । उतापि च । चेतः । सामान्यप्रतिपत्तिः चेतः । धृतिश्च प्रसिद्धा । यन्मनोऽन्तर्ज्योतिरमृतं च प्रजासु । यस्मान्न ऋते येन च विना न किञ्चन कर्म क्रियते । तन्मे मम इति व्याख्यातम् ॥

## महीधरभाष्यम्

तत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् । प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् । 'करणाधिकरणयोश्च' ( पा० ३।३।११ ) इति करणे ल्युट्प्रत्ययः । उत अपि यत् मनः चेतः । चेतयति सम्यक् ज्ञापयति तच्चेतः । 'चिती सञ्ज्ञाने' अस्माण्ण्यन्तादसुन्प्रत्ययः । सामान्य-विशेष-ज्ञान-जनकमित्यर्थः । यच्च मनः धृतिर्धैर्यरूपम् । मनस्येव धैर्योत्पत्तेर्मनसि धैर्यमुपचर्यते कार्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् । उक्तमपि पुनरुच्यते आदरार्थम् । 'अभ्यासे भूयांसमर्थं मन्यन्ते' ( निरु० १।४२ ) इति यास्कोक्तेः । यच्चामृतममरणधर्मि आत्मरूपत्वात् । यस्मान्मनस ऋते, यन्मनो विना, किञ्चन किमपि कर्म न क्रियते जनैः । सर्वकर्मसु प्राणिनां मनःपूर्वं प्रवृत्तेर्मनः स्वास्थ्यं विना कर्माभावादित्यर्थः । 'अन्यारादितरर्ते' ' ( पा० २।३।२९ ) इत्यादिना यस्मादिति ऋते योगे पञ्चमी । तन्मे मन इति व्याख्यातम् ॥

## हिन्दीभाषान्तर

जो उत्तम ज्ञान, चित्त और धैर्य है, जो प्रजाओं का आन्तर अमृत प्रकाश है, जिसके बिना कोई कर्म नहीं किया जाता, मेरा वह मन शुभ संकल्पों वाला हो

## टिप्पणियाँ

प्रज्ञानम्—प्र + ज्ञा + ल्युट्—'करणाधिकरणयोश्च' ( पा० ३।३।११ ) विशेष ज्ञान, उत्कृष्ट ज्ञान । चेतः—'चिती (सञ्ज्ञाने)' + णिच् + असुन्–चित्त, सामान्य ज्ञान, चेतना ।

पूर्वोक्त खिलसूक्त—ऋ० ४।११।३—में यह मन्त्र उपलब्ध होता है ।

छन्द की दृष्टि से 'यस्मान्न ऋते' के स्थान पर 'यस्मान्नर्ते' पढ़ना चाहिए । 'कर्म' अधिक है ॥ ३ ॥

येनेदं भूतं भुवनं भविष्य-
त्परिगृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता
तन्मे मनः शिवसंङ्कल्पमस्तु ॥ ४ ॥

### उव्वटभाष्यम् ४

येनेदं । येन मनसा । इदं भूतं भूतकालं भुवनं वर्तमानकालं भविष्यद् भविष्यत्कालं च । परिगृहीतम् अमृतेन सर्वम् । येन च मनसा यज्ञस्तायते तन्यते । सप्तहोता । सप्तहोतारो ह्यग्निष्टोमे भवन्ति । तन्मे मन इति व्याख्यातम् ॥

### महीधरभाष्यम्

येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञातम् । इदं किम् ? भूतम् । भूतकालसम्बन्धि वस्तु । भुवनम् । भवतीति भुवनम् । भवतेः क्युप्रत्ययः । वर्तमानकालसम्बन्धि । भविष्यत् 'लटः सद्वा' ( पा० ३।३।१४ ) इति शतृ-प्रत्ययः, 'तौ सत्' ( पा० ३।२।१२७ ) इत्युक्तेः । त्रिकालसम्बद्धवस्तुषु मनः प्रवर्तत इत्यर्थः । श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन ? अमृतेन शाश्वतेन । मुक्तिपर्यन्तं श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिस्तायते विस्तार्यते 'तनोतेर्यकि' ( पा० ६।४।४४ ) इत्याकारः । कीदृशो यज्ञः । सप्तहोता, सप्तदेवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता । अग्निष्टोमे सप्त होतारो भवन्ति । तन्मे मन इति व्याख्यातम् ॥

### हिन्दीभाषान्तर

जिस अमृत (मन) के द्वारा यह भूत, वर्तमान, भविष्यत्—सब आकलित होता है, जिसके द्वारा सात होताओं वाला याग सम्पादित होता है, मेरा वह मन शुभ संकल्पों वाला हो ।

### टिप्पणियाँ

भुवनम्, भवतीति—भू + क्युः । तायते—तन् + यक् लट्, प्र० पु०, ए० व०—'तनोतेर्यकि' ( पा० ६।४।४४ ) से आकार । भविष्यत्—भू +

शतृ—'लटः सद्वा' (पा० ३।३।१४)। सप्तहोता—सप्त होतारो यस्मिन् सः—होतृ, पोतृ, मैत्रावरुण; ग्रावस्तुत्, ब्राह्मणाच्छसी, अच्छावाक्, अग्नीद्। सोमयागों में अनेक 'होता' रहते हैं।

पूर्वोक्त खिलसूक्त—ऋ० ४।११।१ में यह मन्त्र मिलता है ॥ ४ ॥

**यस्मि॒न्नृचः॒ साम॒ यजू॑ᳪंषि**
**यस्मि॑न् प्रति॑ष्ठिता रथना॒भावि॑वा॒राः**
**यस्मि॑ᳪंश्चि॒त्तᳪं सर्व॒मोतं॑ प्र॒जानां॑**
**तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु ॥ ५ ॥**

### उव्वटभाष्यम् ५

यस्मिन्नृचः यस्मिन् मनसि ऋचः प्रतिष्ठिताः। यस्मिन् सामानि प्रतिष्ठितानि। यस्मिन् यजूंषि प्रतिष्ठितानि। कथमिव ? रथनाभौ इव अराः यस्मिन् चित्तं सञ्ज्ञानं सर्वं तस्य तस्यार्थस्य। ओतं निक्षिप्तम्। तन्तुसन्ततिमिव कृतम्। प्रजानाम्। तन्मे मन इति व्याख्यातम् ॥

### महीधरभाष्यम्

यस्मिन् मनसि ऋचः प्रतिष्ठिताः। यस्मिन् साम सामानि प्रतिष्ठितानि। यस्मिन् यजूंषि प्रतिष्ठितानि। मनसः स्वास्थ्य एव वेदत्रयी स्फूर्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम्। 'अन्नमयं हि सोम्य मनः' इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता। तत्र दृष्टान्तः। रथानाभौ अरा इव। यथा अरा रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छन्दजालं मनसि। किञ्च प्रजानां सर्वं चित्तं ज्ञानं सर्वपदार्थविषयिज्ञानं यस्मिन् मनसि ओतं प्रोतं निक्षिप्तम्। तन्तुसन्ततिः पट इव सर्वं ज्ञानं मनसि निहितम्। मनः स्वास्थ्य एव ज्ञानोत्पत्तिर्मनोवैयग्र्ये च ज्ञानाभावः। तन्मे मनः शिवसङ्कल्पं शान्तव्यापारमस्तु ॥

### हिन्दीभाषान्तर

जिसमें ऋचाएँ, साम और यजुष् रथ के पुट्ठों में (लगे हुए) आरों के समान प्रतिष्ठित हैं, जिसमें सारे मनुष्यों का चित्त बिंधा हुआ है, मेरा वह मन शुभ संकल्पों वाला हो।

## टिप्पणियाँ

१. ओतम्—आ + वेञ् (तन्तुसन्ताने) + क्तः—बिंधा हुआ अथवा स्यूत।

२. यस्मिँश्सर्वम्–यजुर्वेद में श्, ष्, स्, र्, ह् के पूर्व आने वाले अनुस्वार का उच्चारण 'ग्वं' होता है। ग्वंश्या 'ँ' चिह्न से द्योतित किया जाता है।

यह मन्त्र पूर्वोक्त खिलसूक्त—ऋ० ४।११।५ में भी है॥ ५॥

सुषारथिरश्वानिव यन्मनुष्या-
न्नेनीयतेऽभीशुभिर्वाजिन इव।
हृत्प्रतिष्ठं यदजिरं जविष्ठं
तन्मे मनः शिवसङ्कल्पमस्तु॥ ६॥

### उव्वटभाष्यम् ६

सुषारथिः। यन्मनो मनुष्यान् नेनीयतेऽत्यर्थं नीयते। कथमिव। सुषारथिः कल्याणसारथिरश्वानिव यन्मनुष्यान्। यच्च मनः सुषारथिरिव। अभीशुभिः प्रग्रहै-र्वाजिन इव वेजनवतोऽश्वानिव। यमयतीति शेषः। द्वे उपमे। एकत्र नयनमन्यत्र नियमनमर्थः। यच्च हृत्प्रतिष्ठम्। तत्रोपलब्धेः। यच्च अजिरं जरारहितम्। यच्च जविष्ठमतिशयेन गन्तृ। तन्मे मनः शिवसङ्कल्पमस्तु॥

### महीधरभाष्यम्

यत् मनो मनुष्यान् नरान् नेनीयतेऽत्यर्थमितस्ततो नयति। नयतेः क्रिया-समभिहारे यङ्। मनःप्रेरिता एव प्राणिनः प्रवर्तन्ते। मनुष्यग्रहणं प्राणिमात्रो-पलक्षकम्। तत्र दृष्टान्तः। सुषारथिरश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान् नेनीयते। द्वितीयो दृष्टान्तः। अभीशुभिर्वाजिन इव, यथा सुसारथिरभी-शुभिः। प्रग्रहैर्वाजिनोऽश्वान् नेनीयत इत्यनुषङ्गः। रश्मिभिर्नियच्छतीत्यर्थः। उपमा-द्वयम्। प्रथमायां नयनं द्वितीयायां नियमनम्। तथा मनः प्रवर्तयति नियच्छति च नरानित्यर्थः। यच्च मनो हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत्। हृद्येव मन उपलभ्यते। यच्च मनोऽजिरं जरारहितम् बाल्ययौवनस्थविरेषु मनसस्तदवस्थ-त्वात्। यच्च जविष्ठम् अतिजववद्वेगवत् जविष्ठम् "न वै वातात् किञ्चनाशीयोऽस्ति, न मनसः किञ्चनाशीयोऽस्ति" इति श्रुतेः। तन्म इत्युक्तम्॥

## हिन्दीभाषान्तर

अच्छे सारथि के समान जो मन, घोड़ों के सदृश मनुष्यो को बार-बार ले जाता है; ( यथा ) बाग से घोड़ों—जैसे ( उन्हें नियन्त्रित करता है ) जो हृदय में अवस्थित है, जरारहित और अतिशय वेगवान् है, मेरा वह मन शुभ सङ्कल्पों वाला हो।

## टिप्पणियाँ

१. नेनीयते—नी + यङ् + लट्, प्र० पु०, ए० व०—पुनः पुनरतिशयेन वा नीयते, नेनीयते'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (पा० ३।१।२२)।

२. सुषारथिः—नामी स्वर के अनन्तर 'स्' को 'ष्' होता है। ऋ, ॠ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ नामी स्वर हैं—'ऋकारादयो दशनामिनः स्वराः'—१।६५ ऋ० प्रा०।

३. अभीषुभिः—ईषते, ईष्यते वा—ईष् ( गति अर्थ ) + उः ( उणा० १।१३ )—अभिगत इषुः—अभीषुः—यह शब्द तालव्यान्त भी है। डोरी, वल्गा, बाग, घोड़े की लगाम में लगी हुई डोरी।

४. वाजिनः—अवश्यं वजतीति—वज् ( गतौ ) + णिनिः—'आवश्यकाधमर्ण्योर्णिनिः' ( पा० ३।३।१७० )। वाजाः पक्षा अभूवन् यस्य—वाज + इनिः—'अत इनिठनौ' ( पा० ५।२।११५ )। वाजं बलमस्यास्तीति—वाज + इनिः। घोड़ा।

५. प्रतिष्ठम्—प्रति + स्था ( ष्ठा गतिनिवृत्तौ ) + कः—'आतश्चोपसर्गे' ( पा० ३।३।१३६ )। अवस्थित, भली भाँति स्थित।

६. जविष्ठम्— जु (सौत्र धातु, वेद और गति अर्थ में) + इष्ठन्—अतिशय वेग वाला, अतिशय गतिशील ॥ ६ ॥



अथर्ववेदसंहितायाम्

# पृथिवीसूक्तम्

## द्वादशकाण्डे प्रथमं सूक्तम्

[ अत्र द्वादश मंत्रा एव संगृहीताः ]

अथर्वा ऋषिः । भूमिः देवता । १,३ त्रिष्टुप् ; २ भुरिक् त्रिष्टुप् ; ४,५,१० षट्पदा जगती; ८, ११ षट्पदा विराडष्टिः; ९ परानुष्टुप् त्रिष्टुप् १२, १५ पञ्चपदा शक्करी; ४५ जगती ।

सत्यं बृहदृतमुग्रं दीक्षा तपो
ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्यु-
रुं लोकं पृथिवी नः कृणोतु ॥ १ ॥

### पदपाठः

सत्यम् । बृहत् । ऋतम् । उग्रम् । दीक्षा । तपः । ब्रह्म । यज्ञः । पृथिवीम् । धारयन्ति । सा । नः । भूतस्य । भव्यस्य । पत्नी । उरुम् । लोकम् । पृथिवी । नः । कृणोतु ॥ १ ॥

### हिन्दीभाषान्तर

सत्य, महत्ता, ऋत, बल, दीक्षा, ब्रह्म और यज्ञ पृथिवी को धारण करते हैं। भूत (और) भव्य की पत्नी वह पृथिवी हमारे लोक को हमारे लिए वरीयान् कर दे।

### टिप्पणियाँ

१. सत्यम्—दे० अग्निसूक्त, ५ टिप्पणी। बृहत्—बृह बृहौ वृद्धौ ( बर्हति, बृंहतीति वा बृहत् ) + कति, वर्तमाने पृषद् बृहन् महज् जगच् छतृवच्च, ( द० उ० ६-५; पं. उ. २-८४ ) से निपातन द्वारा; सि. कौ. २-२५० में इस सूत्र द्वारा अति प्रत्ययान्त बृहत् शब्द की सिद्धि की गयी है। नि. ३.३.४

में बृहत् महत् का पर्याय है। ब्लूमफील्ड बृहत् का अर्थ महत्ता करते हैं (से. बु. ई., भाग ४२, पृ. १९९)। ह्निटनी बृहत् को सत्य का विशेषण मानकर, बृहत्—सत्यम् का अर्थ—महान् सत्य—करते हैं (अ. सं., पृ० ५·६६०)॥ ऐ. ब्रा. ८. २ में बृहत् को ज्येष्ठ तथा श्रेष्ठ कहा गया है।

२. ऋतम्—ऋ (गतौ) + क्त, ऋत उस नियम को कहते हैं, जिससे ब्रह्माण्ड परिचालित है। ऋत का अर्थ नैतिक नियम भी होता है। अनुवर्ती काल में ऋत और सत्य पर्यायवाची हो गये। ऋत के लिए दे०, एनल्स आफ़ दि भाण्डारकर ओ. इंस्टीट्यूट, सिल्वर जुबिली अंक, पूना।

उग्रम्—उच् (समवाये) + रन्, ऋज्रेन्द्रा···(द. उ. ८.४६; पं. उ., २. ३१; सि. कौ. २.१९६; भा. दी., अ. को., १.१.३२. सा. ऋ. सं. १.७.४)। ध्यातव्य है कि द. उ. बृ. में—उद्गच्छतीत्युग्रः—उत् + गम् + रन,—उद्गिरतीत्युग्रः—उत् + गृ (निगरणे) + रन् व्युत्पत्ति मिलती है। वस्तुतः रन् प्रत्यय नहीं करना चाहिए, अपितु भद्र (सायण, ऋ. सं. १।१।६) के समान यहाँ भी रक् प्रत्यय ही करना चाहिए। उग्र और भद्र दोनों शब्द एक ही सूत्र—ऋज्रेन्द्रा··· से निपात द्वारा सिद्ध किये जाते हैं। दोनों शब्द अन्तोदात्त हैं। रन् प्रत्यय करने पर नित् होने के कारण 'ञ्नित्यादिर्नित्यम्' (पा० ६।१।१९७) से आद्युदात्त होगा। रन् प्रत्यय के कारण ही सायण को उग्र में व्यत्यय से अन्तोदात्त बताना पड़ा। जब निपातन ही से शब्दसिद्धि अभीष्ट है, तब चाहे रन् प्रत्यय किया जाय या रक्, कोई अन्तर नहीं पड़ने वाला है। रक् प्रत्यय करने पर उग्र की अन्तोदात्तता भी सिद्ध होती है। ब्लूमफ़ील्ड उग्र का अर्थ बल करते हैं। ह्निटनी के अनुसार उग्र ऋत का विशेषण है और इसका अर्थ है—घोर सत्य, प्रबल सत्य।

३. दीक्षा—दीक्ष (मौण्ड्येज्योपनयननियमव्रतादेशेषु—मुंडन, यज्ञ, उपनयन आदि के नियम तथा व्रत करने में) + अ + टाप्—दीक्षते। श. ब्रा. के अनुसार दीक्षावाचक परोक्ष शब्द 'धीक्षा' है, व्यवहार्य जगत् में उसे दीक्षा कहते हैं—

स वै धीक्षते। वाचे हि धीक्षते, यज्ञाय हि धीक्षते, यज्ञो हि वाक्, धीक्षितो ह वै नामैतद् यद् दीक्षितः। श. ब्रा, ३।२।२।३०।

अथ यद् धीक्षितो नाम वाचे वा एष एतद् धीक्षते, यज्ञा हि धीक्षते, यज्ञाय हि धीक्षते, यज्ञो हि वाक्, तस्माद् दीक्षितो नाम, धीक्षितो ह वै नामैतद् यद् दीक्षित इत्याहुः, काण्व, श. ब्रा. । श. ब्रा. के उपर्युक्त विवरण से स्पष्ट होता है धीक्षा शब्द धिक्ष धातु से बनता है। धिक्ष का अर्थ है—संदीपन, क्लेशन, जीवन। चन्नवीर कवि के अनुसार संदीपन का अर्थ क्षुधा, क्लेशन का श्रम है (का. कृ. धा. १.५०८)। ध्यातव्य है कि धातुपाठों में धिक्ष है, पर श. ब्रा. में धीक्ष।

गो. ५० में धी + क्षि व्युत्पत्ति है—कस्यस्विद् हेतोर्दीक्षित इत्याचक्षते, श्रेष्ठां धियतीति, ३।१९।

सोमयागों में होने वाली दीक्षणीय इष्टि के द्वारा यजमान का संस्कार और तदनन्तर सम्पूर्ण यज्ञ के समापन तक कतिपय विशेष नियमों के पालन को दीक्षा कहा गया है। दीक्षा के पूर्व यजमान में यज्ञ करने की योग्यता का अभाव रहता है। दीक्षा द्वारा वह यजमान यज्ञ करने की क्षमता प्राप्त करता है। यज्ञ में मनुष्य का नवीन जन्म होता है। दीक्षित होने का अर्थ है पुराने जीवन का—मानुष-जीवन का—समापन तथा नवीन जीवन—दिव्य जीवन, दैवी जीवन का—समारम्भ। इसी दृष्टि से दीक्षा में पहुँचने का अर्थ दैवी गर्भ में पहुँचना है।

गर्भो वा एष यद् दीक्षितः, तै. सं. ६।१।३; गर्भो दीक्षितः, का. सं. २३।२।६; रेतो दीक्षितः, गर्भो दीक्षितः, मै. सं. ३।६।१।७; गर्भो वा एष भवति यो दीक्षते, छन्दांसि प्रविशति; गर्भो दीक्षितः, श. ब्रा. ३।२।१।६, १।३।२८; देवगर्भो वा एष यद् दीक्षितः, कौ. ब्रा. ७।२; एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति, ऐ. ब्रा. १।३। आचार्य उपनयमानो ब्रह्मचारिणं कृणुते गर्भमन्त। तं रात्रीस्तिस्र उदरे बिभर्ति तं जातं द्रष्टुमभिसंयन्ति देवाः। अ. सं. ११।५।३॥

दीक्षा—गतजीवन का समापन—

य एतमेतद् दीक्षयन्ति तद् द्वितीयं म्रियते। वपन्ति केशश्मश्रूणि, निकृन्तति नखान्, प्रत्यञ्जन्त्यङ्गानि, प्रत्यञ्चन्त्यङ्गुलीः, अपवृतोऽपवेष्टित आस्ते, न जुहोति, न यजते, न योषितं चरति, अमानुषीं वाचं वदति, मृतस्य वा वैष तदा रूपं भवति, जै. उ. ३।९।४।

इसी दृष्टि से श. ब्रा. में पुरुष के तीन जन्म कहे गये हैं—माता-पिता से, यज्ञ से, मृत्यु के अनन्तर—त्रिर्ह वै पुरुषो जायते, एतन्नेव मातुश्चाधिपितुश्चाग्रे, अथ यं यज्ञ उपनमति, स यद् यजते तद् द्वितीयं जायते, अथ यत्र म्रियते यत्रैन-मग्नावभ्यादधति तत् तृतीयं जायते तस्मात् त्रिः पुरुषो जायत इत्याहुः। श. ब्रा. ११।२।१।१।

दीक्षा ग्रहण के बाद यज्ञ से उत्थान प्राप्त कर यजमान दैवी जीवन प्राप्त कर लेता है—देवान् या एष उपोत्क्रामति यो दीक्षते, देवान् वा एष उपावर्तते यो दीक्षते स देवानामेको भवति, उद्गृभ्णीते वा एषोऽस्माल्लोकाद् देवलोक मभि यो दीक्षते, श. ब्रा ३।१।१।१. ८।९, १।८।१; यदह दीक्षते विष्णुर्भवति, उभयं वा एषोऽत्र भवति यो दीक्षते विष्णुश्च यजमानश्च, श. ब्रा. ३।२।१।१७। यज्ञादु हवा एष पुनर्जायते यो दीक्षते, ऐ. ब्रा. ७।४।

वस्तुतः अनृत के धरातल से हटकर ऋत, सत्य की भूमि का अन्वेषण ही दीक्षा है। इष्टियो में इसे व्रतोपायन कहते हैं।—समिद्धतमेऽग्नौ ऋतमिद् वदेम, ऋ. सं; इदहमनृतात् सत्यमुपैमि, वा. सं. १।५। सत्ये ह्येव दीक्षा प्रतिष्ठिता भवति, श. ब्रा. १४।६।९।२४; ऋतं वाव दीक्षा सत्यं दीक्षा, ऐ. ब्रा. १।६। अथ यद् दीक्षितः अव्रत्यं वा व्याहरति क्रुध्यति वा तन् मिथ्या करोति, श. ब्रा. ३।२।२।२४। दीक्षितेन सत्यमेव वदितव्यम्, ऐ. ब्रा. १.६; स यः सत्यं वदति स दीक्षितः, कौ. ब्रा. ७।३।

४. तपः—तप् + अच् ( पचादि )। तप, तपस्या। ब्लूमफील्ड के अनुसार तप का अर्थ प्रजनन की इच्छा से उत्पन्न उत्ताप, गर्मी, उष्णता। ह्विटनी तप को तपस्या मानते हैं। तप का प्रजनन से बहुत घनिष्ठ सम्बन्ध है। प्रजापति सृष्टि करने की इच्छा से उत्तप्त होता है—प्रजापतिर्ह वा इदमग्र एक एवास, स ऐक्षत कथं नु प्रजायेयेति, सोऽश्राम्यत्, स तपोऽतप्यत सोऽग्नि मे मुखाज् जनयांचक्रे—श. ब्रा. २.२.४.१। प्रजापतिर्ह वा इदमग्र एक एवास'''स तपोऽतप्यत, स प्रजा असृजत, श. ब्रा. २.५.१.१। दे० श. ब्रा. १४.४.४.१-२, ११.१.६.१ आदि।

५. ब्रह्म—बृहि ( वृद्धौ, बृंहति, बृंह्यते वा ) + मनिन्, बृहेर्नोच ( द. उ. ६.७४, पं. ४.१४६, सि. कौ. ४.१४९ )। जिस तत्त्व का कथन वाक् न

कर सके, और जो वाक् को अभिव्यक्त करता है, वह ब्रह्म है—

यद् वाचानभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि—के० उ० १.०, दे० १.१—९।

६. यज्ञः—यज (देवपूजासङ्गतिकरणदानेषु—देवपूजा, देवसंगतिकरण, देव-दान)+नङ्, यज याच यत विच्छ प्रच्छ रक्षो नङ् (पा. ३.३.९०)। पृथिवीम्—पृथिवी को। धारयन्ति—धृ (धारण करना)+लट्, ब. व. धारण करते हैं।

भूतस्य—भू (सत्तायाम्, सत्ता, अस्तित्व)+क्त, भूत का अर्थ है सत्ता अथवा अस्तित्व में आगत। पुरुषसूक्त में पुरुष को भूत और भव्य कहा गया है—पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम्, ऋ. सं. १०.९०.२। अ. सं. में भूत और भव्य स्कम्भ (ब्रह्म) में स्थित बताये गये हैं—भूतं च यत्र भव्यं च सर्वे लोकाः प्रतिष्ठिताः, १०.७.२२ (अन्यत्र भूत और भव्य तथा काल के पुत्र कहे गये हैं—कालो ह भूतं भव्यं च पुत्रो अजनयत् पुरा, अ. सं. १९.५४.३)। तां. ब्रा. की दृष्टि में संवत्सर में भूत और भव्य दोनो स्थित हैं। संवत्सरेऽन्तर्भूतं च भव्यं च, १८।१०।७, तु., जे. सी. हीस्टरमान, एंशियेंट इंडियन रायल कान्सक्रेशन, हेग, १९५७, ५.१८६ आदि। वस्तुतः पुरुष, भूत-भव्य, स्कंभ, काल और संवत्सर इन सबसें कोई अन्तर नहीं। जो अन्तर आभासित होता है, वह आभासमात्र है, यथार्थ नहीं। पृथिवी इन सबकी शक्ति के रूप में प्रतिपादित है। नासदीय सूक्त में वर्णित 'स्वधा'—आनीदवातं स्वधया तदेकम्, ऋ. सं. १०.१२९.२—अनेकविध स्त्रीवाचक पदार्थों का मूल है। इस स्वधा (अपने आपको धारण करने का सामर्थ्य, स्वशक्ति, स्वमहिमा) से गतिशील प्राण ही प्रजापति, पुरुष आदि का आदि बीज है। इसी दृष्टि से प्रजापति 'भूतस्य'—उत्पन्न समस्त पदार्थ—'पतिः' (रक्षक, व्याप्त करने वाला) है (ऋ. सं. १०.१२१.१) और अग्नि भूतपति (श. ब्रा. ६.१.३.८)। अग्नि और प्रजापति गायत्र हैं, पृथ्वी गायत्री। प्रजापति की प्रतिष्ठा होकर यह भूमि बनी, प्रजापति ने इसके भूमि रूप को प्रथित किया, अतएव इसका नाम पृथ्वी है। अग्नि और पृथ्वी का मिथुनभाव प्रख्यात है (श.ब्रा. ६.१.१-२)। प्रजापति अग्नि को अनेक स्थानों पर संवत्सर के साथ समीकृत किया गया है। इसी दृष्टि से यहाँ पृथ्वी को भूत और भव्य की पत्नी के रूप में उपस्थित किया गया है।

